॥ श्रीः ॥

# काव्यमाला

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-

च्छन्दोलंकारादिसाहित्यग्रन्थानां

संग्रहः ।

---

## तृतीयो गुच्छकः ।

---

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-

दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-

पाण्डुरङ्गात्मजकाशिनाथशर्मणा च

संशोधितः ।

---

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा

प्राकाश्यं नीतः ।

---

१८८७

---



---

मूल्यमेको रूप्यकः ।

ते मौ... णिटीका), (२) ...) मिथ्या ... अवस ... ॥ ४ ॥

# अनुक्रमणिका ।





# काव्यमाला।

महोपाध्यायश्रीगोकुलनाथविरचितं

## शिवशतकम्।

विततविविधसंप्रदायशाखाव्यतिकरवेष्टितमूर्तये नमोऽस्तु।
बहुतरजगदण्डबीजप्रसवफलेग्रहिपादपाय तुभ्यम्॥ १॥
न धरणिसलिलानला न वायुर्न खमत एव न खानि नापि वर्ष्म।
न समयककुभौ न चिन्न चित्तं पुरुषपुरंदर पूरुषस्तवास्मि॥ २॥
अविरतपरिवृत्तदण्डकाष्ठाकुलमतुलव्यतिवर्तमानवेगम्।
भ्रमयसि जगदण्डगोलमालाकलशकलापकुलाल कालचक्रम्॥ ३॥
भुवनपुटकुटीरहट्टयन्त्रभ्रमणमहध्रुवतर्कुतः क्रमेण।
सृजसि समयसूत्रमत्र मायामयपटवानविधानतन्तुवायः॥ ४॥
निगमवनवनस्पते प्रसूते कति जगदण्डमयान्युदुम्बराणि।
दधति बहलजन्तुजालमन्तः पुनरपि तानि लयं त्वयि प्रयान्ति॥ ५॥
बहुतरजगदण्डभारभर्तुर्नहि महिमानमहं तवावयामि।
मशक इव शलाटुगर्भजन्मा विटपबृहत्त्वमुदुम्बरद्रुमस्य॥ ६॥
प्रविशति मम चित्तवेश्म सर्वेन्द्रियविकलः श्रुतिशिष्यमाणवर्त्मा।
विधिगृहतिलबिन्दुजालवर्ही गलितवपुः प्रपितामहः प्रजानाम्॥ ७॥
विगलितवपुषं विकारवार्तारहितमनिन्द्रियमक्रियं पुराणम्।
त्वमसि तदिति चेतनाविशेषं निजपितरं निगमाः प्रबोधयन्ति॥ ८॥

---

१. अयं पण्डितः ख्रिस्तसंवत्सरीयवर्तमानशतकप्रारम्भ एव बभूवेत्येके; पूर्वशतकपूर्वार्ध इत्यन्ये; किं तु पादोनवर्षशतद्वयात्प्राचीन. अयं च मिथिलादेशान्तर्वर्तिनि 'मगरौनी'संज्ञकग्रामे विद्यानिधिपीताम्बरपण्डिताज्जन्म लेभे इति मैथिलाः. अद्यावधि ज्ञाता एतत्कृता ग्रन्थास्त्वेते—(१) दीधितिविद्योतः (शिरोमणिटीका), (२) न्यायसिद्धान्ततत्त्वम्, (३) पदवाक्यरत्नाकरः, (४) मांसमीमांसा, (५) मिथ्या
(६) रश्मिचक्रम् (चिन्तामणिटीका), (७) रसमहार्णवः,
(८) शिवशतकम्. [illegible] ॥ ५ ॥

जगदिदमुपदीपयत्यविद्यातिमिररिपौ त्वयि न स्वमप्यवैमि ।
प्रतपति तपनातपे तपता भजते यदान्ध्यमसावुलूकलोकः ॥ ९ ॥
विषमनिगमकाननान्तशाखाततिषु निलीय परान्निरीक्षमाणः ।
परिणतिविदलज्जगत्कपित्थग्रसनकपे सुचिरान्निरूपितोऽसि ॥ १० ॥
सकलमपि मया स्वकर्मबीजं त्वयि वृषवाह समर्पयांबभूवे ।
तव मम च न चेत्फलं प्रसूतं कथमधुनाप्यहमेव दोषभूमिः ॥ ११ ॥
नट इव वशगो भवामि यामामहमपहस्तितसर्वभूतपूर्वः ।
प्रकृतिचरितनाट्यसूत्रधार भ्रमयसि मामियतीषु भूमिकासु ॥ १२ ॥
भवदभिरुचितासु मे क्रियासु व्यवहरतोऽनुदिनं हिताहितासु ।
जननिधनबन्धमोचनेषु प्रभुरसि भूतपते तवास्मि दासः ॥ १३ ॥
भवदभिमतमेव सेवमानो हितमहितं च त्वया वृथास्मि बद्धः ।
तदपि कतममाश्रये शरण्यं बत परवानितरः पतिस्त्वमेव ॥ १४ ॥
वरमुपहसनीयवर्णकोऽयं विविधविकारविडम्बितस्वरूपः ।
तदपि कृतकहासमात्रहेतोर्विरम निवारय निःसहोऽस्मि मायाम् ॥ १५ ॥
क्व जगति कतमाद्धि कस्य हेतोरहमिह बद्ध इति त्वमेव वेत्थ ।
त्वमपि यदि न चेतये न च त्वां मम करुणामय तत्र कोऽपराधः ॥ १६ ॥
अविदितगतिना प्रमादनिद्रामुषितमतिः कितव त्वयास्मि बद्धः
कथमपि मम दृष्टिवर्त्मवर्ती भव पथतस्करबन्धने प्रभुः स्याः ॥ १७ ॥
बहुविधभवभूमिकाभिराभिर्नटयसि नाथ यथा तथा नटामि ।
कृपण गमयिता भवानविद्याजवनिकयान्तरितः कियन्त्यहानि ॥ १८ ॥
वपसि विगतभोगभाग्य दूरान्मयि वृषवाह तवाहमुर्वरास्मि ।
स्वपदमुपदधामि यत्र तस्मिन्भवति कडङ्कर एव कर्मबीजम् ॥ १९ ॥
प्रभवति मतये पदप्रबन्धो न तव निरत्यय नित्यचेतनस्य ।
ति करुणा सतो(?) पुरारे मम कृपणैः परिदेवितप्रपञ्चैः ॥ २० ॥
न भोक्तुमीहे हर मम शम्बलसंचयं गृहाण ।
गन्त्राश्रमसमनं भवव्रत्मनोऽवसानम् ॥ २१ ॥

म भवपथिकस्य कर्म भोग्यं प्रलयनिशि त्वमवेक्षथाः शयालोः ।
यि सकलमकिंचनो बुभूषुः प्रहरकवेतनमेतदर्पयामि ॥ २२ ॥
ुतिजनक रटत्यसौ कुमारी तव दुहिता बहिरेत्य नेति नेति ।
व्यवहित निकटस्थितेऽपि तस्मात्त्वयि मिलितेऽपि ममार्तितेथः क भोगः ॥२३॥
अपरिमितविभागभूमिरेकस्त्वमसि ततो जगदण्डबिन्दुरासीत् ।
ति भुवनभरैकधुर्य जाने दश ककुभो गणितक्रमेण सिद्धाः ॥ २४ ॥
यय क इव दिग्विपर्ययेऽपि प्रभवति गन्तुमतः क संसरेयम् ।
व भवपथिकस्य कोऽप्यपूर्वस्त्वमहमिति प्रसृतो मम प्रमोहः ॥ २५ ॥
यि परमविभो विशुद्धसत्त्वे यदिह शरीरतदात्मतामधासीः ।
निगमपुरुष तत्प्रतिक्रियायै त्वयि निदधामि समस्तवस्त्वभेदम् ॥ २६ ॥
निबिडजडतदात्मताप्रमोहं विमलयति त्वदभेदविभ्रमो माम् ।
कृतिमुपनयन्ति वारिधानीं कतकरजांसि रजोन्तरापकर्षात् ॥ २७ ॥
रि पुरि विहरामहे भ्रमन्तः पुरहर पश्यसि भोगवञ्चितोऽस्मान् ।
किमिति न विहरेम नाथवन्तो वयमितरे त्वमनाथ एक एव ॥ २८ ॥
स्वपिषि न परकर्मसु प्रसक्तः परमुपभोजयतस्तव क भोगः ।
परचरितमवैषि निर्निमेषः प्रकृतिदरिद्र न कोऽपि पश्यति त्वाम् ॥ २९ ॥
प्रकृतिचटुले सूक्ष्मभूतशेषे प्रकृतिविकारनिकोचभाजि काले ।
अविरतपरिवृत्तिखेदखिन्ने स्वपिति जने प्रतिबुध्यसे त्वमेकः ॥ ३० ॥
प्रलयदहनदग्धशेषपीलुप्रकरशिलोञ्छपवित्रवृत्तिरादौ ।
घटयसि भुवनानि तेषु जीवप्रकृतिचलैः परमाणुभिः शरीरम् ॥ ३१ ॥
जनशरण शरीरिणां प्रवृत्तैः करणगणैरुपलभ्यचेतनानाम् ।
कतिचन जनुरन्तरानुभूतिप्रसृमरवासनया स्मृतीः प्रसूषे ॥ ३२ ॥
अतिशयितविबुद्धवत्पुराणः स्मरति मुनिर्निगमं हिरण्यगर्भः ।
गगनपवनसंनिपातकर्ता कथमसि वा करुणानपेक्ष एव ॥ ३३ ॥
अथ कृतककलेवरद्वयेन व्यवहरता च निदेशदायिना च । ४ ।
अवगमितवदप्रवृत्तिमादौ कवयसि लोकहिताय संप्रदाय... । ४ ॥

हितविधिकपटान्निसर्गमूढप्रकृतिरसावहितान्निवर्तनीयः ।
इति विषमतमेऽपि संविधाने गणयतु कस्तव नाथ कौशलानि ॥ ३५ ॥
भवतु विधिरपूर्वकार्मतत्त्वाशयाहितसाधनताभिधासु कश्चित् ।
तदपि मुषितदोषमन्तरा त्वां न भवितुमर्हति चोदना प्रमाणम् ॥ ३६ ॥
प्रभवति परमाप्तयो दुरन्तादपमरणाय हिते प्रवर्तनाय ।
सह चरति चतुर्भिरर्थवादैर्निगमकवे स तवैव सूक्तसारः ॥ ३७ ॥
अजिनमुसलवेदियूपशम्याटषदुपलस्फ्यहविःकपालशूर्पैः ।
अथ गुरुयजमानगातृहोतृप्रभृतिभिरध्वरकर्मसु त्वमिज्यः ॥ ३८ ॥
विकिरति परितो घनावलीव श्रुतिरमृतानि तवाशयादुदस्य ।
विलयमयमुपैति चित्समुद्र त्वयि जगतो निगमस्य चित्प्रवाहः ॥ ३९ ॥
अभिसरति परं परं पुरारे विषयमनक्रमपास्य पूर्वपूर्वम् ।
वरुणनिलयमापगेव यावद्व्रजति भवन्तममौ न चित्तवृत्तिः ॥ ४० ॥
गुणगणमपनीय चित्तकूपे मम निगमैः सहसा निपातितोऽसि ।
अमृतकलश तिष्ठ तिष्ठ मन्ये पुनरपि जीवनमुद्धरिष्यमे नः ॥ ४१ ॥
प्रथमसमयसंगमाय नैतज्जगदुपजीवति केवलं भवन्तम् ।
भवतु सततसन्तमन्तरा त्वां कथमनिदंप्रथमापि वस्तुसत्ता ॥ ४२ ॥
प्रवहपवनवेगघट्टितोऽपि स्खलति न यज्जगदण्डपिण्डभारः ।
लघुगुरुतुलनातुलाप्रकाण्ड द्रढिमगुणः स भवद्गुणत्रयस्य ॥ ४३ ॥
त्वमखिलजगदीश षड्भिरङ्गैरुपचितवेदमजीजनः षडङ्गम् ।
कथय कथमसावुपैत्वसत्तां सततमतो भवतः स्वतः प्रपञ्चः ॥ ४४ ॥
विशकलितमनुव्रजन्नचिन्त्य स्थपतिरिव त्वमजीघटः प्रपञ्चम् ।
विभुरसि न च युज्यसे विकारैस्त्वयि समवैतु कथं स भूतसर्गः ॥ ४५ ॥
न जगदिदमहेतुतो न शून्यादवधिमतां कथमुद्भवोऽस्त्वकस्मात् ।
प्रकृतिरियमधर्मधर्मरूपा पुरुषगुणः कथमारभेत विश्वम् ॥ ४६ ॥
स्वपरपरिचयाहि यहेतुमेतं शिव भवदावरणीयमन्धकारम् ।
शमयति कात्राश्रमस्दुरन्दाम्बुद भवदेकपदा विवेकविद्युत् ॥ ४७ ॥

स्मरसि कथमनन्यदेव वृत्तां प्रभवकथाविधुरां निजामवस्थाम् ।
पुनरपि न चिराज्जनार्दन त्वां न परिचारिष्यति चेतनो द्वितीयः ॥ ४८॥
निमिषपरिचितो हरे समूलं हरामि विशेषगुणव्रजं परस्य ।
प्रथयामि खलतामिमामपूर्वां कथयामि यद्विगुणत्वमात्मनोऽपि ॥ ४९ ॥
अलमवगलितेन्द्रियप्रवृत्तेस्तव जरतः पुरुषस्य जागरेण ।
अयमहमधुना प्रबुद्ध्यमानः पुरुषविकारकरीं निहन्मि मायाम् ॥ ५० ॥
अमकृदनटदम्बिता नटी मे निहितपदा मशके मतङ्गजे च ।
ध्रुवमुपरि तवाधिरोक्ष्यतीयं भव महतोऽपि महानणोरणीयान् ॥ ५१ ॥
विलयमुपजगाम चेदखण्डस्त्वयि जरठो जगदण्डगुल्मपिण्डः ।
क्षपयामि तदपि क्षपामनिद्रः कतिभिरसौ हि बुभूषति प्ररोहैः ॥ ५२ ॥
विकिरति परदृष्टिवञ्चनाय त्वदुपरि विष्टपमर्षणानविद्या ।
तदपि निमिषमात्रनिर्गतोऽपि प्रविशति भूतगणो भवन्तमेव ॥ ५३ ॥
अमकृद्परमद्रिरङ्गभेदैर्नटगणनिष्क्रमणाद्विविक्तरङ्गः ।
अविदितमुखमंधिरामुखान्तो निगमकवेस्तव नाटकप्रबन्धः ॥ ५४ ॥
भ्रमयमि जगतस्त्वमेव मंज्ञापरिचयमंस्कृतिरूपवेदनाभिः ।
सदमदतदपोढवस्तुचिन्ताकृतिरिति कल्पयसे विवेकवंद्यम् ॥ ५५ ॥
त्वममृत विषयप्रवेशभूमौ भवसि दृशः पथि यस्य स द्वितीयम् ।
जगति न परिपश्यति स्म जिह्मा स्मरहर दृष्टिविषाधिका गतिस्ते ॥ ५६ ॥
द्रुहिणभवनपद्मवीजमालामणिपरिवर्तनतत्परात्मनस्ते ।
प्रमितुमखिलमेव जन्तुजातं विजनयतो विदिता बिडालवृत्तिः ॥५७॥
अपरिमितकृतेर्निराश्रयस्य भ्रमरहितस्य निरस्तचेष्टितस्य ।
दृषदुदरदरीषु दर्दुराणां घटनपटोस्तव कीदृशं शरीरम् ॥ ५८ ॥
भुवनभवनभासनप्रदीप न्यपतदसौ त्वयि चेतनापतङ्गी ।
क्षणमधिकमदीप्यत ज्वलन्ती पुनरजहात्प्रथमामपि स्वमत्ताम् ॥ ५९ ॥
ध्रुवमियमपवर्गरात्रिसंध्या भवति यतस्त्वयि निर्भरोऽनुरागः ।
रुचिमय चरमोऽयमञ्जलिस्ते ननु नचिराद्गमिता भवाद्भवा... ॥ ६० ॥

यदपि तव वशो ममेन्द्रियाणि श्रुतिविषयावधिवर्तमानदृष्टेः ।
सुखमसि जगतस्तथापि नाथ श्रुतिमुकुरेण विना न वेदितासे ॥ ६१ ॥
मतिधनमितरे मुर्दीर्घनिद्राप्रवणधियस्त्वयि निक्षिपन्त्यतन्त्रे ।
उपहरणसुसंचितो न जातु व्ययमुपगच्छति चेतनानिधिस्ते ॥ ६२ ॥
क्वचिदपि विषमे त्वया नियुज्य स्थितिमनवाप्य चिरस्य संसरामि ।
भवगिरिसरिदस्मि चित्समुद्र स्वमपि जहामि तदा लभे यदि त्वाम् ॥ ६३ ॥
भगवति नियते विदूरयात्रामह.... संमरणाध्वनोऽयमन्तः ।
जरति विरम निःसहामि संविन्नगरमतःपरमद्वयोपभोग्यम् ॥ ६४ ॥
विलिखतु कथमक्षराणि भाले स विधिरदृष्टपदावलेखदक्षः ।
मम हि मिलितमक्षपादपादप्रणिपतनेन ललाटसीम्नि चक्षुः ॥ ६५ ॥
उडुनि मयि रवे प्रकाशलेशं व्यवधिवशादपरीक्षितो न्यधामीः ।
तमपहरसि संनिकर्षमेत्य त्वदुपरि तर्हि निजं वपुस्त्यजामि ॥ ६६ ॥
भवपथपथिकोऽस्मि वाटपाटच्चर मिलितोऽसि विलुण्ठ्य संपदो मे ।
अहमपि भवदन्तरं प्रविश्य ध्रुवमचिरेण हरामि ते विभूतीः ॥ ६७ ॥
श्रुतिरसि पुरुषार्थसंनिबद्धस्तव चरमे प्रथमे विरौमि वत्सः ।
अमरगवि स दोग्धि कस्य हेतोरमृतमभोक्तरि पूतिभाजि भाण्डे ॥ ६८ ॥
शिव तव मम चान्तरालभूमौ विविधविधां व्यवधां व्यधाद्विधाता ।
तदपि हि भवतोऽहमेव भित्तिर्भवति वृतिः सदनस्य नाजिरस्य ॥ ६९ ॥
व्यवधिरुपरराम भूर्विभक्ता प्रभवसि गूढमतिर्न मां प्रहर्तुम् ।
तदहमहमिकाद्देकशेषावधिरधुना ध्रुवमावयोर्विमर्दः ॥ ७० ॥
न धरणिरुपरि प्रयाति नाधः पतति न च प्लवते न बम्भ्रमीति ।
न च दिवि वसति स्वशक्तियोगादपि तु भवानचलास्थिरत्वहेतुः ॥ ७१ ॥
अविषमचतुरस्रषड्विभागां न सृजसि कन्दुकनिस्तलां न सूषे ।
घटयसि पृथिवीमिमां स्वचक्रभ्रमणकुलाल विशालदर्पणाभाम् ॥ ७२ ॥
पुरहर परडिण्डिमेश्वरान्त्यै कति जगदण्डकगण्डकान्बिभर्षि ।
त्वदुपरि परगन्त्राश्रमन्ते प्रोष्टि विरहति सर्वमकिंचना भवन्ति ॥ ७३ ॥

परपुरमभिविश्य सर्वलोकं भ्रमयसि सर्वदिनेषु भूतवर्गः ।
भवपितृवनवाटबोधिवृक्ष प्रलयनिशासु निलीय सेवते त्वाम् ॥ ७४ ॥
ग्रहगृहसरसीरुहस्य राहुभ्रमरविमर्दसहार्ककर्णिकस्य ।
भ्रमणमिदमभिव्यनक्ति लीलां तव घटितां ध्रुवनालघट्टनाय ॥ ७५ ॥
सकलगुणगणो ममोर्णनाभेर्विलयमुपैति वितायते च भूयः ।
पटुजनजडतापहारहेतोः क्षणमपि न क्षममी क्षयं गुणानाम् ॥ ७६ ॥
न खलु विघटिताः पुनर्घटन्ते न च घटिताः स्थिरसंङ्गतां श्रयन्ते ।
पिपतिषुमवशं रुजन्ति वंश्यास्तटतरुमाप इवापगाणकस्य(?) ॥ ७७ ॥
विगतविपरिलोपदृष्टि पश्यन्वशयसि यां पुरुषप्रकाण्ड मायाम् ।
प्रकृतिचपलया तया विकारैर्बहुविधवर्णिकया वशीकृतोऽस्मि ॥ ७८ ॥
प्रकृतिचपलपीलुबीजवर्गं दलति खगोलकुशूलविप्रकीर्णम् ।
अघटितमितरेतरेण कल्पक्षयरजनौ समर्चाकलस्त्वमेकः ॥ ७९ ॥
खपुटपटलमभ्यजीयदाशान्तिगदलान्निरवाद्रविप्रदीपः ।
प्रलयमवनिवास्त्वगात्तथापि क्व जगदगारगृहस्थ निश्यवात्सीः ॥ ८० ॥
प्रसरति विषयेषु येषु रागः परिणमते विरतेषु तेषु शोकः ।
त्वयि रुचिरुचिता नितान्तकान्ते गुणपरिपाकशुचामगोचरोऽसि ॥ ८१ ॥
प्रतिगृहमतिथिर्गृहीतदण्डो धृतजगदण्डकमण्डलुप्रकाण्डः ।
भुवनवहन पात्रमात्रशेषं सतृणमिदं जगदत्ति कालभिक्षुः ॥ ८२ ॥
प्रसभनिविशमानकालसर्पप्रतिहतनिर्गमने खगोलनीडे ।
बहुविधगतयो विविक्तजायासुतजननीतनवः खगा भ्रमन्ति ॥ ८३ ॥
अभिलषितमथानुचिन्तितं यो हृदयगुहाशयितः शृणोत्यकर्णः ।
तमिममवचनं च वाग्मिता न प्रभवति मन्त्रयितुं त्रयीभुजंगम् ॥ ८४ ॥
परिपिबति पयो भवाध्वनीनस्तनयकराञ्जननीपयोधराच्च ।
व्यपगतमधुना तदाशयापि प्रसभवशादयमाशयः शुशोष ॥ ८५ ॥
स्तनकलशमुखेन वा जनन्यास्तनयकराङ्गुलिमध्यकुल्यया च ।
चपल पिब पयांसि यावदायुर्भवति न चेतसि चेतनासमर्थः ॥ ८६ ॥

विधिवशमिलितो भवाध्वयात्रां हरसि जगत्तिलपेषतैलिकोऽसि ।
न तव पशुपते विदन्ति पाशं पिहितदृशः पशवः परिभ्रमन्ति ॥ ८७ ॥
भुवि फलकधिया त्वया कियन्त्यः प्रतिकृतयो लिखितास्तथा विलुप्ताः ।
विरम बत निसर्गनिर्मलस्य प्रमृज रजो मम पश्य दर्पणोऽस्मि ॥ ८८ ॥
क्षितिबिलपतितं जरायुपर्णास्थगितमथाण्डसमुद्गके निगूढम् ।
अविवृतमपि धातुसंचयं तं भव भवता हृतविग्रहो हरामि ॥ ८९ ॥
परिमित[सुखदं] कषायपाकं विरसतरं विषयान्तरं विहाय ।
निरवधिमधुरे मम समन्तात्त्वयि पुरुषोत्तम विश्रमोऽस्तु वाचाम् ॥ ९० ॥
अपगतपदपाटवोऽपि गर्भादुपनिषदामधुनोत्थितः प्रबन्धः ।
जनयतु तव कौतुकं कलेन प्रतिपदविस्खलितेन जल्पितेन ॥ ९१ ॥
प्रकृतिमलिनमृक्षचर्मलक्षाचयचितमम्बरचीवरं वसानम् ।
प्रकटितबृहदण्डमत्रपं त्वां पुरुषमुदीक्ष्य हसामि नोल्लसामि ॥ ९२ ॥
व्यरमदवमरः स यत्र कर्मप्रकरमकार्षममर्त्यलेह्यलोभात् ।
न पुनरपि पिबामि सोमपात्रामृतदधि राहुबिडालपीतशेषम् ॥ ९३ ॥
स्वयमयमवलेढि होतृराज्यं तदनु तमाशयते सुधाम्बुबिन्दून् ।
अजनि तु जननीपयस्तृषार्तिक्षयमवमुञ्चति याज्ययज्यवर्गः ॥ ९४ ॥
भ्रमयसि नवधा स्वमण्डलानि द्रढयसि सप्तपुटानि भूतधात्र्याः ।
उपदिशसि च षड्गतीर्ग्रहाणां ध्रुवमसि तद्भवयोरपि ध्रुवस्त्वम् ॥ ९५ ॥
गुणमपि तव निर्गुणत्वपक्षे भ्रमयति दोषकुलाकुलं प्रबन्धः ।
मलिनयति नवेन्दुसुन्दराणि स्फटिकशिलाशकलानि काचसङ्गः ॥ ९६ ॥
किमपि निविशति प्रकाशराशौ त्वयि यमुनेव रवौ विशाविवाङ्कः ।
असिततनु चतुर्भुजस्वरूपं यदरतरा(?) हृदयं हरन्ति वामाः ॥ ९७ ॥
इदमपरपुरं तदेव यस्मिन्नमलवहन्निरगान्निशि प्रविश्य ।
विगलितवरणार्द्रबर्हिर्विहीनात्कथमधुना सदनादितो निरीयाम् ॥ ९८ ॥
यदभिलषसि पुद्गलानजीवासुरवरनिर्जरजीवबन्धमोक्षान् ।
नयसि च यदनाप्त्यन्विकङ्गमत्यतिमतस्तदुपास्यसे जिनेन्द्रः ॥ ९९ ॥

प्रकृतिरियमनश्वरस्वरूपा सृजति महान्तमसौ यतो विकारम् ।
अविकृतमपि पश्यतः सतस्ते सह रमते ह्यनया सखा त्वदीयः ॥ १०० ॥
यदि मम सहसा तवाभिसारात्कुलगुरुभिर्निगमैर्निवारितासौ ।
स्वयमभिसर तर्हि वाचमेनां परपुरुषं निगमो न पश्यति त्वाम् ॥ १०१ ॥
मम वचनजलानि कर्णशुक्तौ तव पतितानि गतानि मौक्तिकत्वम् ।
विगुणविलुलितानि लाजबुद्ध्या रसयतु कुण्डलकुण्डलिप्रकाण्डम् ॥ १०२ ॥
अपटुभिरभिधाभिरीप्सितार्थानुद्भावनभिमतानपि बोधयद्भिरर्थान् ।
पुरमथन पराहतैरमीभिः कथय कदा विहसिष्यामि प्रलापैः ॥ १०३ ॥
न तव पुरि शिलादपुत्रवेत्रप्रततिनिरुद्धतया लभे प्रवेशम् ।
शिवसहचरि गौरि गोपुरेभ्यो बहिरुपविश्य नमामि नौमि च त्वाम् ॥ १०४ ॥
न दहति मगगान्वयं न पादात्प्रभवति नाप्यलिकादुदेति चक्षुः ।
न च किमपि शृणोति नेत्रवर्गो मम कथमस्तु तव स्तवेऽधिकारः ॥ १०५ ॥

इति महोपाध्यायश्रीगोकुलनाथविरचितं शिवशतकम् ।

## पञ्चस्तवी ।

### लघुस्तवः ।

ऐन्द्रस्येव शरासनस्य दधती मध्येललाटं प्रभां
शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्वतः ।
एषासौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहःस्थिता
छिन्द्यान्नः सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥ १ ॥

१. दृष्टेषु बहुष्वपि पञ्चस्तवीपुस्तकेषु रचयितुः कवेर्नाम न प्राप्तम्. किं तु प्राचीनोऽयं कश्चन कविवरः, यतः सरस्वतीकण्ठाभरणे पञ्चमपरिच्छेदे अत्रत्यतृतीयस्तवस्य 'लक्ष्मीवशीकरणचूर्णसहोदराणि' इत्यादि श्लोको भोजराजेनोदाहृतः. अथ च तृतीयस्तवस्य एव 'आनन्दमन्थरपुरंदरमुक्तमाल्यम्' इत्यादि श्लोकः कुवलयानन्दे संसृष्टिप्रकरणे, अस्यैव श्लोकस्य 'पादाम्बुजं भवतु मे विजयाय मञ्जु-' इत्याद्युत्तरार्धं काव्यप्रकाशे दशमोल्लासे च वर्तते. लघुस्तवनाम्नः प्रथमस्तवस्य द्वित्राष्टीका अपि समुपलभ्यन्ते, ताश्च सर्वा अपि तन्त्रशास्त्रानुसारिण्य इत्यनुपयुक्ता इत्यस्माभिर्न गृहीताः. तत्रैको नित्यानन्दनामा लघुस्तवटीकाकारः 'लघुस्तवकर्ता धर्माचार्यः' इति वदति.

या मात्रा त्रपुसीलतातनुलसत्तन्तुस्थितिस्पर्धिनी
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् ।
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमा
ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥ २ ॥

दृष्ट्वा संभ्रमकारि वस्तु सहसा ऐ ऐ इति व्याहृतं
येनाकूतवशादपीह वरदे बिन्दुं विनाप्यक्षरम् ।
तस्यापि ध्रुवमेव देवि तरसा जाते तवानुग्रहे
वाचः सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्राम्बुजात् ॥ ३ ॥

यन्नित्ये तव कामराजमपरं मन्त्राक्षरं निष्कलं
तत्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि ।
आख्यानं प्रतिपर्व सत्यतपसो यत्कीर्तयन्तो द्विजाः
प्रारम्भे प्रणवास्पदप्रणयितां नीत्वोच्चरन्ति स्फुटम् ॥ ४ ॥

यत्सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधै-
स्तार्तीयं तदहं नमामि मनसा त्वद्बीजमिन्दुप्रभम् ।
अस्त्वौर्वोऽपि सरस्वतीमनुगतो जाड्याम्बुविच्छित्तये
गोशब्दो गिरि वर्तते स नियतं योगं विना सिद्धिदः ॥ ५ ॥

एकैकं तव देवि बीजमनघं सव्यञ्जनाव्यञ्जनं
कूटस्थं यदि वा पृथक्क्रमगतं यद्वा स्थितं व्युत्क्रमात् ।
यं यं कामसपेक्ष्य येन विधिना केनापि वा चिन्तितं
जप्तं वा सफलीकरोति सततं तं तं समस्तं नृणाम् ॥ ६ ॥

वामे पुस्तकधारिणीमभयदां साक्षस्रजं दक्षिणे
भक्तेभ्यो वरदानपेशलकरां कर्पूरकुन्दोज्ज्वलाम् ।
उज्जृम्भाम्बुजपत्रकान्तनयनस्निग्धप्रभालोकिनीं
ये त्वामम्ब न शीलयन्ति मनसा तेषां कवित्वं कुतः ॥ ७ ॥

ये त्वां पाण्डुरपुण्डरीकपटलस्पष्टाभिरामप्रभां
सिञ्चन्तीममृतद्रवैरिव शिरो ध्यायन्ति मूर्ध्नि स्थिताम् ।
अश्रान्तं विकटस्फुटाक्षरपदा निर्याति वक्त्राम्बुजा-
त्तेषां भारति भारती सुरसरित्कल्लोललोलोर्मिवत् ॥ ८ ॥

ये सिन्दूरपरागपुञ्जपिहितां त्वत्तेजसा द्यामिमा-
मुर्वीं चापि विलीनयावकरसप्रस्तारमग्नामिव ।
पश्यन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वर-
क्लान्तास्त्रस्तकुरङ्गशावकदृशो वश्या भवन्ति स्फुटम् ॥ ९ ॥
चञ्चत्काञ्चनकुण्डलाङ्गदधरामाबद्धकाञ्चीस्रजं
ये त्वां चेतसि तद्गते क्षणमपि ध्यायन्ति कृत्वा स्थिराम् ।
तेषां वेश्मसु विभ्रमादहरहः स्फारीभवन्त्यश्चिरं
माद्यत्कुञ्जरकर्णतालतरलाः स्थैर्यं भजन्ते श्रियः ॥ १० ॥
आर्भट्या शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं
बन्धूकप्रसवारुणाम्बरधरां प्रेतासनाध्यासिनीम् ।
त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुङ्गस्तनीं
मध्ये निम्नवलित्रयाङ्किततनुं त्वद्रूपसंवित्तये ॥ ११ ॥
जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले
निःशेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः ।
यद्विद्याधरवृन्दवन्दितपदः श्रीवत्सराजोऽभव-
द्देवि त्वच्चरणाम्बुजप्रणतिजः सोऽयं प्रसादोदयः ॥ १२ ॥
चण्डि त्वच्चरणाम्बुजार्चनविधौ बिल्वीदलोल्लुण्ठन-
त्रुट्यत्कण्टककोटिभिः परिचयं येषां न जग्मुः कराः ।
ते दण्डाङ्कुशचक्रचापकुलिशश्रीवत्समत्स्याङ्कितै-
र्जायन्ते पृथिवीभुजः कथमिवाम्भोजप्रभैः पाणिभिः ॥ १३ ॥
विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवै-
स्त्वां देवि त्रिपुरे परापरमयीं संतर्प्य पूजाविधौ.[1]
यां यां प्रार्थयते मनः स्थिरधियां तेषां त एव ध्रुवं
तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ॥ १४ ॥
शब्दानां जननी त्वमत्र भुवने वाग्वादिनीत्युच्यसे
त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति स्फुटम् ।

---

1. भक्त्यादरेण.

लीयन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी
सा त्वं काचिदचिन्त्यरूपमहिमा शक्तिः परा गीयसे ॥ १५ ॥
देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिःस्वरा-
स्त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः ।
यत्किंचिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गादिकं
तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥ १६ ॥
लक्ष्मीं राजकुले जयां रणभुवि क्षेमंकरीमध्वनि
क्रव्यादद्विपसर्पभाजि शबरीं कान्तारदुर्गे गिरौ ।
भूतप्रेतपिशाचजम्बुकभये स्मृत्वा महाभैरवीं
व्यामोहे त्रिपुरां तरन्ति विपदस्तारां च तोयप्लवे ॥ १७ ॥
माया कुण्डलिनी क्रिया मधुमती काली कलामालिनी
मातङ्गी विजया जया भगवती देवी शिवा शांभवी ।
शक्तिः शंकरवल्लभा त्रिनयना वाग्वादिनी भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥ १८ ॥
आईपल्लवितैः परस्परयुतैर्द्वित्रिक्रमाद्यक्षरैः
काद्यैः क्षान्तगतैः स्वरादिभिरथ क्षान्तैश्च तैः सस्वरैः ।
नामानि त्रिपुरे भवन्ति खलु यान्यत्यन्तगुह्यानि ते
तेभ्यो भैरवपत्नि विंशतिसहस्रेभ्यः परेभ्यो नमः ॥ १९ ॥
बोद्धव्या निपुणं बुधैः स्तुतिरियं कृत्वा मनस्तद्गतं
भारत्यास्त्रिपुरेत्यनन्यमनसा यत्राद्यवृत्ते स्फुटम् ।
एकद्वित्रिपदक्रमेण कथितस्तत्पादसंख्याक्षरैः-
र्मन्त्रोद्धारविधिर्विशेषसहितः सत्संप्रदायान्वितः ॥ २० ॥
सावद्यं निरवद्यमस्तु यदि वा किं वानया चिन्तया
नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि ।
संचिन्त्यापि लघुत्वमात्मनि दृढं संजायमानं हठा-
त्त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयापि ध्रुवम् ॥ २१ ॥

इति पञ्चस्तव्यां लघुस्तवः प्रथमः ।

चर्चास्तवः ।

सौन्दर्यविभ्रमभुवो भुवनाधिपत्य-
संकल्पकल्पतरवस्त्रिपुरे जयन्ति ।
एते कवित्वकुमुदप्रकरावबोध-
पूर्णेन्दवस्त्वयि जगज्जननि प्रणामाः ॥ १ ॥

देवि स्तुतिव्यतिकरे कृतबुद्धयस्ते
वाचस्पतिप्रभृतयोऽपि जडीभवन्ति ।
तस्मान्निसर्गजडिमा कतमोऽहमत्र
स्तोत्रं तव त्रिपुरतापनपत्नि कर्तुम् ॥ २ ॥

मातस्तथापि भवतीं भवतीव्रताप-
विच्छित्तये स्तवमहार्णवकर्णधारः ।
स्तोतुं भवानि स भवच्चरणारविन्द-
भक्तिग्रहः किमपि मां मुखरीकरोति ॥ ३ ॥

सूते जगन्ति भवती भवती बिभर्ति
जागर्ति तत्क्षयकृते भवती भवानि ।
मोहं भिनत्ति भवती भवती रुणद्धि
लीलायितं जयति चित्रमिदं भवत्याः ॥ ४ ॥

यस्मिन्मनागपि नवाम्बुजपत्रगौरि
गौरि प्रसादमधुरां दृशमादधासि ।
तस्मिन्निरन्तरमनङ्गशरावकीर्ण-
सीमन्तिनीनयनसंततयः पतन्ति ॥ ५ ॥

पृथ्वीभुजोऽप्युदयनप्रभवस्य तस्य
विद्याधरप्रणतिचुम्बितपादपीठः ।
यच्चक्रवर्तिपदवीप्रणयः स एष
त्वत्पादपङ्कजरजःकणजः प्रसादः ॥ ६ ॥

---

1. उदयनसूनोर्नरवाहनदत्तस्य. नरवाहनदत्तकथैव बृहत्कथाया मूलभूता.

त्वत्पादपङ्कजरजःप्रणिपातपूर्वैः
पुण्यैरनल्पमतिभिः कृतिभिः कवीन्द्रैः।
क्षीरक्षपाकरदुकूलहिमावदाता
कैरप्यवापि भुवनत्रितयेऽपि कीर्तिः॥ ७॥

कल्पद्रुमप्रसवकल्पितचित्रपूजा-
मुद्दीपितप्रियतमामदरक्तगीतिम्।
नित्यं भवानि भवतीमुपवीणयन्ति
विद्याधराः कनकशैलगुहागृहेषु॥ ८॥

लक्ष्मीवशीकरणकर्मणि कामिनीना-
माकर्षणव्यतिकरेषु च सिद्धमन्त्रः।
नीरन्ध्रमोहतिमिरच्छिदुरप्रदीपो
देवि त्वदङ्घ्रिजनितो जयति प्रसादः॥ ९॥

देवि त्वदङ्घ्रिनखरत्नभुवो मयूखाः
प्रत्यग्रमौक्तिकरुचो मुदमुद्वहन्ति।
सेवानतिव्यतिकरे सुरसुन्दरीणां
सीमन्तसीम्नि कुसुमस्तबकायितं यैः॥ १०॥

मूर्ध्नि स्फुरत्तुहिनदीधितिदीप्तदीप्तं
मध्ये ललाटममरायुधरश्मिचित्रम्।
चक्रचुम्बि हुतभुक्कणिकानुकारि
ज्योतिर्यदेतदिदमम्ब तव स्वरूपम्॥ ११॥

रूपं तव स्फुरितचन्द्रमरीचिगौर-
मालोकते शिरसि वागधिदैवतं यः।
निःसीमसूक्तिरचनामृतनिर्झरस्य
तस्य प्रसादमधुराः प्रसरन्ति वाचः॥ १२॥

सिन्दूरपांसुपटलच्छुरितामिव द्यां
त्वत्तेजसा जतुरसस्नपितामिवोर्वीम्।

यः पश्यति क्षणमपि त्रिपुरे विहाय
व्रीडां मृडानि सुदृशस्तमनुद्रवन्ति ॥ १३ ॥
मातर्मुहूर्तमपि यः स्मरति स्वरूपं
लाक्षारसप्रसरतन्तुनिभं भवत्याः ।
ध्यायन्त्यनन्यमनसस्तमनङ्गतप्ताः
प्रद्युम्नसीम्नि सुभगत्वगुणं तरुण्यः ॥ १४ ॥
योऽयं चकास्ति गगनार्णवरत्नमिन्दु-
र्योऽयं सुरासुरगुरुः पुरुषः पुराणः ।
यद्धामसर्धमिदमन्धकसूदनस्य
देवि त्वमेव तदिति प्रतिपादयन्ति ॥ १५ ॥
इच्छानुरूपमनुरूपगुणप्रकर्षं
संकर्षिणि त्वमभिमृश्य यदा बिभर्षि ।
जायेत स त्रिभुवनैकगुरुस्तदानीं
देवः शिवोऽपि भुवनत्रयसूत्रधारः ॥ १६ ॥
ध्यातासि हैमवति येन हिमांशुरश्मि-
मालामलद्युतिरकल्मषमानसेन ।
तस्याविलम्बमनवद्यमनन्तकल्प-
मल्पैर्दिनैः सृजसि सुन्दरि वाग्विलासम् ॥ १७ ॥
आधारमारुतनिरोधवशेन येषां
सिन्दूररञ्जितसरोजगुणानुकारि ।
दीप्तं हृदि स्फुरति देवि वपुस्त्वदीयं
ध्यायन्ति तानिह समीहितसिद्धसाध्याः ॥ १८ ॥
ये चिन्तयन्त्यरुणमण्डलमध्यवर्ति
रूपं तवाम्ब नवयावकपङ्कपिङ्गम् ।
तेषां सदैव कुसुमायुधबाणभिन्न-
वक्षःस्थला मृगदृशो वशगा भवन्ति ॥ १९ ॥

त्वामैन्दवीमिव कलामनुभालदेश-
मुद्भासिताम्बरतलामवलोकयन्तः।
सद्यो भवानि सुधियः कवयो भवन्ति
त्वं भावनाहितधियां कुलकामधेनुः॥ २०॥

शर्वाणि सर्वजनवन्दितपादपद्मे
पद्मच्छदद्युतिविडम्बितनेत्रलक्ष्मि।
निष्पापमूर्तिजनमानसराजहंसि
हंसि त्वमापदमनेकविधां जनस्य॥ २१॥

उत्तप्तहेमरुचिरे त्रिपुरे पुनीहि
चेतश्चिरंतनमघौघवनं लुनीहि।
कारागृहे निगडबन्धनयन्त्रितस्य
त्वत्संस्मृतौ झटिति मे निगडास्त्रुटन्ति॥ २२॥

त्वां व्यापिनीति सुमना इति कुण्डलीति
त्वां कामिनीति कमलेति कलावतीति।
त्वां मालिनीति ललितेत्यपराजितेति
देवि स्तुवन्ति विजयेति जयेत्युमेति॥ २३॥

उद्दामकामपरमार्थसरोजखण्ड-
चण्डद्युतिद्युतिमपासितषड्विकाराम्।
मोहद्विपेन्द्रकदनोद्यतबोधसिंह-
लीलागुहां भगवतीं त्रिपुरां नमामि॥ २४॥

गणेशबटुकस्तुता रतिसहायकामान्विता
स्मरारिवरविष्टरा कुसुमबाणबाणैर्युता।
अनङ्गकुसुमादिभिः परिवृता च सिद्धैस्त्रिभिः
कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः॥ २५॥

रुद्राणि विद्रुममयीं प्रतिमामिव त्वां
ये चिन्तयन्त्यरुणकान्तिमनन्यरूपाम्।

तानेत्य पक्ष्मलदृशः प्रसभं भजन्ते
कण्ठावसक्तमृदुबाहुलतास्तरुण्यः ॥ २६ ॥
त्वद्रूपैकनिरूपणप्रणयिताबन्धो दृशोस्त्वद्गुण-
ग्रामाकर्णनरागिता श्रवणयोस्त्वत्संस्मृतिश्चेतसि ।
त्वत्पादार्चनचातुरी करयुगे त्वत्कीर्तनं वाचि मे
कुत्रापि त्वदुपासनव्यसनिता मे देवि मा शाम्यतु ॥ २७ ॥
त्वद्रूपमुल्लसितदाडिमपुष्परक्त-
मुद्भावयेन्मदनदैवतमक्षरं यः ।
तं रूपहीनमपि मन्मथनिर्विशेष-
मालोकयन्त्युरुनितम्बतटास्तरुण्यः ॥ २८ ॥
ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मि-
स्कन्दद्विपाननहुताशनवन्दितायै ।
वागीश्वरि त्रिभुवनेश्वरि विश्वमात-
रन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥ २९ ॥
यः स्तोत्रमेतदनुवासरमीश्वरायाः
श्रेयस्करं पठति वा यदि वा शृणोति ।
तस्येप्सितं फलति राजभिरीड्यतेऽसौ
जायेत स प्रियतमो मदिरेक्षणानाम् ॥ ३० ॥

इति पञ्चस्तव्यां चर्चास्तवो द्वितीयः ।

---

घटस्तवः ।

आनन्दमन्थरपुरंदरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु मे विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ १ ॥
देवि त्र्यम्बकपत्नि पार्वति सति त्रैलोक्यमातः शिवे
शर्वाणि त्रिपुरे मृडानि वरदे रुद्राणि कात्यायनि ।

भीमे भैरवि चण्डि शर्वरि कले कालक्षये शूलिनि
त्वत्पादप्रणताननन्यमनसः पर्याकुलान्पाहि नः ॥ २ ॥
देवि त्वां सकृदेव यः प्रणमति क्षोणीभृतस्तं नम-
न्त्याजन्मस्फुरदङ्घ्रिपीठविलुठत्कोटीरकोटिच्छटाः।
यस्त्वामर्चति सोऽर्च्यते सुरगणैर्यः स्तौति स स्तूयते
यस्त्वां ध्यायति तं स्मरार्तिविधुराः ध्यायन्ति वामभ्रुवः ॥ ३
उन्मत्ता इव सग्रहा इव विषव्यासक्तमूर्छा इव
प्राप्तप्रौढमदा इवार्तिविरहग्रस्ता इवार्ता इव।
ये ध्यायन्ति हि शैलराजतनयां धन्यास्त एवाग्रत-
स्त्यक्तोपाधिविरुद्धरागमनसो ध्यायन्ति तान्सुभ्रुवः ॥ ४ ॥
ध्यायन्ति ये क्षणमपि त्रिपुरे हृदि त्वां
लावण्ययौवनधनैरपि विप्रयुक्ताः।
ते विस्फुरन्ति ललितायतलोचनानां
चित्तैकभित्तिलिखितप्रतिमाः पुमांसः ॥ ५ ॥
एतं किं नु दृशा पिबाम्युत विशाम्यस्याङ्गमङ्गैर्निजैः
किं वास्य निगराम्यनेन सहसा किं वैकतामाश्रये।
यस्येत्थं विवशो विकल्पकलिताकूतेन योषिज्जनः
किं तद्यन्न करोति देवि हृदये यस्य त्वमावर्तसे ॥ ६ ॥
विश्वव्यापिनि यद्वदीश्वर इति स्थाणावनन्याश्रयः
शब्दः शक्तिरिति त्रिलोकजननि त्वय्येव तथ्यस्थितिः।
इत्थं सत्यपि शक्नुवन्ति यदिमाः क्षुद्रा रुजो बाधितुं
त्वद्भक्तानपि न क्षिणोषि च रुषा तदेव चित्रं महत् ॥ ७
इन्दोर्मध्यगतां मृगाङ्कसदृशच्छायां मनोहारिणीं
पाण्डूत्फुल्लसरोरुहासनगतां स्निग्धप्रदीपच्छविम्।
वर्षन्तीममृतं भवानि भवतीं ध्यायन्ति ये देहिन-
स्ते निर्मुक्तरुजो भवन्ति विपदः प्रोज्झन्ति तान्दूरतः ॥ ८

पूर्णेन्दोः शकलैरिवातिबहलैः पीयूषपूरैरिव
क्षीराब्धेर्लहरीभरैरिव सुधापङ्कस्य पिण्डैरिव ।
प्रालेयैरिव निर्मितं तव वपुर्ध्यायन्ति ये श्रद्धया
चित्तान्तर्निहितार्तितापविपदस्ते संपदं बिभ्रति ॥ ९ ॥

ये संस्मरन्ति तरलां सहसोल्लसन्तीं
त्वां ग्रन्थिपञ्चकभिदं तरुणार्कशोणाम् ।
रागार्णवे बहलरागिणि मज्जयन्तीं
कृत्स्नं जगद्दधति चेतसि तान्मृगाक्ष्यः ॥ १० ॥

लाक्षारसस्नपितपङ्कजतन्तुतन्वी-
मन्तः स्मरत्यनुदिनं भवती भवानि ।
यस्तं स्मरप्रतिममप्रतिमस्वरूपा
नेत्रोत्पलैर्मृगदृशो भृशमर्चयन्ति ॥ ११ ॥

स्तुमस्त्वां वाचमव्यक्तां हिमकुन्देन्दुरोचिषम् ।
कदम्बमालां बिभ्राणमापादतललम्बिनीम् ॥ १२ ॥

मूर्ध्नीन्दोः सितपङ्कजासनगतां प्रालेयपाण्डुत्विषं
वर्षन्तीममृतं सरोरुहभुवो वक्त्रेऽपि रन्ध्रेऽपि च ।
अच्छिन्ना च मनोहरा च ललिता चातिप्रसन्नापि च
त्वामेवं स्मरतः स्मरारिदयिते वाक्प्रवृत्ता वल्गति ॥ १३ ॥

ददातीष्टान्भोगान्क्षपयति रिपून्हन्ति विपदो
दहत्याधीन्व्याधीन्शमयति सुखानि प्रतनुते ।
हठादन्तर्दुःखं दलयति पिनष्टीष्टविरहं
सकृद्ध्याता देवी किमिव निरवद्यं न कुरुते ॥ १४ ॥

यस्त्वां ध्यायति वेत्ति विन्दति जपत्यालोकते चिन्तय-
त्यन्वेति प्रतिपद्यते कलयति स्तौत्याश्रयत्यर्चति ।
यश्च त्र्यम्बकवल्लभे तव गुणानाकर्णयत्यादरा-
त्तस्य श्रीर्न गृहादपैति विजयस्तस्याग्रतो धावति ॥ १५ ॥

किं किं दुःखं दनुजदलिनि क्षीयते न स्मृतायां
 का का कीर्तिः कुलकमलिनि ख्याप्यते न स्तुतायाम् ।
का का सिद्धिः सुरवरनुते प्राप्यते नार्चितायां
 कं कं योगं त्वयि न चिनुते चित्तमालम्बितायाम् ॥ १६ ॥

ये देवि दुर्धरकृतान्तमुखान्तरस्था
 ये कालि कालघनपाशनितान्तबद्धाः ।
ये चण्डि चण्डगुरुकल्मषसिन्धुमग्ना-
 स्तान्पासि मोचयसि तारयसि स्मृतैव ॥ १७ ॥

लक्ष्मीवशीकरणचूर्णसहोदराणि
 त्वत्पादपङ्कजरजांसि चिरं जयन्ति ।
यानि प्रणामसिलितानि नृणां ललाटे
 लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥ १८ ॥

रे मूढाः किमयं वृथैव तपसा कायः परिक्लिश्यते
 यज्ञैर्वा बहुदक्षिणैः किमितरे रिक्तीक्रियन्ते गृहाः ।
भक्तिश्चेदविनाशिनी भगवतीपादद्वयी सेव्यता-
 मुन्निद्राम्बुरुहातपत्रसुभगा लक्ष्मीः पुरो धावति ॥ १९ ॥

याचे न कंचन न कंचन वञ्चयामि
 सेवे न कंचन निरस्तसमस्तदैन्यः ।
श्लक्ष्णं वसे मधुरमद्मि भजे वरस्त्री-
 र्देवी हृदि स्फुरति मे कुलकामधेनुः ॥ २० ॥

नमामि यामिनीनाथलेखालंकृतकुन्तलाम् ।
भवानीं भवसंतापनिर्वापणसुधानदीम् ॥ २१ ॥

इति पञ्चस्तव्यां घटस्तवस्तृतीयः ।

---

अम्बास्तवः ।

यामामनन्ति मुनयः प्रकृतिं पुराणीं
 विद्येति यां श्रुतिरहस्यविदो वदन्ति ।

तामर्धपल्लवितशंकररूपमुद्रां
देवीमनन्यशरणः शरणं प्रपद्ये ॥ १ ॥
अम्ब स्तवेषु तव तावदकर्तृकानि
कुण्ठीभवन्ति वचसामपि गुम्फनानि ।
डिम्भस्य मे स्तुतिरसावसमञ्जसापि
वात्सल्यनिम्नहृदयां भवतीं धिनोतु ॥ २ ॥
व्योमेति बिन्दुरिति नाद इतीन्दुलेखा-
रूपेति वाग्भवतनूरिति मातृकेति ।
निःस्यन्दमानसुखबोधसुधास्वरूपा
विद्योतसे मनसि भाग्यवतां जनानाम् ॥ ३ ॥
आविर्भवत्पुलकसंततिभिः शरीरै-
र्निःस्यन्दमानसलिलैर्नयनैश्च नित्यम् ।
वाग्भिश्च गद्गदपदाभिरुपासते ये
पादौ तवाम्ब भुवनेषु त एव धन्याः ॥ ४ ॥
वक्त्रं यदुद्यतमभिष्टुतये भवत्या-
स्तुभ्यं नमो यदपि देवि शिरः करोति ।
चेतश्च यत्त्वयि परायणमम्ब तानि
कस्यापि कैरपि भवन्ति तपोविशेषैः ॥ ५ ॥
मूलालवालकुहरादुदिता भवानि
निर्भिद्य षट्सरसिजानि तडिल्लतेव ।
भूयोऽपि तत्र विशसि ध्रुवमण्डलेन्दु-
निःस्यन्दमानपरमामृततोयरूपा ॥ ६ ॥
दग्धं यदा मदनमेकमनेकधा ते
मुग्धः कटाक्षविधिरङ्कुरयांचकार ।
धत्ते तदाप्रभृति देवि ललाटनेत्रं
सत्यं ह्रियैव मुकुलीकृतमिन्दुमौलिः ॥ ७ ॥

अज्ञातसंभवमनाकलितान्ववायं
भिक्षुं कपालिनमवासममद्वितीयम्।
पूर्वं करग्रहणमङ्गलतो भवत्याः
शंभुं क एव बुबुधे गिरिराजकन्ये॥ ८॥

चर्माम्बरं च शवभस्मविलेपनं च
भिक्षाटनं च नटनं च परेतभूमौ।
वेतालसंहतिपरिग्रहता च शंभोः
शोभां बिभर्ति गिरिजे तव साहचर्यात्॥ ९॥

कल्पोपसंहरणकेलिषु पण्डितानि
चण्डानि खण्डपरशोरपि ताण्डवानि।
आलोकनेन तव कोमलितानि मात-
र्लास्यात्मना परिणमन्ति जगद्विभूत्यै॥ १०॥

जन्तोरपश्चिमतनोः सति कर्मसाम्ये
निःशेषपाशपटलच्छिदुरा निमेषात्।
कल्याणि देशिककटाक्षसमाश्रयेण
कारुण्यतो भवति शांभववेधदीक्षा॥ ११॥

मुक्ताविभूषणवती नवविद्रुमाभा
यच्चेतसि स्फुरसि तारकितेव संध्या।
एकः स एव भुवनत्रयसुन्दरीणां
कंदर्पतां व्रजति पञ्चशरीं विनापि॥ १२॥

ये भावयन्त्यमृतवाहिभिरंशुजालै-
राप्यायमानभुवनाममृतेश्वरीं त्वाम्।
ते लङ्घयन्ति ननु मातरलङ्घनीयां
ब्रह्मादिभिः सुरवरैरपि कालकक्षाम्॥ १३॥

यः स्फाटिकाक्षगुणपुस्तककुण्डिकाढ्यां
व्याख्यासमुद्यतकरां शरदिन्दुशुभ्राम्।

पद्मासनां च हृदये भवतीमुपास्ते
मातः स विश्वकवितार्किकचक्रवर्ती ॥ १४ ॥

बर्हावतंसयुतबर्बरकेशपाशां
गुञ्जावलीकृतघनस्तनहारशोभाम् ।
श्यामां प्रवालवदनां सुकुमारहस्तां
त्वामेव नौमि शबरीं शबरस्य जायाम् ॥ १५ ॥

अर्धेन किं नवलताललितेन मुग्धे
क्रीतं विभोः परुषमर्धमिदं त्वयेति ।
आलीजनस्य परिहासवचांसि मन्ये
मन्दस्मितेन तव देवि जडीभवन्ति ॥ १६ ॥

ब्रह्माण्डबुद्बुदकदम्बकसंकुलोऽयं
मायोदधिर्विविधदुःखतरङ्गमालः ।
आश्चर्यमम्ब झटिति प्रलयं प्रयाति
त्वद्ध्यानसंततिमहावडवामुखाग्नौ ॥ १७ ॥

दाक्षायणीति कुटिलेति गृहारणीति
कात्यायनीति कमलेति कलावतीति ।
एका सती भगवती परमार्थतोऽपि
संदृश्यसे बहुविधा ननु नर्तकीव ॥ १८ ॥

आनन्दलक्षणमनाहतनाम्नि देशे
नादात्मना परिणतं तव रूपमीशे ।
प्रत्यङ्मुखेन मनसा परिचीयमानं
शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ॥ १९ ॥

त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं
त्वं चेतनासि पुरुषे पवने बलं त्वम् ।
त्वं स्वादुतासि सलिले शिखिनि त्वमूष्मा
निःसारमेव निखिलं त्वदृते यदि स्यात् ॥ २० ॥

ज्योतींषि यद्दिवि चरन्ति यदन्तरिक्षं
सूते पयांसि यदहिर्धरणिं च धत्ते।
यद्वाति वायुरनलो यदुदर्चिरास्ते
तत्सर्वमम्ब तव केवलमाज्ञयैव॥ २१॥

संकोचमिच्छसि यदा गिरिजे तदानीं
वाक्तर्कयोस्त्वमसि भूमिरनामरूपा।
यद्वा विकासमुपयासि यदा तदानीं
त्वन्नामरूपगणनाः सुकरा भवन्ति॥ २२॥

भोगाय देवि भवतीं कृतिनः प्रणम्य
भ्रूकिंकरीकृतसरोजगृहासहस्राः।
चिन्तामणिप्रचयकल्पितकेलिशैले
कल्पद्रुमोपवन एव चिरं रमन्ते॥ २३॥

हर्तुं त्वमेव भवसि त्वदधीनमीशे
संसारतापमखिलं दयया पशूनाम्।
वैकर्तनी किरणसंहतिरेव शक्ता
घर्मं निजं शमयितुं निजयैव वृष्ट्या॥ २४॥

शक्तिः शरीरमधिदैवतमन्तरात्मा
ज्ञानं क्रिया करणमासनजालमिच्छा।
ऐश्वर्यमायतनमावरणानि च त्वं
किं तन्न यद्भवसि देवि शशाङ्कमौलेः॥ २५॥

भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा
विद्यानले मरुति शान्तिरतीतशान्तिः।
व्योम्नीति याः किल कलाः कलयन्ति विश्वं
तासां हि दूरतरमम्ब पदं त्वदीयम्॥ २६॥

यावत्पदं पदसरोजयुगं त्वदीयं
नाङ्गीकरोति हृदयेषु जगच्छरण्ये।

क्षावद्विकल्पजटिलाः कुटिलप्रकारा-
स्तर्कग्रहाः समयिनां प्रलयं न यान्ति ॥ २७ ॥
यद्देवयानपितृयानविहारमेके
कृत्वा मनः करणमण्डलसार्वभौमम्।
याने निवेश्य तव कारणपञ्चकस्य
पर्वाणि पार्वति नयन्ति निजासनत्वम् ॥ २८ ॥
स्थूलासु मूर्तिषु महीप्रमुखासु शंभोः
कस्याश्चनापि तव वैभवमम्ब यस्याः।
पत्या गिरामपि न शक्यत एव वक्तुं
सापि स्तुता किल मयेति तितिक्षितव्यम् ॥ २९ ॥
कालाग्निकोटिरुचिमम्ब षडध्वशुद्धा-
वाल्लावनेषु भवतीममृतौघवृष्टिम्।
श्यामां घनस्तनतटां सकलीकृतौ च
ध्यायन्त एव जगतां गुरवो भवन्ति ॥ ३० ॥
विद्यां परां कतिचिदम्बरमम्ब केचि-
दानन्दमेव कतिचित्कतिचिच्च मायाम्।
त्वां विश्वमाहुरपरे वयमामनामः
साक्षादपारकरुणां गुरुमूर्तिमेव ॥ ३१ ॥
कुवलयदलनीलं बर्बरस्निग्धकेशं
पृथुतरकुचभारक्रान्तकान्तावलग्नम्।
किमिह बहुभिरुक्तैस्त्वत्स्वरूपं परं नः
सकलजननि मातः संततं संनिधत्ताम् ॥ ३२ ॥

इति पञ्चस्तव्यामम्बास्तवश्चतुर्थः।

सकलजननीस्तवः।

अजानन्तो यान्ति क्षयमवशमन्योन्यकलहै-
रमी मायाग्रन्थौ तव परिलुठन्तः समयिनः।

जगन्मातर्जन्मज्वरभयतमःकौमुदि वयं
नमस्ते कुर्वाणाः शरणमुपयामो भगवतीम् ॥ १ ॥

वचस्तर्कागम्यस्वरमपरमानन्दविभव-
प्रबोधाकाराय द्युतितुलितनीलोत्पलरुचे ।
शिवस्याराध्याय स्तनभरविनम्राय सततं
नमस्तस्मै कस्मैचन भवतु मुग्धाय महसे ॥ २ ॥

अनाद्यन्ताभेदप्रणयरसिकापि प्रणयिनी
शिवस्यासीर्यत्त्वं परिणयविधौ देवि गृहिणी ।
सवित्री भूतानामपि यदुदभूः शैलतनया
तदेतत्संसारप्रणयनमहानाटकमुखम् ॥ ३ ॥

ब्रुवन्त्येके तत्त्वं भगवति सदन्ये विदुरस-
त्परे मातः प्राहुस्तव सदसदन्ये सुकवयः ।
परे नैतत्सर्वं समभिदधते देवि सुधिय-
स्तदेतत्त्वन्मायाविलसितमशेषं ननु शिवे ॥ ४ ॥

लुटद्गुञ्जाहारस्तनभरनमन्मध्यलतिका-
मुदञ्चद्धर्माम्भःकणगुणितनीलोत्पलरुचम् ।
शिवं पार्थत्राणप्रवणमृगयाकारगुणितं
शिवामन्वग्यान्तीं शबरमहमन्वेमि शबरीम् ॥ ५ ॥

मिथः केशाकेशिप्रथननिधनास्तर्कघटना
बहुश्रद्धाभक्तिप्रणयविषयाः शास्त्रविधयः ।
प्रसीद प्रत्यक्षीभव गिरिसुते देहि शरणं
निरालम्बं चेतः परिलुठति पारिप्लवमिदम् ॥ ६ ॥

शुनां वा वह्नेर्वा खगपरिषदो वा यदशनं
कदा केन क्वेति क्वचिदपि न कश्चित्कलयति ।
अमुष्मिन्विश्वासं विजहिहि ममाहाय वपुषि
प्रपद्येथाश्चेतः सकलजननीमेव शरणम् ॥ ७ ॥

तडित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिगहनं
प्रविष्टं स्वाधारं पुनरपि सुधावृष्टिवपुषा ।
किमप्यष्टत्रिंशत्किरणसकलीभूतमनिशं
भजे धाम श्यामं कुचभरनतं बर्बरकचम् ॥ ८ ॥

चतुष्पत्रान्तःषड्दलभगपुटान्तस्त्रिवलय-
स्फुरद्विद्युद्वह्निद्युमणिनियताभद्युतियुते ।
षडस्रं भित्त्वादौ दशदलमथ द्वादशदलं
कलास्रं च द्व्यस्रं गतवति नमस्ते गिरिसुते ॥ ९ ॥

कुलं केचित्प्राहुर्वपुरकुलमन्ये तव बुधाः
परे तत्संभेदं समभिदधते कौलमपरे ।
चतुर्णामप्येषामुपरि किमपि प्राहुरपरे
महामाये तत्त्वं तव कथममी निश्चिनुमहे ॥ १० ॥

षडध्वारण्यानीं प्रलयरविकोटिप्रतिरुचा
रुचा भस्मीकृत्य स्वपदकमलप्रह्वशिरसाम् ।
वितन्वानः शैवं किमपि वपुरिन्दीवररुचिः
कुचाभ्यामानम्रस्तव पुरुषकारो विजयते ॥ ११ ॥

प्रकाशानन्दाभ्यामविदितचरीं मध्यपदवीं
प्रविश्यैतद्द्वन्द्वं रविशशिसमाख्यं कवलयन् ।
प्रविश्योर्ध्वं नादं लयदहनभस्मीकृतकुलः
प्रसादात्ते जन्तुः शिवमकुलमम्ब प्रविशति ॥ १२ ॥

मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं
भवाम्भोधौ मग्नं त्रिगुणलहरीकोटिलुठितम् ।
कटाक्षश्चेदत्र क्वचन तव मातः करुणया
शरीरी सद्योऽयं व्रजति परमानन्दतनुताम् ॥ १३ ॥

प्रियंगुश्यामाङ्गीमरुणतरवासःकिसलयां
समुन्मीलन्मुक्ताफलबहलनेपथ्यसुभगाम् ।

स्तनद्वन्द्वस्फारस्तवकनमितां कल्पलतिकां
सकृद्ध्यायन्तस्त्वां दधति शिवचिन्तामणिपदम् ॥ १४

षडाधारावर्तैरपरिमितमन्त्रोर्मिपटलै-
र्लसन्मुद्राफेनैर्बहुविधचलद्दैवतझषैः ।
क्रमस्रोताभिस्त्वं वहसि परनादामृतनदी
भवानि प्रत्यग्रा शिवचिदमृताब्धिप्रणयिनी ॥ १५ ॥

महीपाथोवह्निश्वसनवियदात्मेन्दुरविभि-
र्वपुर्भिर्ग्रस्ताशैरपि तव कियानम्ब महिमा ।
अमून्यालोकयन्ते भगवति न कुत्राप्यणुतमा-
मवस्थां प्रासानि त्वयि तु परमव्योमवपुषि ॥ १६ ॥

कलां मायां प्रज्ञां समयमनुभूतिं समरसं
गुरुं पारम्पर्यं विनयमुपदेशं शिवकथाम् ।
प्रमाणं निर्वाणं प्रकृतिमतिभूतिं परगुहां
विधिं विद्यामाहुः सकलजननीमेव मुनयः ॥ १७ ॥

प्रलीने शब्दौघे तदनु विरते बिन्दुविभवे
ततस्तत्त्वे चाष्टध्वनिवपुरुपाधिन्युपगते ।
श्रिते शाक्ते पर्वण्यनुकलितचिन्मात्रगहनां
स्वसंवित्तिं योगी रमयति शिवाख्यां परतनुम् ॥ १८ ॥

परानन्दाकारां निरवधिशिवैश्वर्यवपुषं
निराकारां ज्ञानप्रकृतिमपरिच्छिन्नकरुणाम् ।
सवित्रीं लोकानां निरतिशयधामास्पदपदां
भवो वा मोक्षो वा भवतु भवतीमेव भजताम् ॥ १९ ॥

जगत्काये कृत्वा तदपि हृदये तच्च पुरुषे
पुमांसं बिन्दुस्थं तमपि वियदाख्ये च गहने ।
तदेतज्ज्ञानाख्ये तदपि परमानन्दगहने
महाव्योमाकारे त्वदनुभवशीलो विजयते ॥ २० ॥

विधे वेद्ये विद्ये विविधसमये वेदगुलिके
विचित्रे विश्वाद्ये विनयसुलभे वेदजननि ।
शिवाज्ञे शूलस्थे शिवपदवदान्ये शिवनिधे
शिवे मातर्मह्यं त्वयि वितर भक्तिं निरुपमाम् ॥ २१ ॥
विधेर्मुण्डं हृत्वा यदकुरुत पात्रं करतले
हरिं शूलप्रोतं यदगमयदंसाभरणताम् ।
अलं चक्रे कण्ठं यदपि गरलेनाम्ब गिरिशः
शिवस्थायाः शक्तेस्तदिदमखिलं ते विलसितम् ॥ २२ ॥
विरिञ्च्याख्या मातः सृजसि हरिसंज्ञा त्वमवसि
त्रिलोकीं रुद्राख्या हरसि विदधासीश्वर दशाम् ।
भवन्ती नादाख्या विहरसि च पाशौघदलनी
त्वमेवैकानेका भवसि कृतिभेदैर्गिरिसुते ॥ २३ ॥
मुनीनां चेतोभिः प्रमृदितकषायैरपि मना-
गशक्यं संस्प्रष्टुं चकितचकितैरम्ब सततम् ।
श्रुतीनां मूर्धानः प्रकृतिकठिनाः कोमलतरे
कथं ते विन्दन्ते पदकिसलये पार्वति पदम् ॥ २४ ॥
तडिद्वल्लीं नित्याममृतसरितं पाररहितां
मलोत्तीर्णां ज्योत्स्नां प्रकृतिमगुणग्रन्थिगहनाम् ।
गिरां दूरां विद्यामविनतकुचां विश्वजननी-
मपर्यन्तां लक्ष्मीमभिदधति सन्तो भगवतीम् ॥ २५ ॥
शरीरं क्षित्यम्भःप्रभृतिरचितं केवलमिदं
सुखं दुःखं चायं कलयति पुमांश्चेतन इति ।
स्फुटं जानानोऽपि प्रभवति न देही रहयितुं
शरीराहंकारं तव समयबाह्यो गिरिसुते ॥ २६ ॥
पिता माता भ्राता सुहृदनुचरः सद्म गृहिणी
वपुः क्षेत्रं मित्रं धनमपि यदा मां विजहति ।

तदा मे भिन्दाना सपदि भयमोहान्धतमसं
महाज्योत्स्ने मातर्भव करुणया संनिधिकरी ॥ २७ ॥
सुता दक्षस्यादौ किल सकलमातस्त्वमुदभूः
सदोषं तं हित्वा तदनु गिरिराजस्य दुहिता।
अनाद्यन्ता शंभोरपृथगपि शक्तिर्भगवती
विवाहाज्जायासीत्यहह चरितं वेत्ति तव कः ॥ २८ ॥
कणास्त्वद्दीप्तीनां रविशशिकृशानुप्रभृतयः
परं ब्रह्म क्षुद्रं तव नियतमानन्दकणिका।
शिवादि क्षित्यन्यं त्रिवलयतनोः सर्वमुदरे
तवास्ते भक्तस्य स्फुरसि हृदि चित्रं भगवति ॥ २९ ॥
पुरः पश्चादन्तर्बहिरपरिमेयं परिमितं
परं स्थूलं सूक्ष्मं सकलमकलं गुह्यमगुहम्।
दवीयो नेदीयः सदसदिति विश्वं भगवती
सदा पश्यन्त्याख्यां वहसि भुवनक्षोभजननीम् ॥ ३०
प्रविश्य त्वन्मार्गं सहजदयया देशिकदृशा
षडध्वध्वान्तौघच्छिदुरगणनातीतकरुणाम्।
परामाज्ञाकारां सपदि शिवयन्तीं शिवतनुं
स्वमात्मानं धन्याश्चिरमुपलभन्ते भगवतीम् ॥ ३१ ॥
मयूखाः पूष्णीव ज्वलन इव तद्दीप्तिकणिकाः
पयोधौ कल्लोलाः प्रतिहतमहिम्नीव पृषतः।
उदेत्योदेत्याम्ब त्वयि सह निजैः सात्त्विकगुणै-
र्भजन्ते तत्त्वौघाः प्रशममनुकल्पं परवशाः ॥ ३२ ॥
विधुर्विष्णुर्ब्रह्मा प्रकृतिरणुरात्मा दिनकरः
स्वभावो जैनेन्द्रः सुगतमुनिराकाशमनिलः।
शिवः शक्तिश्चेति श्रुतिविषयतां तामुपगतां
विकल्पैरेभिस्त्वामभिदधति सन्तो भगवतीम् ॥ ३३ ॥

शिवस्त्वं शक्तिस्त्वं त्वमसि समया त्वं समयिनी
त्वमात्मा त्वं दीक्षा त्वमयमणिमादिर्गुणगणः ।
अविद्या त्वं विद्या त्वमसि निखिलं त्वं किमपरं
पृथक्तत्त्वं त्वत्तो भगवति न वीक्षामह इमे ॥ ३४ ॥

त्वया यो जानीते रचयति भवत्यैव सततं
त्वयैवेच्छत्यम्ब त्वमसि निखिला यस्य तनवः ।
गता साम्यं शंभोर्वहति परमं व्योम भवती
तथाप्येवं हित्वा विहरति शिवस्येति किमिदम् ॥ ३५ ॥

असंख्यैः प्राचीनैर्जननि जननैः कर्मविलया-
त्कृते जन्मन्यन्ते गुरुवपुपमासाद्य गिरिशम् ।
अवाप्याज्ञां शैवीं क्रमतनुरपि त्वां विदितवा-
न्नयेयं त्वत्पूजास्तुतिविरचनैरेव दिवसान् ॥ ३६ ॥

यत्षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या
योनिस्तस्याः प्रथितमुदरे यत्तदोंकारपीठम् ।
तस्मिन्नन्तः कुचभरनतां कुण्डलीतः प्रवृत्तां
श्यामाकारां सकलजननीं संततं भावयामि ॥ ३७ ॥

भुवि पयसि कृशानौ मारुते खे शशाङ्के
सवितरि यजमानेऽप्यष्टधा शक्तिरेका ।
वहति कुचभराभ्यां यावनम्रापि विश्वं
सकलजननि सा त्वं पाहि मामित्यवश्यम् ॥ ३८ ॥

इति पञ्चस्तव्यां सकलजननीस्तवः पञ्चमः ।

**इति पञ्चस्तवी समाप्ता ।**

---

## श्रीदामोदरगुप्तविरचितं

# कुट्टनीमतम्[2]।

स जयति संकल्पभवो रतिमुखशतपत्रचुम्बनभ्रमरः।
यस्यानुरक्तललनानयनान्तविलोकनं वसतिः ॥ १ ॥

अवधीर्य दोषनिचयं गुणलेशे संनिवेश्य मतिमार्याः।
कुट्टन्या मतमेतद्दामोदरगुप्तविरचितं शृणुत ॥ २ ॥

अस्ति खलु निखिलभूतलभूषणभूता विभूतिगुणयुक्ता।
मुक्ताभियुक्तजनता नगरी वाराणसीनाम ॥ ३ ॥

अनुभवतामपि यस्यामुपभोगान्कामतः शरीरवताम्।
शशधरखण्डविभूषितदेहलयः किल न दुष्प्रापः ॥ ४ ॥

---

१. अयं दामोदरगुप्तकविः कश्मीरमहीपतेर्जयापीडस्य मन्त्रिप्रवर आसीत्. 'स दामोदरगुप्ताख्यं कुट्टनीमतकारिणम्। कविं कविं बलिरिव धुर्यं धीसचिवं व्यधात् ॥' (४। ४९५) इति राजतरङ्गिणी. आसंश्च तत्सभायामन्येऽपि महाविद्वांसो महाकवयश्च. स्वयं च जयापीडनृपतिः पण्डित आसीत्. 'क्षीराभिधाच्छब्दविद्योपाध्यायात्संभृतश्रुतः। बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ॥' (४। ४८८) इति, 'देशान्तरादागमय्य व्याचक्षाणः क्षमापतिः। प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥' (४। ४८७) इति, 'भवस्वामिवेदकास्तत्र प्रथिताः पृथिवीभुजा। आर्द्रान्तःकरणैः श्लोकाः स्मर्यन्तेऽद्यापि सूरिभिः ॥' (४। ५४८) इति, 'विद्वान्दीनारलक्षेण प्रत्यहं कृतवेतनः। भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः ॥' (४। ४९४) इति, 'मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा। बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥' (४। ४९६) इति च राजतरङ्गिणी. स जयापीडमहीपतिः ७५५ मितात्खिस्तवत्सरादारभ्य ७८६ मितवत्सरपर्यन्तं कश्मीरवसुंधरां बुभोज. अयं ग्रन्थस्तु लुप्तप्राय एवासीत्. पूर्वतरे वर्षे डॉक्टरपीटर्सनेनैकं तालपत्रलिखितमेतत्पुस्तकं खम्भातनगरादधिगतम्. पूर्ववर्षे च जीर्णं पुस्तकद्वयमस्माभिरप्यधिगतम्. किं त्वेतानि त्रीण्यपि पुस्तकान्यसमाप्तान्यशुद्धानि च सन्ति. संपूर्णस्य शुद्धस्य च पुस्तकस्य लाभे निराशा वयमस्यातिदुर्लभप्राचीनमनोहरग्रन्थस्य मूलच्छेदो मा भूदिति तादृशस्यैव मुद्रणं कर्तुं प्रवृत्ताः स्मः. आशास्महे च विकलस्याप्यस्य ग्रन्थस्य खण्डेन्दोरिव विलोकनं मनागपि मनोविनोदावहं भविष्यति सहृदयानाम्. २. 'शम्भलीमतम्' इति पूर्वोक्ततालपत्रपुस्तके नाम वर्तते. शम्भली कुट्टनी च पर्यायशब्दौ.

चन्द्र[1]विभूषितदेहा भूति[2]रताः सद्भुजंग[3]परिवाराः ।
वारस्त्रियोऽपि यस्यां पशुपतितनुतुल्यतां याताः ॥ ५ ॥
अतितुङ्गसुरनिकेतनशिखरसमुत्क्षिप्तपवनचलिताभिः ।
मञ्जरितमिव विराजति यत्र नभो वैजयन्तीभिः ॥ ६ ॥
अविरतसंचरदबलाचरणतलालक्तकद्रवारुणितम् ।
स्थलकमलवतीलक्ष्मीं बिभर्ति वसुधातलं यत्र ॥ ७ ॥
यत्र च रमणीभूषणरवबधिरितसकलदिङ्नभोभागे ।
शिष्याणामाचार्यैर्नावद्यं वार्यते पठताम् ॥ ८ ॥
दिव्यधराधरभूरिव या राजति मत्तवारणो[4]पेता ।
बहुल[5]निशीथवतीव प्रोज्ज्वलधिष्ण्यो[6]पशोभिता या च ॥ ९ ॥
यतिगण[7]गुणसमुपेता या नित्यं छन्दसामिव प्रचितिः ।
वनपङ्क्तिरिव सशाला[8] तुरुष्कसेनेव बहुलगन्धर्वा[9] ॥ १० ॥
तारागणोऽकुलीनः[10] प्रियदोषा[11] यत्र कौशिकाः[12] सततम् ।
गद्ये वृत्तच्यवनं[13] परगृहरोधस्तथाक्षेषु[14] ॥ ११ ॥
शूलभृतो ध्यानस्थाः(?) पदवेदिषु[15] यत्र धातुवादित्वम्[16] ।
सुरतेष्वबला[17]क्रमणं दानच्छेदो मदच्युतौ करिणाम् ॥ १२ ॥
तीव्रकरत्वं भानोरविवेको यत्र मित्रमुहृदानाम्(?) ।
योगिषु दण्डग्रहणं संधिच्छेदः[18] प्रगृह्येषु ॥ १३ ॥

---

१. चन्द्रः स्वर्णं भूषणविशेषो वा; (पक्षे) हिमांशुः. २. भूतिरैश्वर्यं भस्म च. ३. भुजंगाः पिङ्गाः; (पक्षे) सर्पाः. ४. मत्तवारणः प्रासादवीथीनां वरण्डकः; (पक्षे) मत्तगजः. ५. कृष्णपक्षरात्रिरिव. ६. धिष्ण्यानि गृहाणि; (पक्षे) नक्षत्राणि. ७. यतिगणः संन्यासिसमूहः; (पक्षे) यतिः पाठविच्छेदस्थलम्, गणाश्चाष्टौ मगणाद्याः, तद्गुणेन समुपेता. ८. सप्राकारा सगृहा वा; (पक्षे) सवृक्षा सवृक्षविशेषा वा. ९. सगायना साश्वा च. १०. अकुलीनः, न भूमिलीनः, आकाशस्थित इति यावत्; (पक्षे) असत्कुलोत्पन्नः. ११. दोषा रात्रिः; (पक्षे) दुर्गुणाः. १२. उलूकाः. १३. चारित्रभङ्गः; (पक्षे) छन्दोभङ्गः १४. अष्टापदक्रीडायाम्. १५. वैयाकरणेषु. १६. धातवो भूवादयः; (पक्षे) पारदादीनां धात्वन्तराणामप्यौषधप्रक्षेपेण ये कलधौतत्वं संपादयन्ति ते धातुवादिनः. ते च प्रायो वञ्चका भवन्तीति तात्पर्यम्. १७. नारीणाम्; (पक्षे) दुर्बलस्य. १८. संधिच्छेदश्चौरकृतं संधिभेदनम्; (पक्षे) संधिप्रगृह्यौ व्याकरणप्रसिद्धौ.

छन्दःप्रस्तारविधौ गुरवो यस्यामनार्जवस्थितयः ।
वीणायां परिवादो द्विजनिलयेष्वप्रसन्नत्वम् ॥ १४ ॥
अनुरूपवृत्तघटना मत्तकविकृतरूपके च लोके च ।
रमणीवचने यस्यां माधुर्यं काव्यबन्धे च ॥ १५ ॥
यस्यामुपवनवीथ्यां तमालपत्राणि युवतिवदने च ।
नखरप्रहाररणितं तन्त्रीवाद्येषु सुरतकलहेषु ॥ १६ ॥
नन्दनवनाभिरामा विबुधवती नाकवाहिनीजुष्टा ।
अमरावतीव यान्या विश्वसृजा निर्मिता जगति ॥ १७ ॥
तस्यां खगपतितनुरिव विलासिनां हृदयशोकसंजननी ।
आकृष्टेश्वरहृदया प्रालेयनगाधिराजतनयेव ॥ १८ ॥
संसक्तभोगिनेत्रा मन्दरधरणीभृतो यथा मूर्तिः ।
उपरि गता शूलानामन्धासुरगात्रलेखेव ॥ १९ ॥
समुवास वाग्गमा मानमवमतेः शरीरिणी शक्तिः ।
निःशेषवेशयोषिद्विभूषणं मालती नाम ॥ २० ॥ (विशेषकम्)
पेशलवचसां वसतिर्लीलानामालयः स्थितिः प्रेम्णः ।
भूमिः परिहासानामावसथो वक्रकवितानाम् ॥ २१ ॥
सा शुश्राव कदाचिद्देवकुलालयपृष्ठदेशमधिरूढा ।
केनापि गीयमानां प्रसङ्गपतितामिमामार्याम् ॥ २२ ॥
'यौवनसौन्दर्यमदं दूरेणापास्य वारवनिताभिः ।
यत्नेन वदितव्याः कामुकहृदयार्जनोपायाः' ॥ २३ ॥

१. छन्दःशास्त्रे गुर्वक्षरव्यञ्जकरेखा वक्रा क्रियते. २. प्रसन्ना सुरा. ३. तापिच्छवृक्षः; (पक्षे) तिलकम्. ४. नन्दनं मनोहारि वनम्; (पक्षे) तन्नामकं वनम्. ५. विबुधाः पण्डिता देवाश्च. ६. गङ्गा. ७. बिले आसत इति बिलासिनः सर्पाः; (पक्षे) विलसनशीला भोगिनः. श्लेषे बवयोरभेदः. ८. पार्वतीव. ९. संसक्तानि भोगिनां कामिनां नेत्राणि लोचनानि यस्याम्; (मन्दराचलपक्षे तु) संसक्तं भोगिरूपं सर्परूपं नेत्रं मन्थनरज्जुर्यस्याम्. १०. शूलानां पण्यस्त्रीणाम्; (पक्षे) त्रिशूलानाम्. अन्धकासुरशरीरं महादेवेन शूलोपरि स्थापितमिति पुराणम्. ११. 'वक्रकथिकानाम्' इति पाठान्तरम्. १२. 'देवालय-' इति पा०. १३. 'गायमानाम्' इति पा०.

श्रुत्वाथ विपुलजघना मनसीदं मालती चकार चिरम् ।
अतिसांप्रतमुपदिष्टं सुहृदेवानेन साधुना पठता ॥ २४ ॥
तद्गत्वा पृच्छामो विकरालां कलितसकलसंसाराम् ।
यस्याः कामिजनौघो दिवानिशं द्वारमध्यास्ते ॥ २५ ॥
इति मनसि सा निवेश्य द्रुततरमवतीर्य वेश्मनः शिखरात् ।
विकरालाभवनवरं परिजनपरिवारिता प्रययौ ॥ २६ ॥
अथ विरलोन्नतदशनां निम्नहनुं स्थूलचिपिटनासाग्राम् ।
उल्बणचूचुकलक्षितशुष्ककुचस्थानशिथिलकृत्तितनुम् ॥ २७ ॥
गम्भीरारक्तदृशं निर्भूषणलम्बकर्णपालीं च ।
कतिपयपाण्डुरचिकुरां प्रकटशिरासंततायतग्रीवाम् ॥ २८ ॥
सितधौतवसनयुगलां विविधौषधिमणिसनाथगलसूत्राम् ।
तन्वीमङ्गुलिमूले तपनीयमयीं च बालिकां दधतीम् ॥ २९ ॥
गणिकागणपरिकरितां कामिजनोपायनप्रसक्तदृशम् ।
आसन्द्यामासीनां विलोकयामास विकरालाम् ॥ ३०॥ (कुलकम्)
अथ सा विधाय दूरात्क्षितिमण्डललीनमौलिना प्रणतिम् ।
परिपृष्टकुशलवार्ता समनुज्ञातासनं भेजे ॥ ३१ ॥
अथ विरचितहस्तपुटा सप्रश्रयमासनं समुत्सृज्य ।
इदमूचे विकरालामवसरमासाद्य मालती वचनम् ॥ ३२ ॥
विदधासि हरिमकौस्तुभमहारिं हरिमगजनाथममरेन्द्रम् ।
अद्रविणं द्रविणपतिं नियतं मतिगोचरे पतितम् ॥ ३३ ॥
अयमेव बुद्धिविभवं हृतविभवस्ते पटच्चरावरणः ।
कामुकलोकः कथयति सत्त्रागारेषु भुञ्जानः ॥ ३४ ॥
उपसंहृतान्यकर्मा धनवर्मा नर्मदाङ्घ्रियुगलस्य ।
सकलसमर्पितसंपद्यदुपेतः पादपीठत्वम् ॥ ३५ ॥

---

१. 'तद्गद्वाम्' इति पा०. २. 'विकरालीम्' इति पा०. ३. 'विकरालीभवन-' इति पा०. ४. 'पालिं' इति पा०. ५. 'संनतायत-' इति पा०. ६. 'परिकलिताम्' इति पा०. ७. आसन्द्यां वेत्रासने इत्यर्थः.

यदुपगतो नयदत्तः सागरदत्तस्य मध्यमः पुत्रः ।
प्रीणाति मदनसेनां विधाय पितृमन्दिरं रिक्तम् ॥ ३६ ॥
यल्लीलार्पितचरणौ मञ्जर्या भट्टपुत्रनरसिंहः ।
परितोषं व्रजति परं मृदु मृद्नन्पाणियुगलेन ॥ ३७ ॥
यन्निःशेषितविभवो दीक्षितभवदेवपुत्रशुभदेवः ।
निर्भर्त्सितोऽपि नोज्झति केशवसेनागृहद्वारम् ॥ ३८ ॥
अन्या अपि कामिजनं साधारणयोषितो यदाक्रम्य ।
विदधति कर्पटशेषं विलसितमेतत्तवोपदेशानाम् ॥ ३९ ॥ (कुलकम्)
हीनान्वयजन्मानो गुणहीना रागिणो निराकृतयः ।
उपसेविता मयापि प्रकटीकृतरागसौष्ठवं पुरुषाः ॥ ४० ॥
मातः किं विदधामो हतधातुर्वामताभियोगेन ।
नामादयाम दृश्यं निजतनुपण्यप्रसारकेणापि ॥ ४१ ॥
तत्कुरु मातरनुग्रहमभिधत्स्व ममापि देहिनो भोग्यान् ।
तेषां च वशचेष्टितमनमिजशरजालपातनोपायान् ॥ ४२ ॥
इति गिरमुदीरयन्तीं मंप्रमामृश्य पाणिना पृष्ठे ।
रुचिरवचो विकराला रुचिराकृतिमालतीमूचे ॥ ४३ ॥ (कुलकम्)
अयमेव दह्यमानस्मरनिर्गतधूमवर्तिकाकारः ।
चिकुरभरस्तव सुन्दरि कामिजनं किंकरीकुरुते ॥ ४४ ॥
अयमेव ते कृशोदरि मन्दोल्लसितभ्रुविभ्रमाधारः ।
अधरीकरोति धीरान्मधुरस्मितसुभगवीक्षितविशेषः ॥ ४५ ॥
इयमेव दशनकान्ती रतिकान्ताकूतमतितरां कुरुते ।
श्रुतिपथमप्युपयाता नियतं तव कामिनां मनसि ॥ ४६ ॥
इयमेव दशनपङ्क्ती रुचिराचिरकान्तिदामसमकान्तिः ।
उत्पादयति नितान्तं तव मन्मथदाहवेदनां पुंसाम् ॥ ४७ ॥
इदमेव समुल्लपितं लीलावतिविजितपरभृतध्वनितम् ।
तव निःशेषभुजंगव्याकर्षणसिद्धमन्त्र उच्चरितः ॥ ४८ ॥

इदमेव मकरकेतननिकेतनं स्तनयुगं तवाभोगि ।
भोगवति भोगसाधनमपरोपायग्रहो व्यर्थः ॥ ४९ ॥
इदमेव बाहुयुगलं मृणालतनुसुन्दरं तवाभोगि ।
कस्य न जनयति मदनं कनकाङ्गदभूषणं सुतनु ॥ ५० ॥
अयमेव मध्यदेशः कंदर्पादेशकरणचतुरस्ते ।
प्रकृशोऽपि शरीरवतो दशमीं प्रापयति मन्मथावस्थाम् ॥ ५१ ॥
इयमेव रोमराजिः संकल्पजचापयष्टिगुणशोभाम् ।
दधती विदधाति तव स्मरमायकशल्यविक्लवान्यूनः ॥ ५२ ॥
इदमेव च पृथुजघनं[1] कलधौतशिलातलाभिरमणीयम् ।
तव तरुणि वशीकरणं यतिमंयतिनाशकारि करभोरु ॥ ५३ ॥
इदमेव तवोरुयुगं रम्भास्तम्भोपमं मनोहारि ।
वद सुन्दरि नाभिमतं मदनज्वरशान्तये कस्य ॥ ५४ ॥
यौवनकल्पतरोस्ते कनकलताविभ्रमं सुवृत्तमिदम् ।
जङ्घायुगलं नेच्छति कामफलप्राप्तये क इह ॥ ५५ ॥
निर्जितदाडिमरागं विजितस्थलकमलिनीविलासमिदम् ।
तव तरुणि चरणयुगलं कस्य न मानसमलंकुरुते ॥ ५६ ॥
ह्रेपयति वारणेन्द्रं हंसं हसति प्रयातमिदमेव ।
तव लीलावति ललितं यूनां हृदयानि मथ्नाति ॥ ५७ ॥
तदपि यदि ते कुतूहलमवधानं संविधाय[2] तनुमध्ये ।
आकर्णय कथयामि स्वबुद्धिविभवानुसारेण ॥ ५८ ॥
स्वीकुरु तावत्प्रथमं नृपसेवकभट्टसूनुमतियत्नात् ।
स्वाधीनामतिविपुलां यदि संपदमीहसे सुतनु ॥ ५९ ॥
प्रत्यासन्नग्रामे स्वयं प्रभुः पितरि नित्यकटकस्थे ।
भट्टसुतश्चिन्तामणिराकृष्टो भवति नियमेन ॥ ६० ॥
शृणु तस्य चारुहासिनि वेषग्रहणं च चेष्टितं चैव ।
निपतति तथा च तूर्णं प्रियसुरभिशरासनप्रसरे ॥ ६१ ॥

१. 'पृथुलजघनम्' इति पा०. २. 'संनिधाय' इति पा०.

स्थूलस्थापितचूडः पञ्चाङ्गुलमात्रकेशविन्यासः।
लम्बश्रवणनिवेशितकरपत्त्रकघटितदन्तपङ्क्तिश्च ॥ ६२ ॥

करशाखार्पितमुद्रिकचामीकरकण्ठसूत्रिकाभरणः।
परिमृष्टगात्रकुङ्कुमकिंचित्पिञ्जरितसर्वाङ्गः ॥ ६३ ॥

प्रविलम्बिकुसुमदामकगलमण्डनजातरूपकृतशोभः।
अन्तर्निविष्टसिक्थकतौरुष्किकखुम्भिकादिचरणत्रः ॥ ६४ ॥

नानावर्णविवेष्टितबहलदशापाशबद्धततकेशः।
एकस्मिन्दलवीटकमपरस्मिन्सीसपत्रकं कर्णे ॥ ६५ ॥

उच्चण्डकनकगर्भितकुङ्कुमपिञ्जरितवसनपरिधानः।
स्थूलतरकाचचक्रकमालां च गले दधानेन ॥ ६६ ॥

वृश्चिकरञ्जितकररुहकरमूलनिबद्धशङ्खचक्रेण।
प्रथमवयस्त्वं भजता ताम्बूलकरङ्कवाहिनानुगतः ॥ ६७ ॥ (कुलकम्)

श्रेष्ठिवणिग्विटकितवप्रधानरङ्गस्य सुमहतो मध्ये।
शूलापालस्थापितकतिपयबद्धोरुपीठिकासीनः ॥ ६८ ॥

उत्सङ्गार्पितखड्गैरयथातथभाषिभिर्मदौद्धत्यम्।
बिभ्राणैरनुजीविभिरधिष्ठितः पञ्चषैः पुरुषैः ॥ ६९ ॥

चतुरतरसेवकार्पितपृष्ठपरिक्षिप्तपूर्वदेहांशः।
अन्तर्भृतताम्बूलश्रोच्छूनकपोलकलितकरपर्णः ॥ ७० ॥

अनपेक्षितप्रसङ्गः पुनः पुनः पठति सोन्नतभ्रूकः।
गाथां श्लोकप्रायां भावितचेता यथातथाधीताम् ॥ ७१ ॥

विस्मयलोलितमौलिः पार्श्वगतांस्ताडयन्रसावेगात्।
हा कटु साध्विति वादैरन्तरयति परसुभाषितश्रवणम् ॥ ७२ ॥

---

१. 'दशनपङ्क्तिश्च' इति पा०. २. पिञ्जरितवसनसंवीतः' इति पा०. ३. 'सिक्थस्तौरुष्किकखुम्भकादिचरणान्तः' इति पा०. ४. 'विचेष्टित' इति पा०. ५. 'वस्त्रपरिधानः' इति पा०. ६. पुस्तकान्तरे 'विशेषकम्' इत्यस्ति. ७. देहार्धः. ८. 'ताम्बूलप्रोत्फुल्लकपोलकलित' इति पा०.

इदमुक्तो रहसि रुषा तातेन नृपो नृपेण तातोऽपि ।
इति पितुराविष्कुरुते महीभृतः प्रणयविश्वासौ ॥ ७३ ॥

पत्रच्छेदमजानञ्जानन्वा कौशलं कलाविषये ।
प्रकटयति जनसमाजे बिभ्राणः पत्रकर्तरीं सततम् ॥ ७४ ॥

ब्रह्मोक्तनाट्यशास्त्रे गीते मुरजादिवादने चैव ।
अभिभवति नारदादीन्प्रावीण्यं भट्टपुत्रस्य ॥ ७५ ॥

वसुनन्दचित्रदण्डकमुग्धायुधखड्गधेनुबन्धेषु ।
त्यजति पुरतोऽस्य नित्यं भार्गवतां परशुरामोऽपि ॥ ७६ ॥

वात्स्यायनमयमबुधं बाह्यान्दूरेण दत्तकाचार्यान् ।
गणयति मन्मथतन्त्रे पशुतुल्यं राजपुत्रं च ॥ ७७ ॥

प्रपलायनैकहृदये यो विक्रममातनोति हरिणेऽपि ।
सिंहस्य तस्य शौर्यं त्रपाकरं भवति भट्टपुत्रस्य ॥ ७८ ॥

आखेटकेऽपि कौतुकमस्त्येव जयश्च चललक्ष्ये ।
भट्टतनयेन खेलति भट्टसुतः किं त्वतिप्रकटम् ॥ ७९ ॥

इति निजसेवकनिगदितरमणीयवचःश्रवणपरितुष्टा ।
अन्तर्मुदिता ब्रूते मामेव खलीकरोतीति ॥ ८० ॥ (संदानितकम्)

कतमत्कतमच्छत्रं प्रस्थाने का च नर्तकी भर्ता ।
विटखटके का नृत्यति कोहलभरतोदितक्रियया ॥ ८१ ॥

कीदृक्षो नयमार्गे धेनुकरचिते च तालके कीदृक् ।
प्रेङ्खणकादावेवं पृच्छति नृत्योपदेशकं यत्नात् ॥ ८२ ॥

---

१. कामसूत्रकर्ता वात्स्यायनः प्रसिद्ध एव. २. कामशास्त्राङ्गभूतस्य वैशिकसंज्ञकस्य षष्ठाधिकरणस्य पृथक्कर्ता दत्तकाचार्यो वात्स्यायनादपि पूर्वकाले पाटलिपुत्रनगरे बभूवेति वात्स्यायनीयकामसूत्रतो जयमङ्गलाख्यतट्टीकातश्च ज्ञायते. 'दन्तिलाचार्यान्' इति पा०. ३. राजपुत्रोऽपि कश्चन कामशास्त्राचार्य एव स्यात्. किं तु नाद्यापि ज्ञातः. ४. 'न्वति' इति पा०. ५. 'परितुष्टया' इति पा०. ६. कोहलो नाम कश्चन नाट्यशास्त्राचार्यः. तद्ग्रन्थस्थाः केचन श्लोका मुरारीनाटकादिटीकासूपलभ्यन्ते. भरतस्तु प्रसिद्ध एव. ७. 'ईदृक्षे' इति पा०. ८. 'तानके' इति पा०.

सुमनोमालां कण्ठात्सादरचेता ददाति नर्तक्यै ।
अपनीय सताम्बूलामनवसरे साधुवादं च ॥ ८३ ॥
भुजपतनमात्रसंस्थितिलालित्योद्वहनपार्श्ववलितानि ।
अनयैव निर्मितानि स्थानकशुद्धिश्च चातुरश्र्यं च ॥ ८४ ॥
प्रविभक्तैर्भावरसैरभिनयभक्त्या परिक्रमैश्चित्रैः ।
रम्भामप्यतिशेते किमुतेतरनर्तकीलोकम् ॥ ८५ ॥
इत्यपसारकविरतादविरतमुच्छलितकण्ठमत्युच्चैः ।
वर्णयति भावितात्मा लक्षितपदमात्रया पीतम् ॥ ८६ ॥
प्रायेण भट्टतनयो भवतीदृशवेषचेष्टितो भद्रे ।
तं मदनबाणगणान्तः पातयामि यथा तथा ब्रूमः ॥ ८७ ॥
चतुरा प्रागल्भ्यवती परचित्तज्ञानकौशलोपेता ।
योज्या तस्मिन्दूती वक्रोक्तिविभूषिता प्रयत्नेन ॥ ८८ ॥
समुपेत्य तयावसरे ताम्बूलं सुमनसश्च दत्त्वेत्थम् ।
अभिधातव्यः सुन्दरि मकरध्वजदीपकैर्वचनैः ॥ ८९ ॥
जन्मसहस्रोपचितैः पुण्यचयैरद्य फलितमस्माकम् ।
यस्त्वं नयनानन्दन नयनावसरं समेतोऽसि ॥ ९० ॥
चाटुक्रमसनुरागं प्रणयरुषौ विरहजनितशोकार्तिम् ।
प्रकटयति वाररमणी नटीव शिक्षाभियोगेन ॥ ९१ ॥
प्रवयसि यौवनशालिनि हीनकुले सत्कुलप्रसूते च ।
रोगवति दृढशरीरे समचित्ता योगिनश्च गणिकाश्च ॥ ९२ ॥
उपचरिताप्यतिमात्रं पण्यवधूः क्षीणसंपदः पुंसः ।
पातयति दृशं व्रजतः स्पृहया परिधानमात्रेऽपि ॥ ९३ ॥
इत्थं दृढतरवासितमनसां पुंसामसांप्रतं पुरतः ।
वेशविलासवतीनामशरीरशरव्यथाकथनम् ॥ ९४ ॥ (कुलकम्)

१. 'चातुरस्र्यम्' इति, 'चातुरस्यं च' इति च पा०. २. 'अभिनव' इति पा०. ३. 'यातम्' इति पा०. ४. 'इदम्' इति पा०. ५. 'चाटूक्ति सानुरागं' इति पा०. ६. 'विरचयति' इति पा०. ७. 'गणिका च' इति पा०. ८. 'युक्तम्' इति पा०. ९. 'कुरुते' इति पा०.

केवलमगणितलाघवदूरपरित्यक्तधीरताभरणा ।
मुखरयति मां दुराशा दग्धवती तेन कथयामि ॥ ९५ ॥
[1]हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ लोचनविषयं त्वया [2]भजता ॥ ९६ ॥
क्षणमुत्कण्टकिताङ्गी क्षणमुल्बणदाहवेदनायत्ता ।
क्षणमुपजातोत्कम्पा स्वेदार्द्रवपुः क्षणं भवति ॥ ९७ ॥
[3]दूरविभावितकार्श्या मुहुरुज्झितधीरभावमत्युच्चैः ।
[4]रोदिति गायति हृष्यति मुह्यति च स्तम्भिनी भवति ॥ ९८ ॥
पतति मुहुः पर्यङ्के मुहुरङ्के परिजनस्य मुहुरवनौ ।
किसलयकल्पिततल्पे मुहुरम्भसि मुहुरनङ्गसंतप्ता ॥ ९९ ॥
महिषीव पङ्कदिग्धा हंसीव मृणालवलयपरिवारा ।
सुभग मयूरीवासौ [5]भुजंगविद्वेषिणी जाता ॥ १०० ॥
कदलीचम्पकचन्दनपङ्केरुहनीरहार[6]घनसारम् ।
सुन्दर शशधर[7]कान्तं नो शान्त्यै मदनहुतभुजस्तस्याः ॥ १०१ ॥
अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ १०२ ॥
[8]संकल्पैरुपनीतं त्वामन्तिकमुल्लसन्मनोवृत्तिः ।
दृढमालिङ्गति पश्चात्स्वभुजापीडेन याति वैलक्ष्यम् ॥ १०३ ॥
कुसुमामोदी पवनः पिककूजितभृङ्गसार्थरसितानि ।
इयमियती सामग्री घटिता [9]विधिनैव तद्विनाशाय ॥ १०४ ॥

---

१. 'हृदयम्' इत्यार्या काव्यप्रकाशे दशमोल्लासेऽतिशयोक्तिप्रकरण उदाहृतास्ति. तत्र
ाव्यप्रकाशटीकाकाराणां प्रायो भ्रम एव जातः. मालतीमाधवस्थामिमां जानन्कमला-
रभट्टो व्याख्यातवान्. 'मालत्याः' इत्यस्य स्थाने 'मालव्याः' इति पाठं कल्पयित्वा माल-
कामिमिन्नस्यामिमां कलयन्महेश्वरो व्याख्याति स्म. एवमन्येऽपि. २. 'व्रजता' इति
ा०. ३. 'मुहुरविभावितहास्या' इति पा०. ४. 'रोदिति गायति च पुनः पुनश्च मौनाव-
म्बिनी भवति' इति पा०. ५. भुजंगाः सर्पा विटाश्च. ६. 'घनसाराः' इति पा०.
. 'कान्तौ' इति पा०. ८. उदाहृतेयमार्या काव्यप्रकाशस्याष्टमनवमोल्लासयोः. ९. 'दैवेन'
ति पा०.

अबलां बलिना नीतां दशामिमां मकरकेतुना रक्ष।
आपद्यबलोद्धृतये भवति हि शुभजन्मनां जन्म॥ १०५॥
नो गृह्णन्ति यथार्थानर्थिजनैर्निगदिता गिरः प्रायः।
मालत्या गुणलेशं शृणु धृष्टतया तथापि कथयामि॥ १०६॥
आस्फालयता नूनं धनुरतनोः कौसुमं रजः पतितम्।
संगृह्य सा मृगाक्षी विश्वसृजा निर्मिता तेन॥ १०७॥
उपहसति गिरिसुताया लावण्यं येन सततलग्नेन।
न द्रवतामुपनीतं भोगीन्द्रविभूषणस्य देहार्धम्॥ १०८॥
शशधरबिम्बाधिगतां छायामिव सैंहिकेयवदनस्य।
अलिपटलनीलकुटिलामलकावलिमलिकसंनिधौ वहति॥ १०९॥
सगमिजमस्थिरशोभं विभ्रमरहितं च मण्डलं शशिनः।
केन समेतु समत्वं हृदयप्रिय मालतीवदनम्॥ ११०॥
अलिरपि तदीक्षणयोर्भ्रान्त्वा सौगन्ध्यसूचितविशेषः।
निपतति कर्णाम्बुरुहे निर्गुणताप्यवसरे साध्वी॥ १११॥
बिभ्राणेऽरुणिमानं सहजं जितबन्धुजीवरुचिमधरे।
यदलक्तकाविन्यसनं तत्तस्या मण्डनक्रीडा॥ ११२॥
चित्रमिदं यदि कृशता तस्या बलिपरिगृहीतमध्यस्य।
अथवा नो विधिविहिता महताप्यपनीयते तनुता॥ ११३॥
आस्तामपरस्तावत्तस्याः स्मरवंसातिपृथुतरनितम्बः।
श्लथयति कपिलमुनेरपि दृक्पथपतितः समाधानम्॥ ११४॥
तस्या रम्भावपुषा रम्भोपममूरुयुगलमवलोक्य।
मकरध्वजोऽपि सहसा निजसायकलक्ष्यतां याति॥ ११५॥
जघनभरालसयाता नोयाता सा विलोचनावसरम्।
तिष्ठति तेन मनोहर शरजन्मा ब्रह्मचर्येण॥ ११६॥

---

१. 'आपत्पाततोद्धृतये' इति पा०. २. 'संहृत्य सा सुमध्या विश्वसृजा निर्मिता जगति' इति पा०. ३. 'निहिता' इति पा०. ४. 'वसतिः' इति पा०. ५. 'नो याता' इति पा०. ६. कार्तिकेयः.

यदि कथमपि मधुमथनः पश्यति तामसमबाणसर्वस्वम् ।
तदसारभारभूतामिव लक्ष्मीमुरसि विनिहितां मनुते ॥ ११७ ॥
यदि पतति सा कथंचिद्वीक्षणविषये हरस्य तदवश्यम् ।
त्रिभुवनमशिवं कुरुते वामेतरदेहभागमासाद्य ॥ ११८ ॥
सौन्दर्यं तत्तादृशमशेषयोषिद्विलक्षणं सृजतः ।
यन्निष्पन्नं धातुस्तन्मन्ये काकतालीयम् ॥ ११९ ॥
सहजविलासनिवासं तस्या वपुरनभिवीक्षमाणस्य ।
मन्ये नाकाधिपतेः सहस्रमपि चक्षुषां विफलम् ॥ १२० ॥
शिथिलयतु कुसुमचापं क्षिपतु शरान्बाणधौ मनोजन्मा ।
संसारसारभूता विचरति भुवि मालती यावत् ॥ १२१ ॥
वात्स्यायनमदनोदयदत्तकविटपुत्रराजपुत्राद्यैः ।
उद्दिष्टं यत्किंचित्तत्तस्या हृदयदेशमध्यास्ते ॥ १२२ ॥
भरतविशाखिलदन्तिलवृक्षायुर्वेदचित्रमन्त्रेषु ।
पत्रच्छेदविधाने भ्रमकर्माणि पुस्तसूदशास्त्रेषु ॥ १२३ ॥
आतोद्यवादनविधौ नृत्ते गीते च कौशलं तस्याः ।
अभिधातुं यदि शक्तो वदनसहस्रेण भोगिनामीशः ॥ १२४ ॥ (कुलकम्)
परिगलदालोलांशुकमपयन्त्रणमुरसि मालती रभसात् ।
निपतति नापुण्यवतां रतिलालसमानसा रहसि ॥ १२५ ॥
रतिरमरभसास्फालनचलवलयनिनादमिश्रितं तस्याः ।
तत्कालोचितमणितं श्रुतिपथमुपयाति नाल्पपुण्यस्य ॥ १२६ ॥
इत्थमभिधीयमानः शुभमध्ये यदि भवेदुदासीनः ।
एवं ततोऽभिधेयः संदर्शितकोपया दूत्या ॥ १२७ ॥
किं सौभाग्यमदोऽयं यौवनलीलाभिरूपतादर्पः ।
सहजप्रेमोपनतां मालतिकां न बहु मन्यसे येन ॥ १२८ ॥

१. 'तदसारभूतमेव स लक्ष्मीवपुरुरसि विनिहितं मनुते' इति पा०. २. 'विषयम्' इति पा०. ३. वात्स्यायनादयः कामशास्त्रकाराः. ४. 'विप्रपुत्रेषु' इति पा०. ५. 'उपरि' इति पा०. ६. 'मणितं रतिकूजितम्'. 'भणितम्' इति, 'रणितम्' इति च पा०.

न गणयति या कुलीनान्द्रविणवतः शास्त्रवेदिनः प्रणतान् ।
सा भवदर्थे शुष्यति कुस्थाननिवेशितं धिगनुरागम् ॥ १२९ ॥
कमलवती तीव्ररुचौ बहुभस्मनि शंभुशिरसि शशिलेखा ।
सा च त्वयि पशुकल्पे यदभिरता तेन मे कृशता ॥ १३० ॥
अमरलमरसं कठिनं दुर्ग्रहमस्निग्धमाश्रिता खदिरम् ।
यदुपैति वाच्यपदवीं मालतिका तत्किमाश्चर्यम् ॥ १३१ ॥
अथवा कः खलु दोषो यदतुल्यतयोपजनितवैलक्ष्यः ।
स्वाधीनामपि सरमां परिहरति मृणालिकां ध्वाङ्क्षः ॥ १३२ ॥
मात्र करिष्यसि खेदं निष्ठुरमुक्तोऽसि यन्मया सुभग ।
यूनां हि रक्ततरुणीसुहृदभिहितपरुषमाभरणम् ॥ १३३ ॥
चन्द्रमसेव ज्योत्स्ना कमासुरवैरिणेव वनमाला ।
कुसुमशरागमनलतिका कुसुमाकरवल्लभेनेव ॥ १३४ ॥
मदलीला हलिनेव स्तनयुगलेनेव हारलता ।
रम्यापि सा सुगात्री रम्यतरा भवतु संगता भवता ॥ १३५ ॥
किं बहुना यदि यूनामुपरि विधातुं समीहसे चरणम् ।
तत्कुरु रमणीरत्नं प्रेमोज्ज्वलसंगतं तूर्णम् ॥ १३६ ॥
अथ तद्वचनश्रवणप्रविजृम्भितमदनभट्टदायादः ।
उपचरणीयः सुन्दरि निजवमतिमुपागतस्त्वयाप्येवम् ॥ १३७ ॥
दूरादभ्युत्थानं प्रणमनमात्मासनप्रदानं च ।
प्रविधेयमञ्चलेन प्रस्फोटनमङ्घ्रियुगलस्य ॥ १३८ ॥
ईषदयत्नप्रकटितकक्षोदरबाहुमूलकुचयुगलम् ।
संदर्श्य झटिति यास्यामि नायकदृग्गोचरात्तूर्णम् ॥ १३९ ॥
अथ पर्यङ्कसनाथं दीपोज्ज्वलकुसुमधूपगन्धाढ्यम् ।
विततवितानकरम्यं प्रवेशितो वासकागारम् ॥ १४० ॥

१. 'अलसम्' इति पा०. २. मालतीनाम लताविशेषः. ३. मा-अत्र. ४. 'हारलतिका च' इति पा०. ५. 'साधुगात्री' इति पा०. ६. 'श्रवणात्परिजृम्भितमदन-' इति पा०. प्रविजृम्भितमदनश्चासौ भट्टदायादो भट्टसुतः. ७. 'कुचभागम्' इति पा०. ८. 'दृग्गोचरात् तूर्णम्' इति पा०. ९. 'वासकावासम्' इति पा०.

मात्रा ते गुरुजघने सादरमवतारणादिकं कृत्वा ।
अभिनन्दनीय एभिर्वचनविशेषैः प्रयत्नेन ॥ १४१ ॥ (कुलकम्)
अद्याशिषः समृद्धाः परितुष्टा इष्टदेवता अद्य ।
कल्याणालंकारो यदलंकृतवानिदं वेश्म ॥ १४२ ॥
अनुरूपपात्रघटनं कुर्वाणस्याद्य कुसुमबाणस्य ।
सुचिराद्भत संजातः शरासनाकर्षणश्रमः सफलः ॥ १४३ ॥
विन्यस्य शिरसि चरणं सुभगा गणिकाजनस्य सकलस्य ।
सौभाग्यवैजयन्तीं संप्रति वत्सा समुत्क्षिपतु ॥ १४४ ॥
दुहितर एव श्लाघ्या धिग्लोकं पुत्रजन्मसंतुष्टम् ।
जामातर आप्यन्ते भवादृशा यदभिसंबन्धात् ॥ १४५ ॥
दृढपरिचया गुणज्ञा भवद्विधा मानदा यदपि ।
तदपि हृदयाभिनन्दन दुहितृस्नेहादहं वक्ष्ये ॥ १४६ ॥
सहजप्रेमोपनता न्यस्ता त्वयि मालती तथा कार्यम् ।
न यथा भवति वराकी त्वद्विप्रियजन्मनां शुचां वसतिः ॥ १४७ ॥
मृदुधौतधूपिताम्बरमग्राम्यं मण्डनं च बिभ्राणा ।
परिपीतधूपवर्तिः स्थास्यसि रमणान्तिके सुतनु ॥ १४८ ॥
सस्नेहं सव्रीडं ससाध्वसं सस्पृहं च पश्यन्ती ।
किंचिद्दृश्यशरीरा प्रविरलपरिहासपेशलालापा ॥ १४९ ॥ (युग्मम्)
मातरि निर्यातायां परिजनमुक्ते च वासकस्थाने ।
अभियुञ्जाने रमणे वामाचरणं क्षणं कार्यम् ॥ १५० ॥
रतिसंगरविहितमतावाकर्षति रभसतः पुरस्तस्मिन् ।
कुट्टमितमाचरन्ती जनयिष्यसि किंचिदङ्गसंकोचम् ॥ १५१ ॥

१. 'मात्रा ते गुरुलाघवसादरमपवारणं कृत्वा' इति पा०. २. 'घटनाम्' इति पा०. ३. 'अचिरात्' इति पा०. ४. 'शरासनस्य श्रमः' इति पा०. ५. 'वेश्याजनस्य' इति पा०. ६. 'परितुष्टम्' इति पा०. ७. 'नार्थनार्हाः स्युः' इति पा०. ८. 'च नयनानन्दन' इति पा०. ९. 'वच्मि' इति पा०. १०. 'रमणे निजे' इति पा०. ११. 'पुनः' इति पा०. १२. 'केशाधरादिग्रहणे मोदमानेऽपि मानसे । दुःखितेव बहिः कुप्येदेतत्र कुट्टमितं हि तत् ॥' इति.

प्रारब्धे सुरतविधौ क्रमदर्शितचित्तयोनिसंवेगा ।
अपशङ्कमर्पयिष्यामि निर्व्याजं पुत्रि गात्राणि ॥ १५२ ॥
यावद्वाञ्छति हन्तुं यद्द्रष्टुं यच्च विलिखितुं गात्रम् ।
तत्तदपमार्गणीयं सावेगं ढौकनीयं च ॥ १५३ ॥
दंशे सव्यथहुंकृतिमामर्दे विविधकण्ठरसितानि ।
नखविलिखने च सीत्कृतिमाघातेपूल्बणं क्वणितम् ॥ १५४ ॥
दत्त्वायामश्वासान्मुञ्चन्ती पुलकदन्तुरशरीरा ।
स्विद्यत्सकलावयवा प्रकरिष्यामि रागवृद्धये पुंसाम् ॥ १५५ ॥ (युग्मम्)
परभृतलावकहंसकपारावततुरगहृदयनिःस्वनितम् ।
अनुकार्यमुचितकाले कलकण्ठि रुतैस्त्वया रमतः ॥ १५६ ॥
मा मा मामतिपीडय मुञ्च क्षणमदय नो समर्थास्मि ।
इति गद्गदास्फुटाक्षरमभिधातव्यस्त्वया कामी ॥ १५७ ॥
अनुबन्धमानकृत्यं वामत्वं प्रौढतामसामर्थ्यम् ।
सुरतेषु दर्शयिष्यामि कामुकभावं स्वयं बुद्ध्वा ॥ १५८ ॥
असमञ्जसमश्लीलं दूरोज्झितधैर्यमविनयप्रसरम् ।
व्यवहारमाचरिष्यामि वृद्धिमुपेते रसावेगे ॥ १५९ ॥
आवर्तिततनखरक्षतिरामीलितलोचना निरुत्साहा ।
नायककार्यसमाप्तौ स्थास्यामि शिथिलीकृतावयवा ॥ १६० ॥
प्रगलित निवसनावरणं निःसहतनुतां स्मितं सवैलक्ष्यम् ।
खेदालसां च दृष्टिं जनयिष्यामि मोहनच्छेदे ॥ १६१ ॥
वृत्ते रताभियोगे स्पृष्ट्वा सलिलं विविक्तभूभागे ।
प्रक्षाल्य पाणिपादं स्थित्वा क्षणमासने संमृह्य कचान् ॥ १६२ ॥

---

१. चित्तयोनिः कामः. २. 'संयोगा' इति पा०. ३. 'नखरक्षतेषु सीत्कृतम्' इति पा०. ४. 'सर्वावयवा प्रचरिष्यासि रागमृद्धये' इति पा०. ५. 'निःश्वसितम्' इति पा०. ६. 'प्रौढभावसामर्थ्यम्' इति पा०. ७. 'स्फुटम्' इति पा०. ८. 'रतावसरे' इति पा०. ९. 'आवर्दित' इति पा०. १०. 'समाहते' इति पा. ११. मोहनं सुरतम्. १२. 'विक्तभूभागे' इति पा०. १३. 'समाये' इति पा०.

उपयुक्तैर्[1]दनवासा शय्यामारुह्य[2] दर्शितप्रणया ।
इति वक्ष्यामि तं रमणं दृढतरमालिङ्ग्य रभसतः कण्ठे ॥ १६३ ॥ (युग्मम्)

भट्टसुत[3] नूनमिष्टा तैव जाया[4] यदनुरक्तहृदयस्य ।
जनयति परितुष्टिमलं नापररामापरिष्वङ्गः ॥ १६४ ॥

सफलं तस्या जन्म स्पृहणीया सैव सकलललनानाम् ।
गौरी तयैव महिता [illegible] सुभगंकरणं तपस्तया चरितम् ॥ १६५ ॥

सैवैका गुणवसतिस्तस्या एवान्वयः सदा[5] श्लाघ्यः ।
यस्याः शुभशतभाजः पाणिग्रहणं त्वया विहितम् ॥ १६६ ॥

तिष्ठतु[6] सा पुण्यवती वंशद्वयभूषणं वरारोहा ।
या नापयाति भवतो लक्ष्मीरिव नरकवैरिणो [illegible] ॥ १६७ ॥

पातयसि कुवलयनिभे कौतुकमात्रेण लोचने यासु ।
ता अपि सत्यं सुन्दर हर्षोच्छलिता[7] न मान्ति गात्रेषु ॥ १६८ ॥ (मंदानितकम्)

तनुरपि नाथप्रणयः प्रायो मुखरीकरोति लघुमनसः ।
स्वार्थ[8]निवेशितचित्ता करोमि तेऽभ्यर्थनां तेन[9] ॥ १६९ ॥

तीव्रस्मरतारुण्याच्चापलतः कौतुकेन घृणया वा ।
मद्भाग्यसंपदा वा दूत्या वा कौशलात्स्वभावाद्वा[10] ॥ १७० ॥

योऽयं प्रेमलवांशः प्रदर्शितोऽस्मासु जीवनोपायः ।
बाधा नात्र विधेया गणिकाजनभावमन्यथा बुद्ध्वा ॥ १७१ ॥ (युग्मम्)

येन[12] स्नेहः क्रोधः शाठ्यं दाक्षिण्यमार्जवं व्रीडा ।
एतानि सन्ति तास्वपि जीवद्धर्मोपनीतानि ॥ १७२ ॥

निर्व्याजसमुत्पन्नप्रबलप्रेमाभिभूतहृदयानाम् ।
दयितविरहाक्षमाणां गणिकानां तृणसमाः प्राणाः ॥ १७३ ॥

---

१. ‘वदन’ इति पा०. २. ‘अधिरुह्य’ इति पा०. ३. ‘भद्रसुत’ इति पा०. ४. ‘जाया ते’ इति पा०. ५. ‘सदा’ इति पुस्तकान्तरे नास्ति. ६. ‘तिष्ठति’ इति पा०. ७. ‘हर्षोल्लसिता’ इति पा०. ८. ‘अर्थ’ इति पा०. ९. ‘प्रकरोम्यभ्यर्थनाम्’ इति पा०. १०. ‘प्रणयाद्वा’ इति पा०. ११. ‘हृदयम्’ इति पा०. १२. ‘यत्र’ इति पा०.

अत्राकर्णय साद्भुतमाख्यानं वर्णयामि यद्वृत्तम्।
अद्यापि बिभर्ति वटो विशेषणं यदभिसंबन्धात् ॥ १७४ ॥
'अस्ति महीतलतिलकं सरस्वतीकुलगृहं महानगरम्।
नाम्ना पाटलिपुत्रं परिभूतपुरंदरस्थानम् ॥ १७५ ॥
त्रिभुवनपुरनिष्पादनकौशलमिव पृच्छतो विरिञ्चस्य।
दर्शयितुं निजशिल्पं वर्णकमिव विश्वकर्मणा विहितम् ॥ १७६ ॥
अश्रेयोभिरनाश्रितमभिभूतं नाभिभूतिदोषेण।
नं स्वीकृतमुपसर्गैः कलिकालमलैरनालीढम् ॥ १७७ ॥
पातालतलं भोगिभिरम्भोधिर्विविधरत्नसंघातैः।
सुरसदनं विबुधगणैर्द्रविणोपचयैः पुरं कुबेरस्य ॥ १७८ ॥
महिलाभिरसुरविवरं कटकं हि हिमाचलस्य गन्धर्वैः।
हरिनगरं क्रतुयूपैः शमविभवैर्मुनिजनस्थानम् ॥ १७९ ॥
तिष्ठन्तु सकलशास्त्रव्यालोकनविमलबुद्धयो विप्राः।
सदसद्गुणनिर्णीतौ ललना अपि निकषभूमयो यत्र ॥ १८० ॥
कलिकालोदितभीत्या क्रतुहुतवहधूमकम्बलावरणः।
तिष्ठन्निभृतोऽपि वृषश्चरितैरनुमीयते यत्र ॥ १८१ ॥
अपहरति पिधातुमिव स्वकलङ्कं शशधरः प्रसार्य करान्।
रात्रौ यत्र वधूनां लावण्यं वदनकोपेभ्यः ॥ १८२ ॥
तिमिरपटलामिताम्बरमपहरदभिसारिकाजनौघस्य।
निजतनुकान्तिवितानं वल्लभसंभोगविहितये यत्र ॥ १८३ ॥
यत्र नितम्बवतीनां विचलन्नयनान्तशितशरैर्व्रणितः।
शिथिलयति पथिकलोकः स्वकलत्रसमागमोत्कण्ठाम् ॥ १८४ ॥
यत्र च कुलमहिलानामल्पत्वं वचसि पाणिपादे च।
स्वच्छत्वमाशये च व्यालोलत्वं विशालनेत्रे च ॥ १८५ ॥

१. न्यग्रोधवृक्षः. २. 'अस्वीकृतम्' इति पा०. ३. 'निचयैश्च' इति पा०. ४. 'रमणीभिः' इति पा०. ५. 'सुर' इति पा०. ६. धर्मः. ७. 'विहितये' इति, 'विहतये' इति च पा०. ८. 'विचलन्नयनासु' इति पा०. ९. 'आशयेषु' इति पा०

स्तनजघनचिकुरभारे घनता जीवेशसहजरागे च।
कुलदेवतार्चनविधौ बलिशोभा मध्यभागे च ॥ १८६ ॥
गम्भीरता स्वभावे चेतोभवबाणतूणनाभौ च।
विस्तीर्णता नितम्बे गुरुजनपूजानुरक्तचित्ते च ॥ १८७ ॥
हरिणायतेक्षणानां विच्छित्तिः कोपहरणमन्त्रेषु।
कुटिलत्वमलकपङ्क्तौ बालानां कामचेष्टितं यत्र ॥ १८८ ॥
संयमनमिन्द्रियाणामिनोपघातग्रहस्तमिस्त्रस्य।
स्तब्धत्वं तालतरौ हारलतास्तरलसंगता यस्मिन् ॥ १८९ ॥
भुजगाः पररन्ध्रदृशः खण्ड्यन्ते प्रियतमाधरा यत्र।
सूचीव्यथानुभूतिर्नृत्याभ्यासप्रवृत्तानाम् ॥ १९० ॥
नतवपुरप्यतिसरला मन्थरगमनापि नर्मदा यस्मिन्।
गुरुजनशास्त्ररतापि स्वभावसुभगाङ्गनाजनता ॥ १९१ ॥
तस्मिन्मखशतपूतः पुरुहूत इव द्विजन्मनां प्रवरः।
गुरुरिव विद्यावसतिर्वसति स्म पुरंदरो नाम्ना ॥ १९२ ॥
धर्मात्मजस्य सत्यं त्रिपुररिपोर्विजितकुसुमचापत्वम्।
हरिनाभिपङ्कजभुवो नियतेन्द्रियतां जहास यः सततम् ॥ १९३ ॥
न्यक्कृतरूप इति शर्वे याचक इति कौस्तुभाभरणे।
पीडितवसुधासुत इति कपिले न बभूव यस्य बहुमानः ॥ १९४ ॥
मार्गानुगतौ लुब्धो यः प्राणिवपुर्विनाशविमुखोऽपि।
परिहृतपरदारोऽपि स्वाकाङ्क्षितगुरुजनप्रमदः ॥ १९५ ॥
यस्यान्वये महीयसि सरसीव समस्तसत्त्वनिजवसतौ।
सच्चरितजन्मभूमौ विनिवारितकलिमलप्रसरे ॥ १९६ ॥

---

१. 'पीनपयोधरभारे' इति पा०. २. 'रागेषु' इति पा०. ३. 'मध्यदेशे च' इति पा०. ४. 'अब्जेषु' इति पा०. ५. 'सूची तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे' इति मेदिनी. ६. 'प्रथमः' इति पा०. ७. 'चरितेन पङ्कजभुवो जितेन्द्रियत्वम्' इति पा०. ८. 'मार्गानुसृतौ' इति पा०; (पक्षे) मार्गस्य मृगसमूहस्य. लुब्धो व्याधः.

पितृतर्पणप्रसङ्गे खड्गग्रहणं न शौर्यदर्पे च।
त्रुटनं मेखलिकानां वटुकजने नो रताभिसंमर्दे ॥ १९७ ॥
श्रुतिभेदेषु विवादो नो रिक्थविभागमन्युना कलितः।
तेजस्विता हविर्भुजि न शमैकरतेषु भूमिदेवेषु ॥ १९८ ॥
जरतामेव स्खलनं जपतामेवाधरस्फुरणम्।
यजतामेव समिद्रुचिरेणाजिन एव कृष्णसंपर्कः ॥ १९९ ॥
तस्याभूत्सकलकलोद्भासितपक्षद्वयस्य सुत एकः।
नाम्ना सुन्दरसेनः कच इव वचसामधीशस्य ॥ २०० ॥
पशुपतिनयनहुताशनभस्मितमवधार्य यं वपुष्मन्तम्।
अपरमिव कुसुमचापं रतिरतये निर्ममे धात्रा ॥ २०१ ॥
तिष्ठन्तु तावदन्याः कुलललना यस्य रूपमवलोक्य।
सापि महामुनिदयिता कृच्छ्रेण ररक्ष चारित्रम् ॥ २०२ ॥
कलधौतफलकशोभां बिभ्राणं यस्य पृथुतरं वक्षः।
दृष्ट्वा चिराय लक्ष्मीर्हरिहृदये दुःस्थितिं मेने ॥ २०३ ॥
कथमार्द्रता दिनकृतः शशिशकलैरथ कृतः कथं व्यथकः।
इत्थं यमीक्षमाणो निर्णयमगमन्न कामिनीसार्थः ॥ २०४ ॥
यो जग्राह हिमांशोः प्रसन्नमूर्तित्वमचलतः स्थैर्यम्।
जलधरत उन्नतत्वं गाम्भीर्यं यादसां पत्युः ॥ २०५ ॥
यो विनयस्य निवासो वैदग्ध्यस्याश्रयः स्थितेः स्थानम्।
प्रियंवाचामायतनं निकेतनं साधुचरितस्य ॥ २०६ ॥
यो मदनः प्रमदानां तुहिनकरः साधुकुमुदखण्डस्य।
निकषोपलो गुणानां मार्गतरुः पथिकलोकस्य ॥ २०७ ॥

---

१. गण्डकाख्यप्राणिविशेषशृङ्गनिर्मितपात्रेण पितृतर्पणं कुर्वन्ति. २. 'विभागजनितमन्यूनाम्' इति पा०. ३. 'पठताम्' इति पा०. ४. एधसां युद्धानां चाभिलाषः. ५. बृहस्पतेः पुत्रः कचः. ६. अरुन्धत्यनसूया वा. ७. 'शकलशोभाम्' इति पा०. ८. 'मनुते' इति पा०. ९. 'कथमीदृग्यदि न कृतः' इति पा०. १०. 'प्रियवचसाम्' इति पा०.

सज्जनगोष्ठीनिरतः काव्यकथाकनकनिकषपाषाणः ।
प्रणयिजनकल्पवृक्षो लक्ष्मीलीलाविहारभूमिश्च ॥ २०८ ॥
जलधिरिव तुहिनभासः सहवृद्धिपरिक्षयः सुहृत्तस्य ।
सकलोपधाविशुद्धो बभूव गुणपालितो नाम्ना ॥ २०९ ॥
तेन समं स कदाचित्तिष्ठन्रहसि प्रसङ्गतः पतिताम् ।
केनापि गीयमानामशृणोदार्यामिमां सहसा ॥ २१० ॥
'देशान्तरेषु वेषस्वभावभणितानि ये न बुध्यन्ते ।
समुपासते न च गुरून्विषाणविकलास्त उक्षाणः ॥ २११ ॥'
आकर्ण्याथ तमूचे वचनमिदं सुन्दरः सुहृन्मुख्यम् ।
शोभनमेतद्गीतं गुणपालित साधुनानेन ॥ २१२ ॥
साधूनामाचरितं खलचेष्टां विविधलोकहेवाकान् ।
नर्म विदग्धैर्विहितं कुलटाजनवक्रकथितानि ॥ २१३ ॥
गुरुगूढशास्त्रतत्त्वं विटवृत्तं धूर्तवञ्चनोपायान् ।
वारिधिपरिखां पृथ्वीं जानाति परिभ्रमन्पुरुषः ॥ २१४ ॥(युगलकम्)
अत उज्झित्य गृहस्थितिसुखलेशं विविधलाभपरिणामे ।
स्थापय गमनारम्भे वयस्य हृदयं मया सहितः ॥ २१५ ॥
इत्थं निगदितवन्तं सुहृदुत्तरलाभलालसात्मानम् ।
ऊचे सुन्दरसेनं लज्जित इव सहचरो वचनम् ॥ २१६ ॥
अभ्यर्थनानुबन्धो लज्जाकर एव मादृशां किं तु ।
आकर्णय कथयामः पथिकानां यानि दुःखानि ॥ २१७ ॥
कर्पटकावृतमूर्तिर्दूराध्वपरिश्रमावसितशक्तिः ।
पांसूत्करधूसरितो दिनावसाने प्रतिश्रयाकाङ्क्षी ॥ २१८ ॥
मातर्भगिनि दयां कुरु मा मैवं निष्ठुरा भव तवापि ।
कार्यवशेन गृहेभ्यो निर्यान्ति भ्रातरश्च पुत्राश्च ॥ २१९ ॥

---

१. 'कथासार' इति पा०. २. 'रहिताः' इति पा०. ३. अभिलाषानित्यर्थः. 'विन्यासान्' इति पा०. ४. 'गुरुगेहशास्त्रचर्या धूर्तवचने' इति पा०. ५. '[illegible]' इति पा०. ६. 'लाभरत्नानि' इति पा०. ७. 'कथयामि च' इति पा०.

किं [1]वयमुत्पाद्य गृहं प्रातर्गन्तार [2]इहैव सताम्।
भवति निवासो यस्मिन्निज इव पथिकाः प्रयान्ति विश्रामम्॥ २२०॥
अद्य रजनीं नयामो [3]यथाकथंचित्तवाश्रमे मातः।
अस्तं गतो विवस्वान्वद संप्रति कुत्र गच्छामः॥ २२१॥
इति बहुविधदीनवचाः प्रतिगेहद्वारदेशमधितिष्ठन्।
निर्भर्त्स्यते वराको गृहिणीभिरिदं वदन्तीभिः॥ २२२॥
न स्थित इह गेहपतिः किं रटसि वृथा प्रयाहि देवकुलम्।
कथितेऽपि नापगच्छति पश्य मनुष्यस्य निर्बन्धम्॥ २२३॥
अथ यदि कथंचिदपरः पुनः पुनर्याचितो गृहस्वामी।
निर्दिशति मावधीरणमत्र स्वपिहीति [4]जीर्णगृहकोणे॥ २२४॥
तत्र कलहायमाना तिष्ठति गृहिणी विभावरीं [5]सकलाम्।
अज्ञाताय किमर्थं वासो दत्तस्त्वयेति सह भर्त्रा॥ २२५॥
ईदृगयं मलात्मा किं कुर्मो भगिनि तावको भर्ता।
स्थास्यामि गेहेऽवहिता भ्रमन्ति खलु वञ्चका एवम्॥ २२६॥
इति [6]भाजनादियाच्ञां बुद्धौ विनिधाय [7]निकटवर्तिनो गेहात्।
[8]नारीजनः समेत्य ब्रूते तामात्मभावेन॥ २२७॥ (युग्मम्)
गृहशतमधिकमटित्वा कलमकुलत्थाणुचणमसूरादि।
एकीभूतं भुङ्क्ते क्षुधोपतप्तोऽध्वगो भैक्षम्॥ २२८॥
परवशमशनं वसुधा शयनीयं सुरनिकेतनं सद्म।
पथिकस्य विधिः कृतवानुपधानकमिष्टिकाखण्डम्॥ २२९॥
इति निगदितवति तस्मिन्सुन्दरसेनस्य चोत्तरावसरे।
इयमुपगीता गीतिः केनापि कथाप्रसङ्गेन॥ २३०॥
'निजवरभवनं सुरगृहमुर्वीतलमतिमनोहरं शयनम्।
कदशनममृतमभीप्सितकार्यैकनिविष्टचेतसां पुंसाम्॥ २३१॥

१. 'स्वयम्' इति पा०. २. 'इह गृहे वसतिम्' इति पा०. ३. 'यथाकथंचिद्गृदाशु मातः' इति पा०. ४. 'शीर्ण' इति पा०. ५. 'प्रहरम्' इति पा०. ६. 'भोजनादि' इति पा०. ७. 'निकटवर्तिगृहात्' इति पा०. ८. 'नारी समभ्युपेता' इति पा०.

तां[1] च श्रुत्वा सुहृदं पौरंदरिरिदमुवाच परितुष्टः ।
मम हृदयगतं प्रकटितमेतेन सहैव गच्छामः ॥ २३२ ॥

अथ सहचरद्वितीयः क्लेशसमुद्रावतरणकृतचित्तः ।
निरगात्सुन्दरसेनः कुसुमपुरादविदितः पित्रा ॥ २३३ ॥

पश्यन्विदग्धगोष्ठीरभ्यस्यन्नायुधानि विविधानि ।
शास्त्रार्थानधिगच्छन्विलोकयन्कौतुकान्यने[2]कानि ॥ २३४ ॥

जानन्पत्रच्छेदनमाले[3]ख्यं सिक्थपुस्तकर्माणि ।
नृत्यं गीतोपचितं तन्त्रीमुरजादिवाद्यभेदांश्च ॥ २३५ ॥

बुध्यन्वञ्चकभङ्गी[4]र्विटकुलटानर्मवक्रकथितानि ।
बभ्राम सुहृत्सहितः सुन्दरसेनो महीमखिलाम् ॥ २३६ ॥(कुलकम्)

अथ विदितसकलशास्त्रो विज्ञाताशेषजनसमाचारः ।
निजगृहगमनाकाङ्क्षी म शि[5]लोच्चयमर्बुदं प्राप ॥ २३७ ॥

तत्पृष्ठदेशदर्शनलो[6]लमतिं सुन्दरं परिज्ञाय ।
गुणपालितो बभाषे विलोक्यतामद्रिराज इति ॥ २३८ ॥

एष सुतः सानुमतः स्य[7]न्दच्छीताच्छसलिलसंपन्नः ।
लोकानुकम्पयेव प्रालेयमहीभृता म[8]रौ न्यस्तः ॥ २३९ ॥

शिशिरकरकान्तमौलिः क[9]टकास्थितपवनभोजनः सं[10]गुहः ।
विद्याधरोपसेव्यो बिभर्ति लक्ष्मीमयं शंभोः ॥ २४० ॥

अत्र तरुशिखरसंगतसुमनस इति जातविस्मयो मन्ये ।
अभिलषति समुच्चेतुं तारा निशि मुग्धकामिनीलोकः ॥ २४१ ॥

आश्चर्यं यदुपान्ते तिष्ठन्त्येतस्य सप्त मुनयोऽपि ।
अथवा कस्याकर्षं न करोति समुन्नतिर्महताम् ॥ २४२ ॥

---

१. 'समुपश्रुत्य च' इति पा०. २. 'सकलानि' इति पा०. ३. 'आलेख्यम्' इति पा०. ४. 'वृत्तीः' इति पा०. ५. 'शैलोच्चयनाथमर्बुदम्' इति पा०. 'आबू' इति नाम्ना प्रसिद्धं पर्वतं प्रापेत्यर्थः. ६. 'लोलमलम्' इति पा०. ७. 'स्यन्दत्स्फीताच्छ—' इति पा०. ८. मरुदेशे 'मारवाड' इति प्रसिद्धे. पुस्तकान्तरे 'मरौ' इति नास्ति. ९. कटकेषु नितम्बेषु स्थिताः पवनभोजनास्तपश्चर्यार्थं वातमात्राहारा ऋषयो यस्य; (पक्षे) कङ्कणीकृतसर्पः. १०. गुहाभिर्गुहेन च सहितः.

अवलम्ब्य[1] निरवलम्बनमम्बरमार्गं पतंगतुरगाणाम्।
अयमवनिधरो मन्ये विश्रान्त्यै वेधसा विहितः ॥ २४३ ॥
इममाश्रित्य हिमांशोरोषधयः संनिकर्ष[2]मुपयाताः।
प्रत्यासत्तिः प्रभुणा प्रायोऽनुग्राहकवशेन ॥ २४४ ॥
मेक्तुमिवाशाकरिणो[3] विमृजत्ययमवनिधरणपरिखिन्नान्।
निर्झरसलिलकणौघान्भवति हि सौहार्दमेकैककार्याणाम् ॥ २४५ ॥
हारीता[4]हितशोभो मुदितशुको व्याससंयोगरमणीयः।
विश्रान्तभरद्वाजः समतामयमेति मुनिनिवासस्य ॥ २४६ ॥
अस्मिन्निःसङ्गा[5] अपि परलोकप्राप्त्युपायकृतयत्नाः।
गन्धवहभोजना अपि न हिंसकाः फलभुजो[6]ऽपि न प्लवगाः ॥ २४७ ॥
शुभकर्मैकरता[7] अपि षट्कर्मण्यायता अपि स्ववशाः।
अनभिमतरौद्रचरित्नाः श्रितप्रिया अपि वसन्ति शमनिरताः २४८ (कुलकम्)
मूर्तिरिव शिशिररश्मेर्हरिणवती सप्तपत्त्र[8]कृतशोभा।
सरणिरिव चण्डभासः[9] पलाशिनी यातुधानजायेव ॥ २४९ ॥
सोत्कण्ठेव समदना वामकसज्जेव कृततिलकशोभा।
बहुहरि[10]पीलुसनाथा नरनाथद्वारभूमिरिव ॥ २५० ॥
अर्जुनबाणव्रातैः[11] कुरुनाथवरूथिनीव संच्छन्ना।
ऋक्ष[12]सहस्रोपचिता लक्ष्मीरिव गगनदेशस्य ॥ २५१ ॥
ध्वजिनीव दानवानां मिष्टकसमधिष्ठिता(?) त्रियामेव।
उद्घातगो[13]हिणीका रम्येयमुपत्यका भाति ॥ २५२ ॥ (कुलकम्)

---

१. 'अवगम्य' इति पा०. २. 'संनिधानम्' इति पा०. ३. यतोऽयमप्यवनीधर इति भावः. ४. हारीतशुकभरद्वाजाः पक्षिविशेषाः, व्यासो विस्तारः; (पक्षे) हारीतशुकव्यासभरद्वाजाख्या मुनयः प्रसिद्धा एव. ५. 'निःशङ्काः' इति पा०. ६. 'फलभुजोऽपि शमनिरताः' इति पा०. ७. इयमार्या पुस्तकान्तरे नास्ति. ८. सूर्यस्य वाहनभूतैः सप्ताश्वैः कृतशोभा; (पक्षे) सप्तपत्त्रो वृक्षविशेषः. ९. सूर्यस्य. 'चण्डभानोः' इति पा०. १०. हरिरश्वः, पीलुर्हस्ती; (पक्षे) हरिर्वानरः, पीलुर्वृक्षविशेषः. ११. अर्जुनबाणौ वृक्षविशेषौ तत्समूहैः. १२. ऋक्षाणि नक्षत्राणि; (पक्षे) ऋक्षा भल्लूकाः. १३. 'उद्याङ्क-' इति, 'अक्षाङ्क-' इति च पा०.

इति दर्शयति वयस्ये सुन्दरसेने च पश्यति प्रीत्या ।
स्वप्रस्तावोपगता गीतिरियं केनचिद्गीता ॥ २५३ ॥
'अतिशयितनाकपृष्ठं पृष्ठं ये नार्बुदस्य पश्यन्ति ।
बहुविषयपरिभ्रमणं मन्ये क्लेशाय केवलं तेषाम् ॥ २५४ ॥'
आकर्ण्य च स बभाषे महात्मनानेन युक्तमुपगीतम् ।
शिखरिशिरः पश्यामो वयस्य रम्यं समारुह्य ॥ २५५ ॥
अथ गिरिवरमारूढो विलोकयन्विविधविबुधभवनानि ।
वापीरुद्यानभुवः सरांसि सरितश्चचार विस्मेरः ॥ २५६ ॥
अचिराभामिव विघनां ज्योत्स्नामिव कुमुदबन्धुना विकलाम् ।
रतिमिव मन्मथरहितां श्रियमिव हरिवक्षसः पतिताम् ॥ २५७ ॥
हस्त्वोलकं विधातुः (?) सारं सकलस्य जन्तुजातस्य ।
दृष्टान्तं रम्याणां शस्त्रं संकल्पजन्मनो जैत्रम् ॥ २५८ ॥
विकसितकुसुमसमृद्धिं शृङ्गाररमापगैककलहंसीम् ।
लीलापल्लववल्लीं व्रतिनामवधानवर्मणां भल्लीम् ॥ २५९ ॥
विचरन्नुपवनमण्डपपुष्पप्रकराभिरामभूपृष्ठे ।
रममाणां सह सख्या ललनामालोकयामास ॥ २६० ॥(कुलकम्)
अवलोकयतस्तस्य स्मरसायकवेध्यतामुपगतस्य ।
इदमभवन्मनसि चिरं विस्मयभाराभिभूयमानस्य ॥ २६१ ॥
क्वेदं खलु विश्वसृजः कौशलमत्यद्भुतं जातम् ।
येन विरुद्धानामपि घटितैकत्र स्थितिस्तथाहीयम् ॥ २६२ ॥
ललितवपुर्निर्दोषा स्फुरदुज्ज्वलतारकाभिरामा च ।
निर्वाच्यवदनकमला जितवीणा क्वणितवाणी च ॥ २६३ ॥

---

१. 'जातविस्मेरः' इति पा०. २. 'हस्तोच्चयो' इति, 'अस्तौच्चये' इति च पा०. 'अब्जम्' इति पा०. ४. 'विलसित–' इति पा०. ५. 'शृङ्गारसरोवरैक–' इति पा०. 'पण्य' इति पा०. ७. 'द्वयम्' इति पा०. ८. 'आसीत्' इति पा०. ९. 'माया-भूतस्य' इति पा०. १०. 'समुपजातम्' इति पा०. ११. 'अनिर्दोषा' इति पा०. 'कलितवाणी' इति पा०.

प्रकटितविग्रहसंस्थितिरतिशोभाघटितसंधिबन्धा च।
उन्नतपयोधराढ्या शरदिन्दुकरावदाता च॥ २६४॥
अभिमतमृगतावस्थितिरभिनन्दितचरणयुगलरचना च।
अतिविपुलजघनदेशा विध्वस्तशरीरविहितशोभा च॥ २६५॥
आविर्भवदनुरागे तस्मिन्नथ वलितलोचना सहसा।
सापि बभूव मृगाक्षी हस्तगता कुसुमचापस्य॥ २६६॥
तरुमूलमाश्रिताया विस्मृतसकलान्यकर्मणः सपदि।
तस्या गात्रलतायामङ्कुरितं सात्त्विकैर्भावैः॥ २६७॥
सैवोपवनसमृद्धिस्तस्मिन्नेव क्षणे स्मरं समाश्रित्य।
तां व्यथयितुमारेभे प्रभवो हि कृत्यं करोति खलु सर्वः॥ २६८॥
गात्रनिर्गमरन्ध्रेभ्यः प्रस्वेदजलं विनिर्ययौ तस्याः।
अन्तर्ज्वलितमनोभवहव्यभुजा दह्यमानेभ्यः॥ २६९॥
कुसुमशरजालपतिता मुहुर्मुहुर्विदधती विवृत्तानि।
अनिमेषं पश्यन्ती मत्स्यवधूमनुचकार सा तन्वी॥ २७०॥
स्तब्धतनुं सोत्कम्पां पुलकवतीं स्वेदिनीं सनिःश्वासाम्।
विदधे तामसमशरः क्रीडति हि शठो विशिष्टमासाद्य॥ २७१॥
उच्छ्वासरुद्धमनं कुचयुगले सौष्ठवं विलसितानि।
अभिलषितेन प्रेम्णा स्निग्धं वचनं मनोहारि॥ २७२॥
अनुरक्तया वचनरुचिं वचसि च गमने च साध्वसस्खलनम्।
तस्या मदनः कुर्वन्नुपानिन्ये चारुतामेवंविधिम्॥ २७३॥ (युग्मम्)
पार्श्वगतेऽपि प्रेयसि कामशरासारताड्यमानापि।
न शशाक साभिधातुं चित्तगतं प्रणयभङ्गतो भीता॥ २७४॥
अथ विदितचित्तवृत्तिः सक्तदृशं प्रियतमं समाकृष्य।
मदनेन दह्यमानां विहसितविशदं जगाद तामाली॥ २७५॥

---

१. 'कलावदाता' इति पा०. २. 'चरणरचनशोभा च' इति पा०. ३. 'आसितायाः' इति पा०. ४. 'प्राप्य' इति पा०. ५. 'प्रभवजन्यम्' इति पा०. ६. 'गात्रसरसेभ्यः' इति पा०. ७. 'विलासानाम्' इति पा०. ८. 'स्निग्धत्वं चक्षुषोः' इति पा०. ९. 'चरणकषिम्' इति पा०. १०. 'अधिकाम्' इति पा०. ११. 'भीत्या' इति पा०.

अयि हारलते संहर हरहुंकृतिदग्धदेहसंक्षोभम् ।
सद्भावजानुरक्तिर्नहि रम्या पण्यनारीणाम् ॥ २७६ ॥
अवधीरय धनविकलं कुरु गौरवमक्षशसंपदः पुंसः ।
अस्मादृशां हि मुग्धे धनसिद्ध्यै रूपनिर्माणम् ॥ २७७ ॥
अभिरामेऽभिनिवेशं विदधाना विविधलाभनिरपेक्षा ।
उपहस्यसे सुमध्ये विदग्धवाराङ्गनावारैः ॥ २७८ ॥
येषां श्लाघ्यं यौवनमभिमुखतामुपगतो विधिर्येषाम् ।
फलितं येषां सुकृतैर्जीवितसुखितार्थिता येषाम् ॥ २७९ ॥
तेऽवश्यं स्वयमेव त्वामनुबध्नन्ति मदनशरभिन्नाः ।
नहि मधुलिहः कृशोदरि मृग्यन्ते चूतमञ्जर्या ॥२८०॥(युगलकम्)
इति गदितवतीमालीं कामशरासारभिन्नसर्वाङ्गी ।
अव्यक्तस्खलिताक्षरमूचे कृच्छ्रेण हारलता ॥ २८१ ॥
सखि कुरु तावद्यत्नं पटुतरमतिवेदनाप्रतीकारे ।
क्रोडीकृता विपत्त्या न भवन्त्युपदेशयोग्या हि ॥ २८२ ॥
अस्वायत्तः प्रेयान्मृदुपवनः सुरभिमास उद्यानम् ।
ईयती खलु सामग्री भवति क्षीणायुषामेव ॥ २८३ ॥
मत्वा मदनाशीविषविषवेगाकुलितविग्रहामालीम् ।
समुपेत्य शशिप्रभया पौरंदरिरभिदधे कृतप्रणतिः ॥ २८४ ॥
यदि नाम रुणद्धि गिरं गणिकाभावोपजनितवैलक्ष्यम् ।
तदपि कथनीयमेव स्निग्धापदि नहि निरूप्यते युक्तम् ॥ २८५ ॥
एतावति संसारे परिगणिता एव ते सुजनाः ।
आपन्नपरित्राणे व्याकुलमनसः स्फुरन्ति ये बुद्धौ ॥ २८६ ॥

---

१. 'पथ्यम्' इति पा०. २. 'विनिवेशम्' इति पा०. ३. 'मधुलेहाः सुन्दरि' इति पा०. ४. 'सिक्तसर्वाङ्गी' इति पा०. ५. 'बहुमतम्' इति पा०. ६. 'इयमियती' इति पा०. ७. सुन्दरसेन इत्यर्थः. ८. 'कथितव्यम्' इति पा०. ९. 'सुजन्मानः' इति पा०. १०. 'आपत्सु परित्राणव्याकुल-' इति, 'आपन्नपरित्राणे कोमल-' इति च पा०.

यस्मिन्नेव मुहूर्ते यदवधि दृष्टोऽसि मे सख्या।
तत एवारभ्य गता विधेयतां दग्धमदनस्य ॥ २८७ ॥
रोमोद्गमसंनहनं भित्त्वान्तर्विग्रहं परापतिताः।
तस्या मानमसंभवकोदण्डविनिर्गता इषवः ॥ २८८ ॥
किं वा वदतु वराकी कुत्र समाश्वसितु यातु कं शरणम्।
पीडयति भृशं यस्मान्नित्यं शुचिदक्षिणो मृदुः पवनः ॥ २८९ ॥
वचसि गते गद्गदतामुज्झितमौनव्रताश्चिराय पिकाः।
दृष्ट्वा व्यथयन्ति सखीं जातावसरा निरर्गलं विरुतैः ॥ २९० ॥
स्खलितालसितं गमने तन्वङ्ग्या अगणितश्रमा हंसाः।
सुचिरालब्धावसराः कुर्वन्ति गतागतानि परितुष्टाः ॥ २९१ ॥
उष्णोच्छ्वसितमरमपि विदह्यमानोऽपि मधुकरस्तस्याः।
अलककुसुमं न मुञ्चति कृच्छ्रेष्वपि दुस्त्यजा विषयाः ॥ २९२ ॥
नो वारयति तथा मां सांप्रतमिति कथयतीव मधुलेहः।
निःसहवपुषः कर्णे श्रुतिपूरकपुष्पसंगतो गुञ्जन् ॥ २९३ ॥
प्रशिथिलभुजलतिकायास्तस्याः पतितस्य हेमकटकस्य।
यत्प्रापणं पृथिव्यास्तस्मिन्खलु मुक्तहस्तता हेतुः ॥ २९४ ॥
रशनागुणेन विगलितमेकपदे तन्नितम्बतश्चित्रम्।
पतनाय नियतमथवा निपतनं गुरुकलत्रस्य ॥ २९५ ॥
अङ्गीकृत्य मनोभवमुरसि तथा लालितोऽपि हतहारः।
तापयति सखीं तत्क्षणमन्तर्भिन्नात्कुतः कुशलम् ॥ २९६ ॥
वक्षसि तत्स्वेदजलं कज्जलमलिनाश्रुवारिणा मिश्रम्।
कुचतटपतितं तस्याः प्रयागसंभेदसलिलमनुकुरुते ॥ २९७ ॥
पिकरुतमलयसमीरणसुमनःस्मरभृङ्गदहनपरिकलिता।
पञ्चतपश्चरति भवत्परिरम्भणसौख्यलम्पटा बाला ॥ २९८ ॥

१. 'अस्मिन्' इति पा०. २. 'मुहूर्ते चक्षुर्विषयोऽसि मम सख्याः' इति पा०. ३. 'तस्याम्' इति पा०. ४. 'किं विदधातु' इति पा०. ५. 'यस्या नित्यशुचिर्दक्षिणः पवनः' इति पा०. ६. 'परपुष्टाः' इति पा०. ७. 'यथा' इति पा०. ८. 'यस्मिन्' इति पा०. ९. 'भिन्नार्जवः' इति पा०. १०. संभेदो नदीसंगम इत्यर्थः.

न परापतति वराकी दशमीं यावन्मनोभवावस्थाम् ।
त्रायस्व सुभग तावच्छरणागतरक्षणव्रतं महताम् ॥ २९९ ॥
अथ तद्वचसि कृतादरमुद्भूतमनोभवं समवधार्य ।
अवगीतिभीतचेता ऊचे गुणपालितः सुहृदम् ॥ ३०० ॥
यद्यपि मारप्रसरो दुर्वारः प्राणिनां नवे वयसि ।
चिन्त्यं तदपि विवेकिभिरवमानं वारयोषितां प्रेम्णः ॥ ३०१ ॥
वारस्त्रीणां विभ्रमरागप्रेमाभिलाषमदनरुजः ।
सहवृद्धिक्षयभाजः प्रख्याताः संपदः सुहृदः ॥ ३०२ ॥
ताभिरवदातजन्मा करोति सङ्गं कथं यासाम् ।
क्षणदृष्टोऽपि प्रणयी रूढप्रणयोऽपि जन्मनोऽपूर्वः ॥ ३०३ ॥
प्रद्युम्नः प्रद्युम्नो विरूपकः खलु विरूपकः सततम् ।
सुस्निग्धः सुस्निग्धो रूक्षो रूक्षस्तु गणिकानाम् ॥ ३०४ ॥
यासां जघनावरणं परकौतुकवृद्धये न तु त्रपया ।
उज्ज्वलवेषा रचना कामिजनाकृष्टये न तु स्थितये ॥ ३०५ ॥
मांसरसाभ्यवहारः पुरुषाहतिपीडया न तु स्पृहया ।
आलेख्यादौ व्यसनं वैदग्ध्यख्यातये न तु विनोदाय ॥ ३०६ ॥
रागोऽधरे न चेतसि सरलत्वं भुजलतासु न प्रकृतौ ।
कुचभारेषु समुन्नतिराचरणे नाभिनन्दिते सद्भिः ॥ ३०७ ॥
जघनस्थलेषु गौरवमाकृष्टधनेषु नो कुलीनेषु ।
अलसत्वं गमनविधौ नो मानववञ्चनाभियोगेषु ॥ ३०८ ॥
वर्णविशेषापेक्षा प्रसाधने नो रतिप्रबन्धेषु ।
ओष्ठे मदनासङ्गो नो पुरुषविशेषसंभोगे ॥ ३०९ ॥
या बालेऽपि सरागा वृद्धेष्वपि विहितमन्मथावेगा ।
क्लीबेष्वपि कान्तदृशः साकाङ्क्षा दीर्घरोगेऽपि ॥ ३१० ॥

१. मरणरूपामित्यर्थः. २. 'उद्धतचेतोभवम्' इति पा०. ३. 'वेशयोषितः' इति पा०. ४. 'कुर्वीत समागमम्' इति पा०. ५. 'वेषावरणम्' इति पा०. ६. 'विनोदः' इति पा०. ७. 'रतिप्रसङ्गेषु' इति पा०. ८. मदनः कामः; (पक्षे) मधूच्छिष्टमित्यर्थः. ९. 'रोगेषु' इति पा०.

स्वेदाम्बुकणोपचिता नै चार्द्रता निजनिवासमनसश्च ।
आविष्कृतवेपथवो वज्रोपलसारकठिनाश्च ॥ ३११ ॥
जैघनचपला अनार्याः परभृतयः कृतकनेत्ररागाश्च ।
सर्वाङ्गार्पणदक्षा असमर्पितहृदयदेशाश्च ॥ ३१२ ॥
न कुलसमुत्पन्ना अपि भुँजंगदर्शनसुवेदनाभिज्ञाः ।
कंदर्पदीपिका अपि रहिताः स्नेहप्रसङ्गेन ॥ ३१३ ॥
उज्झितवृषयोगा अपि रतिसमये नरविशेषनिरपेक्षाः ।
कृष्णैकाभिरता अपि हिरैण्यकशिपुप्रियाः सततम् ॥ ३१४ ॥
मेरुमहीधरभुव इव किंपुरुषसहस्रसेवितनितम्बाः ।
नीतय इव भूमिभृतां सुपरिहृतानर्थसंयोगाः ॥ ३१५ ॥
बहुमित्रकरविदारणलब्धाभ्युदयाः सरोरुहिण्य इव ।
डाकिन्य इव च रक्तव्याकर्षणकौशलोपेताः ॥ ३१६ ॥
प्रतिपुरुषं संनिहिताः कृत्यपरा विविधकरणोपचिताः ।
बहुलार्थग्राहिण्यः प्रकृतय इव दुर्ग्रहा गणिकाः॥३१७॥(अर्थचतुष्टयमत्र)
सादरमाकृष्य चिरं कुसुमस्तबकं च नरविशेषं च ।
रिक्तीकर्तुं निपुणाः क्षुद्राः क्षुद्राश्च चुम्बन्ति ॥ ३१८ ॥
परमार्थकठोरा अपि विषयगतं लोहकं मनुष्यं च ।
चुम्बकपाषाणशिला रूपाजीवाश्च कर्षन्ति ॥ ३१९ ॥
पुरुषाक्रान्ताः सततं कृत्रिमशृङ्गाररागरमणीयाः ।
आहन्यमानजघनाः करेणवो वारयोषाश्च ॥ ३२० ॥
उचितगुणोत्क्षिप्ता अपि पुरतोऽपि निवेशिते सुवर्णलवे ।
झगिति पतन्ति मुखेन प्रकटप्रमदा यथा च तुलाः ॥ ३२१ ॥

---

१. 'अनार्द्रता' इति पा०. २. जघनचपला आर्या, छन्दोभेद इत्यर्थः. ३. 'भुजंगदर्शनकृतवेदनाभिज्ञाः' इति पा०. ४. हिरण्यं सुवर्णम्, कशिपुस्त्वन्नमाच्छादनमित्यर्थः. ५. 'विविधविकरणोपेताः' इति पा०. ६. 'अर्थचतुष्टयवाचिनीयमार्या' इति पा०. ७. 'आभिरूप्य' इति पा०. ८. मधुमक्षिका इत्यर्थः. ९. वेश्या इत्यर्थः. १०. लोहमिव पुरुषम्. ११. 'यथे' इति पा०. १२. 'कलापिकाश्च तुलाः' इति पा०.

बहिरुपपादितशोभा अन्तस्तुच्छाः स्वभावतः कठिनाः ।
वेश्याः समुद्गिका इव [1]क्वणन्ति यन्त्रप्रयोगेण ॥ ३२२ ॥
बध्नन्ति येऽनुरागं दैवहतास्तासु वारवनितासु ।
ते निःसरन्ति नियतं पाणिद्वयमग्रतः कृत्वा ॥ ३२३ ॥
[2]इदमुपदिशति वयस्ये सुन्दरसेने च मन्मथव्यथिते ।
प्रस्तावा[3]दुपगातुं गीतित्रयमभ्यधायि केनापि ॥ ३२४ ॥
"तरुणीं रमणीयाकृतिमुपनीतां स्मृतिभुवा वशीकृत्य ।
परिहरति यो जडात्मा प्रथमोऽसौ [4]नालिको विना भ्रान्तिम् ॥ ३२५ ॥
इदमेव हि जन्मफलं जीवितफलमेतदेव यत्पुंसाम् ।
[5]लडहनितम्बवतीजनसंभोगसुखेन याति तारुण्यम् ॥ ३२६ ॥
सुमनो[6]मार्गणदहनज्वालावलिदह्यमानसर्वाङ्गयः ।
प्रबलप्रेमप्रवणाः प्रमदाः स्पृहयन्ति नाल्पपुण्येभ्यः ॥ ३२७ ॥"
[7]एवमुपश्रुत्य वचः समुवाच पुरंदरात्मजः सुहृदम् ।
मम हृदयादिव कृष्ट्वा गी[8]तमिदं साधुनानेन ॥ ३२८ ॥
[9]तदतनुसायकविकलां हारलतां हरिणशावतरलाक्षीम् ।
आश्वासयितुं यामो गुणपालित किं विकल्पितैर्बहुभिः ॥ ३२९ ॥
अथ तत्र कापि गणिका[10]गणयन्ती परिचितं हृतद्रविणम् ।
प्रविशन्तमेव मन्दिरमीर्ष्याव्याजेन निरुरोध ॥ ३३० ॥
काचिद्विटकदत्तं [11]पुञ्जीकृतजीर्णवसनमवलोक्य ।
वेश्या विषीदति स्म क्षपाक्षये व्यर्थकर्तव्या ॥ ३३१ ॥
दैवस्मृत्या पतितं दृष्टिपथं भग्नमूल्य[12]विटमेका ।
ज्वलिता रुषा भुजिष्या जग्राह जवेन धावित्वा ॥ ३३२ ॥

---

१. 'भणन्ति' इति पा०. २. 'इत्युपदिशति' इति पा०. ३. 'उपजातम्' इति पा०. ४. मूर्ख इत्यर्थः. ५. मनोहरयुवतिरमणविनोदेनेत्यर्थः. ६. 'मार्गणमार्गण–' इति पा०. ७. 'अथ समुपश्रुत्य वचः समुवाच पुरंदरानुजः' इति पा०. ८. 'गीतिरियं केनचिद्गीता' इति पा०. ९. 'स्मरसमबाणसमर्पितहारलताम्' इति पा०. १०. 'गणयन्ती कापि' इति पा०. ११. 'लुञ्चीकृत्य' इति पा०. १२. 'विटमेकम्' इति पा०.

अन्तःस्थितकामिगृहद्वारगतं लुप्तवित्तनरमन्या।
समुवाच कुट्टनी व्रज कल्लोलाकल्पदेहेति ॥ ३३३ ॥
प्रकटितदशननखक्षतिरभिदधती राजपुत्ररतियुद्धम्।
अपरा पुरः सखीनां वारवधूराततान सौभाग्यम् ॥ ३३४ ॥
अन्या कामिस्पर्धावर्धितभाटी समुत्सुका चण्डी।
सौभाग्यगर्वदर्पं समुवाह विलासिनीमध्ये ॥ ३३५ ॥
एकगणिकानुबन्धे क्रोधोद्यतशस्त्रकामिनोः कापि।
संभ्रमतो धावित्वा निवारयामास कुट्टनी कलहम् ॥ ३३६ ॥
धनमाहृत्य बहुभ्यो भुज्यत एकेन केनचित्सार्धम्।
इति धनवन्तं कामिनमावर्जयति स्म वारवधूः ॥ ३३७ ॥
गायन्मात्रागाथा द्विपदिकया सौष्ठवेन विट एकः।
बभ्राम पुरो दास्या विदधद्विकृतीरनेकविधाः ॥ ३३८ ॥
कश्चित्पण्यस्त्रीणां विभवोपचितान्यपुरुषयोजनया।
विदधाति स्माराधनमधनत्वमुपागतः कामी ॥ ३३९ ॥
त्वयि सक्तेन मया गृहमुज्झितमधुना परेव जातासि।
इति ढौकमलभमानः कश्चिद्गणिकामुपालेभे ॥ ३४० ॥
उषितामपरेण समं वृद्धविटानां पुरः पराजित्य।
त्याजयति स्म भुजंगं कश्चिद्गणिकां द्विगुणभाटीम् ॥ ३४१ ॥
दृष्टा त्वया विशेषकवलयकलापी शशिप्रभाभुजयोः।
बाढं भण भण कीदृक्कानु तरः सोमया दत्तः ॥ ३४२ ॥
अद्य चतुर्थो दिवसश्चित्राम्बरयुगलकस्य दत्तस्य।
तदपि परुषाभिधाना वद मदनक किं करोम्यत्र ॥ ३४३ ॥
स्नेहपरा मयि केली कलहंसक किंतु राक्षसी तस्याः।
माता नात्मीकर्तुं वर्षशतेनापि शक्यते पापा ॥ ३४४ ॥

---

१. 'समुच्छ्रिता' इति पा०. २. 'योजयति' इति पा०. ३. 'गणिकाद्विगुणभाटी' इति पा०. ४. 'कातुतरः सोमया दत्ता' इति पा०. ५. 'चित्राम्बर' इति पा०. ६. 'किन्नरी तस्याः' इति पा०.

सुमनः कुङ्कुमवासः सज्जीकुरु किमिति तिष्ठसि विचिन्तः[1] ।
अद्य तव दयितिकायाः किंजल्कक नर्तनावसरः ॥ ३४५ ॥
यदि नाम पञ्चदिवसांस्त्वयि कुरुते प्रेम धनलवं दृष्ट्वा ।
तदपि न रागवती[2] सा कंदर्पक किं वृथा गर्वः ॥ ३४६ ॥
जीवन्नेव विलासक परिहर दूरेण मूढ हरिसेनाम् ।
बद्धावेशस्तस्यां व्यापृतपुत्रो[3] महाविषमः ॥ ३४७ ॥
केसरया[4] क्षणदत्तं कृत्वांशुकमुपरि कामिजालस्य ।
स्तब्धग्रीवं भ्रमतश्चन्द्रोदय पश्य माहात्म्यम् ॥ ३४८ ॥
कौमारकं विहन्तुं[5] रतिसमये मदनसेनायाः ।
इच्छामि किं तु तस्या मात्रातीव प्रसारितं वदनम् ॥ ३४९ ॥
विभ्रम कियतस्तपसः फलमेतद्यदुपभुज्यते मदिरा ।
स्वकरेण पीतशेषा मदघूर्णित मदनसेनया दत्ता ॥ ३५० ॥
कुवलयमालानिलयो लीलोदय किमिति संप्रति त्यक्तः ।
किं विदधामस्तस्मिन्भ्रातर्दास्या विना मूल्यम् ॥ ३५१ ॥
मुषिताशेषविभूतेरिन्दीवरकस्य यामिनी याति ।
संवाहयतः संप्रति मञ्जीरक तिलकमञ्जरीचरणौ ॥ ३५२ ॥
अद्यापि बालभावं निखिलं न जहाति बालिका तदपि ।
प्रौढिम्ना मकरन्दक सकलां ललनामधः कुरुते ॥ ३५३ ॥
कुब्जे गत्वा वक्ष्यसि तं निर्दयचित्तनर्तनाचार्यम् ।
हारा सुकुमारतनुः किमियं संमर्दकारिता[6] भवताम् ॥ ३५४ ॥
निःसारो[7]ऽभिनिवेशः शुकशावकपाठने सुरतदेवि ।
तिष्ठति बहिरुपविष्टः प्रतीक्षमाणस्तव प्रेयान् ॥ ३५५ ॥
वीणावादनखिन्ना पतितास्ते वासभवनपर्यङ्के ।
उत्थापयतां त्वरितं स्मरलीलां मत्त आयातः[8] ॥ ३५६ ॥

---

१. 'विचित्तः' इति पा०. २. 'रक्तवती' इति पा०. ३. 'व्यावृतपुत्रो' इति पा०. ४. 'केसवया' इति पा०. ५. 'विहातुम्' इति पा०. ६. 'किमिति श्रममद्य कारिता' इति पा०. ७. 'निःसरको' इति पा०. ८. 'भट्टपुत्र आयातः' इति पा०.

किमिदं यथास्थितत्वं तव माधवि यन्मुहुर्वदन्त्या मे ।
परिधत्से नाभरणं श्रीविग्रहराजसूनुना दत्तम् ॥ ३५७ ॥
ईदृक्शून्यमनस्त्वं किं कुर्मो मातरिन्दुलेखायाः ।
पानक्रीडासक्त्या पतितापि न चेतिता कनकनाडी ॥ ३५८ ॥
नकुलः पयो न पायित इति रोषवशादियं हि दुःशीला ।
नाश्नाति कामसेना पुनः पुनर्याच्यमानापि ॥ ३५९ ॥
श्रीबलभूतपरिपालित ऊर्णायुः किमनया विजेतव्यः ।
मुकुला मुक्तमुखस्थितिरहर्निशं मेषपोषणे लग्ना ॥ ३६० ॥
आताम्रतां समुपगतमुच्छूनं करतलं च तव ललिते ।
मा पुनरतिचिरमेवं प्रविधास्यसि कन्दुकक्रीडाम् ॥ ३६१ ॥
अभिराम कनकभाटी प्रथममियं गृह्यते समुत्पन्ने ।
स्नेहे तु कुसुमदेव्यास्त्वं प्रभवसि जीवितस्यापि ॥ ३६२ ॥
ग्रहणकमर्पय तावद्यदि कौतुकमुपरि चन्द्रलेखायाः ।
निर्वर्तितकर्तव्यो दास्यामि किंचिद्यथाभिमतम् ॥ ३६३ ॥
न परमदाता मातः सूनुरसौ वासुदेवभट्टस्य ।
निर्लज्जः शठवृत्तिः पुनः पुनर्वार्यमाणोऽपि ॥ ३६४ ॥
क्षपयति वसनानि सदा हठेन सकलानि सुरतसेनायाः ।
न ददात्येकामूर्णां मुरणः परमत्ति कर्पासम् ॥ ३६५ ॥ (युग्मम्)
भगिनि न मुञ्चति वेश्म क्षणमपि पटराजपुत्रोऽसौ ।
भैग्नान्यतरासक्तो नग्नेनाधिष्ठितं तीर्थम् ॥ ३६६ ॥
इत्थंप्राया वाचः शृण्वन्विटकुट्टनीसमुद्गीर्णाः ।
तं वेशसंनिवेशं पश्यन्प्रविवेश दारिकावेश्म ॥ ३६७ ॥ (कुलकम्)
आकृष्टमिवोत्कतया स्नपितमिव स्निग्धचक्षुषः प्रसरैः ।
तमुपागतमत्यन्तं हारलता पूजयामास ॥ ३६८ ॥

१. 'रामसेना' इति पा०. २. 'मेष' इति पा०. ३. 'उपगतं प्रोच्छूनम्' इति पा०. ४. मेष इत्यर्थः. लौकिकोक्तिरियम्. ५. 'भग्नान्यनरावसरः' इति पा०. ६. 'अस्त्यर्थम्' इति पा०.

सुविहितसमुचितसंस्थितिरवनतशिरसा प्रणम्य तत्सख्या ।
इदमभिदधेऽतिनम्रं सुन्दरसेनः शुभावसरे ॥ ३६९ ॥
प्रियदर्शन किं बहुभिः स्मरपीडनवचनचाटुसंदर्भैः ।
इयमास्ते हारलता जीवनमस्यास्त्वदायत्तम् ॥ ३७० ॥
निर्यन्त्रकेलिविशदं सहजप्रेमानुबन्धरमणीयम् ।
[1]कार्यान्तरान्तरायैरपरिहृतं यातु यौवनं युवयोः ॥ ३७१ ॥
निर्दयमविरतवाञ्छं स्रंस्तत्रपमव्यवस्थिता[2]वरणम् ।
उपचीयमानरागं सततं भूयाद्भवत्सुरतम् ॥ ३७२ ॥
इति दत्त्वाशिषमन्तर्निर्याते परिजने तदङ्गेषु ।
विस्रम्भविविक्तरसो ववृधे कुसुमायुधः सुतराम् ॥३७३॥ (विशेषकम्)
यदमन्द[3]मन्मथोचितमनुरूपं यत्तथानुरागस्य ।
यद्यौवनाभिरामं यच्च फलं जीवितव्यस्य ॥ ३७४ ॥
अविनय एव विभूषणमश्लीलाचरणमेव बहुमानः ।
निःशङ्कतैव सौष्ठवमनवस्थितिरेव गौरवाधानम् ॥ ३७५ ॥
केशग्रहणमनुग्रह उपकारस्ताडनं मुदे दंशः ।
नखविलिखनमभ्युदयो दृढदेहनिपीडनं समुत्कर्षः ॥ ३७६ ॥
विगलल्लोलं चुम्बनमवयवनिष्पेषनि[4]ःस्पृहो मर्दः ।
अन्तः [5]प्रवेशमिच्छन्निर्भरपरिरम्भणं यस्मिन् ॥ ३७७ ॥
यदनङ्गैरिव [6]विहितं रागैरिव दीप्तिमत्त्वमुपनीतम् ।
प्रेमभिरिव निस्खलितं शृङ्गारैरिव विकासमानीतम् ॥ ३७८ ॥
अप्रागल्भ्यं [7]व्यसनं धैर्यमकार्यं विवेक उपघातः ।
ह्रेपणमगुणो यस्मिंस्तत्सुरतं प्रस्तुतं ताभ्याम् ॥ ३७९ ॥ (कुलकम्)
प्रारम्भ एव तावत्प्रज्वलितो धगिति मनसिजो यस्मिन् ।
तस्य विशेषावस्था वक्तुमशक्याः प्रवृद्धस्य ॥ ३८० ॥

---

१. 'भार्यान्तरान्तरायैः' इति पा०. २. 'आचरणम्' इति पा०. ३. 'मन्मथोचित' इति पा०. ४. 'सस्पृहः' इति पा०. ५. 'प्रवेशनेत्यम्' इति पा०. ६. 'पिहितम्' इति पा०. ७. 'वसनम्' इति पा०.

सहजश्रमेण जडीकृतमिति यूनोः कामशास्त्रनिर्णीतौ ।
नानाकरणग्रामे लालित्यमियाय पाण्डित्यम् ॥ ३८१ ॥
अभिधेयमनाख्येयं प्रविचार्यं छादनीयमविषह्यम् ।
न बभूव तयोस्तस्मिन्नारब्धे सुरतपरिमर्दे ॥ ३८२ ॥
अत्यभ्यस्ता यान्या सुरतविधौ विविधचाटुपरिपाटी ।
तामाकूनविशीर्णां चकार सहजः स्मरावेगः ॥ ३८३ ॥
सद्भावरागदीपितमदनाचार्योपदिष्टचेष्टानाम् ।
कः परिगणनं कर्तुं रतिचक्राविष्टरमणयोः शक्तः ॥ ३८४ ॥
बाला मृदुगात्रलता दृढपुरुषाक्रान्तविग्रहा न परम् ।
न व्यथिता सुदमाप प्रभवति खलु चित्तजन्मनः शक्तिः ॥३८५
किं रमणी रमणोऽविशदुत रमणं सा न जानीमः ।
स्वावयवावगमस्त्वप्रकाशमगमत्तयोस्तदा निपुणम् ॥ ३८६ ॥
तस्या निमीलितदृशो निस्पन्दतनोर्बभूव सुरतान्ते ।
लिङ्गमनङ्गच्छायाजीवितसत्तानुमानेन ॥ ३८७ ॥
श्रमजलबिन्दूपचिता वृत्तस्मरणेन जातवैलक्ष्या ।
सा शुशुभे विपरीता पर्याकुलकेशभूषणा नितराम् ॥ ३८८ ॥
निर्व्याजार्पितवपुषोर्निर्वृतिमयमेव गणयतोर्विश्वम् ।
क्षणदा विरराम तयोररक्षणाकाङ्क्षयोरेवम् ॥ ३८९ ॥
मोहनविमर्दखिन्ना विजृम्भमाणा स्खलद्गतिर्मन्दम् ।
निद्राकषायिताक्षी हारलता वासवेश्मनो निरगात् ॥ ३९० ॥
"परिचितपार्श्वगताहं तेन समं पानभोजनं कृत्वा ।
नीता निशा कथाभिर्मोहनकार्यं च यत्किंचित् ॥ ३९१ ॥
अविदग्धः श्रमकठिनो दुर्लभयोषिद्युवा जडो विप्रः ।
अपमृत्युरुपक्रान्तः कामिव्याजेन मे रात्रौ ॥ ३९२ ॥

---

१. 'अवाप' इति पा०. २. 'प्रत्यभ्यस्तायान्यम्' इति पा०. ३. 'रमणमिति न जानीमः' इति पा०. ४. 'तु प्रकाशम्' इति पा०. ५. 'अनङ्गावस्था' इति पा०. ६. 'मनेऽस्य' इति पा०. ७. 'रतविरतौ' इति पा०. ८. 'दौर्बलविमर्दे' इति पा०.

नेच्छाविरतिः क्षणमपि न च शक्तिर्वस्तुशून्यरतियत्नैः ।
केवलमलमद्याहं कदर्थिता वृद्धपुरुषेण ॥ ३९३ ॥
मद्यवशादभियोक्तरि मृतकल्पे तल्पभागमग्नायाः ।
अविरोधितनिद्रायाः सुखेन मे यामिनी याता ॥ ३९४ ॥
सुकुमारसंप्रयोगः पेशलवचनः सवक्रपरिहासः ।
कुशलवशेन समेतो मम सखि रमणो मनोहराकारः ॥ ३९५ ॥
पर्[1]यङ्काङ्कनिलीनः पराङ्मुखो मुक्तमन्दनिःश्वासः ।
मद्या[2]चनया नितरां निःस्वेदः स्वेदसलिलसंसिक्तः ॥ ३९६ ॥
पर्यस्तमितानङ्गोऽप्यपगतनिद्रः क्षपाक्षयाकाङ्क्षी ।
ग्रामोषितः प्रहीणो निष्प्रतिपत्तिः स्थितोऽद्य सखि मनुजः ॥३९७॥(कुलकम्)
शृणु सखि कौतुकमेकं ग्रामीणककामिना यदद्य कृतम् ।
सुरतरसमीलिताक्षी मृतेति भीतेन मुक्तास्मि ॥ ३९८ ॥
अविदिततदेशप्रकृतेः शठात्मकाद्दुर्विदग्धतोऽस्माभिः ।
अनुभूतो राजसुतादे[3]धि भाण्डविडम्बनावेशः ॥ ३९९ ॥
प्रियसखि लोकसमक्षं नगरप्रभुणा हठेन नीतास्मि ।
ए[4]वं तु नो कदाचिद्विगुणार्थप्रार्थने कृतोऽन्यायः ॥ ४०० ॥
आकर्षन्ती जघनं व्र[5]जसि यथा विलिखिता नखैस्तिलशः ।
मन्ये तथोपभुक्ता केरलि केनापि दाक्षिणात्येन ॥ ४०१ ॥
[6]अधरे बिन्दुः कण्ठे मणिमाला स्तनयुगे शशप्लुतकम् ।
तव सूचयन्ति केरलि कुसुमायुधशास्त्रपण्डितं रमणम् ॥ ४०२ ॥'
इति शृण्वन्नुषसि गिरो निर्वृत्तनिशाभि[7]योगगणिकानाम् ।
सोऽपि यथाक्रियमाण प्रविधातुं निर्जगाम कर्तव्यम् ॥ ४०३ ॥

१. 'पर्यङ्क' इति पा०. २. 'मद्यादनया' इति पा०. ३. 'अवमाण्डविडम्बनाविलेशः' इति पा०. ४. 'एवं तु ननु' इति पा०. ५. 'व्रजति यथा' इति पा०. ६. इयमार्या कविकण्ठाभरणे क्षेमेन्द्रेणोदाहृता. बिन्दुर्मणिमालादीनां लक्षणानि कामसूत्रे प्रसिद्धान्येव.
७. 'नियोग' इति पा०.

स्वरुचितरागोपचितैः स्वीकृतमनसस्तया समं तस्य ।
यौवनसुखमनुभवतो जगाम संवत्सरः सार्धः ॥ ४०४ ॥
विस्रम्भकथाः कुर्वन्विचरन्नुद्यानवेदिकापृष्ठे ।
सहचरकरसक्तकरः सुन्दरसेनः किल कदाचित् ॥ ४०५ ॥
स्थूलघनतन्तुसंततितोलितैतूलाम्बरावरणम् ।
यष्टिप्रान्तनियन्त्रितदलवृन्तककुतुपतुम्बिककटित्रम् ॥ ४०६ ॥
त्रुटितचरणत्रसंगतसंस्फुटिताभ्यक्तपादमलिनतनुम् ।
त्वरितगतिलेखवाहकमारादायान्तमद्राक्षीत् ॥ ४०७ ॥ (कुलकम्
प्रत्यासन्नीभूतं क्रमेण पौरन्दरिः परिज्ञाय ।
साकूतमना ऊचे वयस्य हनुमानयं प्राप्तः ॥ ४०८ ॥
अवनितललीनशिरसा कृतनतिना तेन विनिहितं भूमौ ।
उत्क्षिप्य झटिति लेखं सुन्दरसेनस्तु वाचयामास ॥ ४०९ ॥
"स्वस्तिश्रीकुसुमपुरात्पुरंदरः सुन्दरं समभिधत्ते ।
अन्तर्जृम्भितशोकप्रस्ताविस्पष्टवर्णपदम् ॥ ४१० ॥
कुलमकलङ्कं न गणितमवधीरितमग्रजन्मनामुचितम् ।
नैवेक्षितमवगीतं शठसेवितवर्त्मनि त्वया पतता ॥ ४११ ॥
वंशेऽकुटिलगतीनां द्विजिह्वतादोषरहितचरितानाम् ।
अपरविनाशरतानामुत्पन्नः कथमसि भुजंगः ॥ ४१२ ॥
क्व पुरोडाशपवित्रितवेदपदोद्गारगर्भवदनं ते ।
क्व च मदिरासववासितवारवधूमुखरमास्वादः ॥ ४१३ ॥
क्व कुशविपाटनजन्मा सहसोदितवेदनाचमत्कारः ।
क्व च दासीरतसंगरनिर्दयनखरक्षतिः प्रीत्यै ॥ ४१४ ॥
क्व त्रेतानलधूमक्षोभितनयनाम्बुधौतवदनत्वम् ।
क्व च गणिकानिर्भर्त्सनशोकभरायातबाष्पसलिलौघः ॥ ४१५ ॥

---

१. 'तोलितताम्बरा' इति पा०. २. 'स्फुटिताभ्यक्तान्त' इति आ०. ३. 'नापेक्षित' इति पा०. ४. 'वंशेऽमलवर्णानाम्' इति पा०.

क्व वषट्कारध्वानः सत्कर्मविभूषणश्रवणपूरः ।
क्व च साधारणवनितारतिमणिताकर्णनौत्सुक्यम् ॥ ४१६ ॥
क्वाचार्यप्रतनुलताताडनसंक्षोभसंभवः कम्पः ।
क्व च कुपितवारललनानिष्ठुरपादप्रहारविषहत्वम् ॥ ४१७ ॥
क्व हरिणचर्मावरणं स्मृतिशास्त्रनिवेदितं व्रतं चरतः ।
क्व च पण्यस्त्रीगात्रस्पृष्टाम्बरधारणेषु बहुमानः ॥ ४१८ ॥
समिधामेव च्छेदनमभ्यस्तं शैशवात्समारभ्य ।
शठवनिताधरखण्डन उत्पन्नं कौशलं कुतो भवतः ॥ ४१९ ॥
शुश्रूषणमेव गुरोः परिशीलितमचलचेतसा सततम् ।
कुटिलमतयो भुजिष्याः कथं त्वयाराधिता निपुणाः ॥ ४२० ॥
आम्नायपाठ एव स्फुटतरपदसौष्ठवं तव ख्यातम् ।
प्रकुपितवेश्यानुनये क्व शिक्षितं वचनचातुर्यम् ॥ ४२१ ॥
अथवा किं क्रियतेऽस्मिन्नवदातकुलेऽपि लब्धजन्मानः ।
सदसंस्तुता भवन्ति प्रागुपचितकर्मदोषेण ॥ ४२२ ॥
त्वयि विनिवेश्य कुटुम्बं परलोकहितार्जनैकविहितास्थः ।
स्थास्यामीति समीहितमनुदिवसं तद्विसंवदितम् ॥ ४२३ ॥
इत्यवगतलेखार्थे सुन्दरमेने विधेयसंमूढे ।
आर्यामगायदन्यः स्वावसरे गीतिपरिकलिताम् ॥ ४२४ ॥
'विषयतिमिरावृताक्षणामवटे पततामदृष्टमार्गाणाम् ।
पुंसां गुरुजनवचनद्रव्यशलाकाञ्जनं शरणम् ॥ ४२५ ॥
उद्वेजयति तदात्वे सुखसंवृद्धिं करोति परिणामे ।
कटुकौषधप्रयोगो गुरुनिगदितकार्यनिष्ठुरं वचनम् ॥ ४२६ ॥'
लब्ध्वा वचसोऽवसरं मित्रमवादीत्पुरंदरापत्यम् ।
पुनरपि नहि खिद्यन्ते प्रियजनहितभाषणे सन्तः ॥ ४२७ ॥

---

१. 'रणित' इति पा०. २. 'निपुण' इति पा०. ३. 'विहितास्थः' इति पा०. ४. 'सं-
हतिम्' इति पा०. ५. 'लब्ध्वापि वचोऽवसरम्' इति पा०.

अगणितसहचरवचसो दुर्व्यसनमहाब्धिमग्नवपुषस्ते ।
मन्युव्यथितस्य पितुर्यदि परमवलम्बनं वचनम् ॥ ४२८ ॥
निजवंशदीपभूतः कृतचरितालंकृतो महासत्त्वः ।
सुन्दर संप्रति तातः स्पृष्टो दुष्पुत्रदोषेण ॥ ४२९ ॥
पुत्राभावः श्रेयान्न कुसुतता पुत्रिणः कुलीनस्य ।
अन्तस्तापयति भृशं मच्चरितकथाप्रसङ्गेन ॥ ४३० ॥
सांव्यवहारित एव प्रायो लोके गुणः सुखानियतः ।
येन तु सुतेन जननी वन्ध्यात्वं श्लाघते स पापीयान् ॥ ४३१ ॥
विफलं शास्त्रज्ञानं गुरुगृहमेवापि नोपकाराय ।
नियतिवशीकृतमनसो न्याय्यं पन्थानमुत्सृजतः ॥ ४३२ ॥
जीवन्नेव मृतोऽसौ यस्य जनो वीक्ष्य वदनमन्योन्यम् ।
कृतमुखभङ्गो दूरात्करोति निर्देशमङ्गुल्या ॥ ४३३ ॥
नोपनिहन्तुं विषयाः शक्याः सत्यं तथापि निपुणधियः ।
अभिभवतां न गच्छन्त्यपवादविशेषिताभिधानस्य ॥ ४३४ ॥
गुरुपरिचर्या जाया गुणोन्नता स्निग्धबन्धुसंपर्कः ।
ब्राह्मे कर्मणि सक्तिर्लोकद्वयसाधनं सुधियाम् ॥ ४३५ ॥
सुलभा तस्य विभूतिस्तस्य गुणा यान्ति जगति विस्तारम् ।
बहु मनुते तं सुजनस्तस्मै स्पृहयन्ति बान्धवाः सततम् ॥ ४३६ ॥
नासादयति य एकः सत्सेवितमार्गतः परिस्खलनम् ।
मण्डयति चान्ववायं स निवासः शर्मणामशेषाणाम् ॥ ४३७ ॥ (युग्मम्)
स भवति विनयाधारो युक्तायुक्ते विवेकिता तस्य ।
वृद्धोपदेशवाचः श्रवणोदरपूरणं सदा यस्य ॥ ४३८ ॥
प्राक्तनकर्मविपाकः भुद्रासु शरीरिणां यदासक्तिः ।
आयतनं तु सुखानां संसारभुवां कुलोद्गता दाराः ॥ ४३९ ॥

---

१. प्रसिद्धेयमार्या शार्ङ्गधरपद्धत्यादिषु. २. 'भङ्गम्' इति पा०. ३. 'कुलोद्गता' इति पा०.

निर्विण्णे निर्विण्णा मुदिते मुदिता समाकुलाकुलिते ।
प्रतिबिम्बसमा कान्ता संक्रुद्धे केवलं भीता ॥ ४४० ॥
यावद्वाञ्छितसुरतव्यायामसहाविरुद्धसंपर्का ।
चित्तानुवृत्तिकुशला पुण्यवतामेव जायते जाया ॥ ४४१ ॥
मद्भावप्रेमलं····संवलयावलि························ ।
ईदृक्कोऽप्यनुबन्धो यस्य.विपाकोऽप्रतीकारः ॥ ४४२ ॥ (मंदानितकम्[1]
परुषं यदभिहितासि प्रणयरुषाशङ्कितेन नर्मणि वा ।
सुदति न तत्स्मरणीयं दुर्भाषणकीर्तनोद्वाते ॥ ४४३ ॥
तव हृदये हृदयमिदं विन्यस्तं न्यासपालनं कष्टम् ।
यत्नात्तथा विधेयं स्थानभ्रंशो यथा न स्यात् ॥ ४४४ ॥
अथ विरतवचोदयितं बाष्पभराश्लिष्टवर्णपदयोगम् ।
इति कथमपि हारलता संमूर्च्छितवर्णभारतीमूचे ॥ ४४५ ॥
अविशुद्धकुलोत्पन्ना देहार्पणजीविका शठाचरणा ।
क्वाहं रूपाजीवा क्व भवन्तः श्लाघनीयजन्मगुणाः ॥ ४४६ ॥
यत्त्वं विषयविलोकनकुतूहलादागतोऽसि विश्रान्तः ।
इयतो दिवसानस्मिंस्तन्मम परजन्मसुकृतफलम् ॥ ४४७ ॥
गुरुसेवां बन्धुजनं स्वदेशवसतिं कलत्रमनुकूलम् ।
अनुषङ्गदृष्टपरिचित आस्थां प्रविधाय कः परित्यजति ॥ ४४८ ॥
यौवनचापलमेतद्यन्मादृशि भवति कौतुकं भवताम् ।
यत्तु सुखमनवगीतं तस्य स्थानं निजा दाराः ॥ ४४९ ॥
ते मधुराः परिहासास्ता वक्रगिरः स वामतासमयः ।
नो हृदये कर्तव्यो रहसि क्षेमार्थिना भवता ॥ ४५० ॥
लाघवतो यन्महतः प्रणयाद्वासाधु येन्नवाचरितम्[2] ।
प्रतिकूलं तत्र मया नाथाञ्जलिरेष विरचितो मूर्ध्नि ॥ ४५१ ॥
दुःसंचारा मार्गा दूरे वसतिर्विसंष्ठुलं हृदयम् ।
गुणपालित तव सुहृदा भवितव्यमतोऽप्रमत्तेन ॥ ४५२ ॥

1. संदानितकादग्रे किंचित्त्रुटितं भाति. पुस्तकद्वयेऽप्येवमेव वर्तते. २. 'यत्र' इति पा०

हृदयद्वय एकत्वं याते यूनोर्वियोगजं क्लेशम्।
अनुभवतोरपरेण प्रसङ्गतः पठ्यते पथ्या ॥ ४९३ ॥
'अन्योन्यगूढचेष्टितसद्भावस्नेहपाशबद्धस्य।
विच्छेदकरोर्मृत्युर्धीराणां वा परिच्छेदः ॥ ४९४ ॥'
अथ तच्छ्रवणानन्तरमस्निग्धं दयितिके व्रजामीति।
अभिधाय याति मुन्दरमेनेऽपि विवर्तितग्रीवम् ॥ ४९५ ॥
वटशाखालम्बिभुजां श्वसितोष्णसमीरशुष्यदधरदलाम्।
पर्यस्तां बिभ्राणां तन्मार्गविलोकनानिमेषदृशम् ॥ ४९६ ॥
लोलायमानवेणीतिर्यक्कृतकण्ठभूषणविशेषाम्।
गलदश्रुवारिपूर्णां पतितां संशुष्कनिःसहाङ्गलताम् ॥ ४९७ ॥
रुन्धानामिव हृदयं स्फुटदितरकरेण कुचयुगाश्रयिणा।
परिशोषितां विलासैरुत्सृष्टां जीवलोककर्तव्यैः ॥ ४९८ ॥
अङ्गीकृतां विपत्त्या वशीकृतां मर्मघट्टनैर्विषमैः।
हारलतामपि रिक्तामन्तः परिकुप्यमाणभारत्या ॥ ४९९ ॥
मा मा तावद्यात क्षणमेकं यावदेष निष्करुणः।
वनगुल्मैर्न तिरोहित इत्यभिदधतीं जहुः प्राणाः ॥ ४६० ॥ (कुलकम्)
अथ वर्त्मनि समुपेतं पप्रच्छ पुरंदरात्मजः पथिकम्।
दृष्टा शोकव्यथिता निवर्तमाना वराङ्गना भवता ॥ ४६१ ॥
स उवाच वटतरोरध उर्व्यां पतिता विनिश्चलावयवा।
तिष्ठति वनिता नान्या नयनावसरं गतास्माकम् ॥ ४६२ ॥
इति तद्वचनास्त्रहतो विह्वलमूर्तिः पपात भूपृष्ठे।
उत्थापितश्च सुहृदा सोऽभिदधे तेन शोकविकलेन ॥ ४६३ ॥
भवतु कृतार्थस्तातस्त्वमपि सुमित्रात्र सांप्रतं प्रीतः।
समकालमेव मुक्ता पापेन मयासुभिश्च हारलता ॥ ४६४ ॥
हा हा हाव हतोऽसि ध्वस्ता लीला विलास किं कुरुषे।
उच्छिन्ना विच्छित्तिर्भ्रम विभ्रम दशदिशो निराधारः ॥ ४६५ ॥

---

१. परिच्छेदो विवेक इत्यर्थः. २. अग्रे किंचित्त्रुटितमिव भाति.

किलकिञ्चित गच्छ वनं मोट्टायितमशरणत्वमुपयातम् ।
कुट्टमित प्रव्रज्यां गृहाण बिब्बोक विश भुवो विवरम् ॥ ४६६ ॥
ललितमनाथीभूतं विहृतस्य गतिर्न विद्यते क्वापि ।
शशधरबिम्बद्युतिमुषि यातायामन्तकस्यान्तः ॥ ४६७ ॥
विनिवृत्त्य यामि दग्धुं मद्विरहात्त्यक्तवल्लभप्राणाम् ।
भवतु वराक्यास्तस्याः सप्तार्चिर्दानमात्रमुपकारः ॥ ४६८ ॥
गत्वाथ तमुद्देशं यस्मिन्सा पञ्चभावमापन्ना ।
विललाप मुक्तकण्ठं विलुठन्भुवि सहचरेण धृतमूर्तिः ॥ ४६९ ॥
एते वयं निवृत्ता मुञ्च रुषं देहि कोपने वाचम् ।
उत्तिष्ठ किमिति तिष्ठसि भूमितले रेणुरूषितशरीरा ॥ ४७० ॥
विनिमील्य दृशौ कस्मादप्रतिपत्त्या स्थितासि शुभवदने ।
त्वद्वारितगमनविधेरपराधितया न मेऽस्ति संयोगः ॥ ४७१ ॥
नाकाधिपतिपुरस्त्रीरभिभवितुं त्वयि दिवं प्रयातायाम् ।
सत्स्वपि शरेषु पञ्चसु निरायुधः सांप्रतं मदनः ॥ ४७२ ॥
वञ्चकवृत्ता वेश्या इत्यपवादो जनेषु यो रूढः ।
अपनीतोऽसौ निपुणं त्वया प्रिये जीवमोक्षेण ॥ ४७३ ॥
वर्ण्यः सद्भूत एकस्त्रिपुरान्तकनन्दनो महासेनः ।
हृदयं यस्य स्पृष्टं न मनागपि वामलोचनाप्रेम्णा ॥ ४७४ ॥
मन्येऽभीष्टवियोगं निमेषमपि दुःसहं समालोक्य ।
हरिणा वक्षसि लक्ष्मीर्विधृता गौरी हरेण देहार्धे ॥ ४७५ ॥
अयि लोकपाल सा भुवि ललामभूता तया विना शून्यम् ।
विश्वमिति किं न चिन्तितमात्मस्थानं प्रियां नयता ॥ ४७६ ॥
भगवन्हुतवह मा मा लावण्यसमुद्रसारमुद्धृत्य ।
कथमपि विहितां धात्रा धक्ष्यस्येनां जगद्भूषाम् ॥ ४७७ ॥
इति विलपन्तं बहुविधमेवधीर्य सुहृत्पुरंदरस्य सुतम् ।
काष्ठैर्विरचय्य चितां तामकरोदग्निसाद्गणिकाम् ॥ ४७८ ॥

---

१. 'मुखि' इति पा०. २. 'विरहे मुक्त' इति पा०. ३. 'अवधार्य' इति पा०.

तस्मिन्निद्धहुताशनविनिपतने कृतमतौ शुचा कलिते।
मनसि स्फुरितामार्यां पपाठ कश्चित्प्रसङ्गेन ॥ ४७९ ॥
'अनुमरणे व्यवसायं स्त्रीधर्मे कः करोति सविवेकः।
संसारमुक्त्युपायं दण्डग्रहणं व्रतं हित्वा ॥ ४८० ॥'
श्रुत्वा सुन्दरसेनः सुहृदमवोचद्व्यपेतवैक्लव्यः।
प्रतिबोधितं मनो मे धीरेणानेन युक्तमुपदिशता ॥ ४८१ ॥
क्षणदृष्टनष्टवल्लभजन्मजराव्याधिमरणपरिभूते।
परिवर्तिनि संसारे कः कुर्यादाग्रहं मतिमान् ॥ ४८२ ॥
यातु भवान्कुसुमपुरं वयमप्यन्त्याश्रमे समाश्रयणम्।
अङ्गीकुर्मोऽविद्याप्रहाणसंसिद्धये नियतम् ॥ ४८३ ॥
सोऽवददभिजातजनो बाल्यात्प्रभृति त्वया न मुक्तोऽस्मि।
संयमनबुद्धिरधुना कथमुज्झति विषयनिःस्पृहं सुहृदम् ॥ ४८४ ॥
एवमिति सोऽभिधाय स्थिरमतिनियमैस्तपोधनैर्जुष्टम्।
गुणपालितेन सहितः सुन्दरसेनो जगाम वनम् ॥ ४८५ ॥'
एवं भवन्ति वेश्याः स्वार्थेकरता व्यपेतसद्भावाः।
अभिलषितविषयसिद्धेः का हानिस्तदपि युष्माकम् ॥ ४८६ ॥
रमणहृदयानुवर्तनचतुरचतुःषष्टिकर्मकुशलानाम्।
न स्पृशति तत्त्वचर्चा पण्यवधूनां विदग्धचेतांसि ॥ ४८७ ॥
वल्गितप्लुतचित्रगतिस्थितिबोधैश्चोदनानुवृत्त्या च।
रागस्पर्शेन विना विशति मनः सादिनां तुरगः ॥ ४८८ ॥
गन्धोऽपि कुतः प्रेम्णः परभृतहारीतगृहकपोतानाम्।
उज्ज्वलयन्त्यसमेषुं विरुतविशेषैस्तथापि ते यूनाम् ॥ ४८९ ॥
आहितमुक्ताहार्यः सम्यक्सकलप्रयोगसंपत्त्या।
भावविहीनोऽपि नटः सामाजिकचित्तरञ्जनं कुरुते ॥ ४९० ॥
येऽपि धनक्षयदोषं पश्यन्ति जडा विलासिनीश्लेषे।
प्रष्टव्यास्ते भवता किमकृतकशिपुव्ययया दाराः ॥ ४९१ ॥

१. 'जने' इति पा०. २. 'युक्ताहार्यः' इति पा०.

न च लाभ एक एव प्रवर्तते कारणं मनुष्येषु ।
बाणादयोऽपि(?) तासां वैशेषिकशास्त्रवेदिभिः कथिताः[1] ॥ ४९२ ॥
का वा विभूतिरासा सुन्दरसेनात्तया तपस्विन्या ।
यद्विरहकुलिशभिन्ना मुमोच या जीवितं क्षणार्धेन ॥ ४९३ ॥
उत्तमतरुणप्रकृतिः पुलकादिकसूचितान्यतरशक्तिः ।
स्फुटसंनिहितविभावो निवार्यते केन शृङ्गारः ॥ ४९४ ॥
अन्तःकरणविकारं गुरुपरिजनसंकटेऽपि कुलटानाम् ।
जानन्ति[2] तदभियुक्ता भ्रूभङ्गापाङ्गमधुरदृष्टेन ॥ ४९५ ॥
अन्या विहाय पतिगृहमविचिन्तितकुलकलङ्कजनगेहाः ।
रागोपरक्तहृदया यान्ति दिगन्तं मनुष्यलाभाय[3] ॥ ४९६ ॥
अपमानः पतिविहितो गुरुपरिकरतीव्रता गृहे दौःस्थ्यम् ।
शीलक्षतये यासां तासामतिरागतोऽन्यनरसक्तिः ॥ ४९७ ॥
या अप्यचलितवृत्ता भर्तुश्चरणाब्जतत्पराः प्रमदाः[4] ।
ता अपि रागविमुक्तास्तिष्ठन्त्यौचित्यमात्रेण ॥ ४९८ ॥
तस्मादात्माभिगमनविविधनिमित्तं विधार्यते केन ।
निजपरपण्यस्त्रीणां रागाधीनं तु हृदयनिर्वहणम् ॥ ४९९ ॥
एवंविधदृष्टान्तैरुपपत्तियुतैस्तथैदृशैर्वाक्यैः ।
अन्यैरपि चाटुपदैरावर्जितमानसं गम्यम् ॥ ५०० ॥
विहितस्वापरबोधं किंचित्प्रकटीकृतश्रमं दाक्ष्यात् ।
उत्पादितजृम्भिकया परिरभ्य घनं निशापगमे ॥ ५०१ ॥
विघटितविनिमुद्रदृशा विलोक्य ककुभः सुदीर्घनिःश्वासम् ।
वक्तव्यमिति भवत्या रजनि खले किं प्रभातासि ॥ ५०२ ॥
अबला[5] विषहेत कथं दृढशक्तिममुष्य रतिरमप्रसरम् ।
मदनतुलितानुरागो न विदध्याद्यदि बलाधानम् ॥ ५०३ ॥

---

१. 'कथितम्' इति पा०. २. 'बुध्यन्ति' इति पा०. ३. 'आसाद्य' इति पा०. ४. 'कुलप्रमदाः' इति पा०. ५. 'अवशा' इति पा०.

चक्राह्ववधूप्रियतमसंघट्टनसमयसंप्राप्त्या।
शशिना वियुज्यमाना कुमुदिनि किं क्षीणपुण्यासि॥ १०४॥
विकसितसुरभिमनोहरसंस्थानं कुसुममप्राप्तम्।
न करोति तथा पीडामास्वादितविच्युतिं यथा भृङ्गः॥ १०५॥
विज्ञापयाम्यतस्त्वां रचिताञ्जलिमाविधाय नतिम्।
परिचारकजनमध्ये गणनीयाहं प्रसादेन॥ १०६॥ (युग्मम्)
अथ दीपितरागाङ्कैरपहस्तितमार्गसंभ्रमोपचितैः।
मृदुभिश्चित्रानुगतैरुपचारैः पातितस्य विश्वासे॥ १०७॥
अवलोकितोऽसि लम्पट किमपि वदन्कर्णसंनिधौ नियतम्।
संकटसेनाधात्र्या अद्य मया जालमार्गेण॥ १०८॥
मालत्या सह किंचिदभिदधामि सखे ममेति न विरोधः (?)।
यत्तु चिरं स्निग्धदृशा पश्यसि तां तत्र मे शङ्का॥ १०९॥
त्वामागता न वीक्षितुमनुबध्य न याचितः प्रयत्नेन।
आहूय वद किमर्थं ताम्बूलं ग्राहिता कमलदेवी॥ ११०॥
कञ्चुकमपकर्षन्त्याः प्रकटीभवदङ्गकुचपार्श्वम्।
साभिनिवेशं दृष्टं भवता किं कुन्दमालायाः॥ १११॥
परिहासेन गृहीता यद्यंशुकपल्लवे त्वया रामा।
आच्छिद्यापक्रान्ता किं त्वामवलोक्य पृष्ठतः सहसा॥ ११२॥
विज्ञानेन ख्यातां कुसुमलतां त्वं तु वर्णयस्यनिशम्।
नृत्यन्तीं मृगदेवीं विस्फारितलोचनः पश्यन्॥ ११३॥
कारणमत्र न वेद्म्यहमृजुपन्थानं प्रसिद्धमुत्सृज्य।
वक्रेण यदेषि सदा माधवसेनागृहाग्रेण॥ ११४॥
इति सेर्ष्योपन्यासैरन्यैश्चाममर्मवेधिलघुकोपैः।
प्रणयप्रभवैर्विहिते क्षामोदरि गूढरागत्वे॥ ११५॥

१. 'वधूः' इति पा०. २. 'विच्युतं तथा भृङ्गाः' इति पा०. ३. 'शंकरसेना' इति पा०. ४. 'अंसकुच' इति पा०.

श्रुतिविषयेऽन्तरिततनुर्जनितस्थितिरायताक्षि सह मात्रा ।
परुषगिरा त्वं कुर्या इत्थं मिथ्यावचः कलहम् ॥११६॥ (अन्तःकुलकम्)

अक्लेशोपनतधनः प्रेमप्रह्वो निरर्गलत्यागः ।
भट्टानन्दस्य सुतो निधिभूतोऽभव्यया त्वया त्यक्तः ॥ ११७ ॥
व्यसनोपहतविवेको दानैकरतिः स्वदारविद्वेषी ।
मामविगणय्य मूढे निर्भर्त्सित एव केशवस्वामी ॥ ११८ ॥
अगणितराजापायोऽविच्छिन्नायः स्वभावतस्त्यागी ।
स्वकरेण परित्यक्तो वामधिया शौण्डिकाध्यक्षः ॥ ११९ ॥
पितुरेक एव पुत्रस्तृतीयवयसो गदाभिभूतस्य ।
द्रविणवतः प्रभुरातो निराकृतो भूरिकामया सोऽपि ॥ १२० ॥
स्वकरेण परित्यक्ता त्वया विभूतिः करोमि किं पापा ।
सर्वभरेणोपनतं वसुदेवमनादरेण पश्यन्त्या ॥ १२१ ॥
पुरुषान्तरसंघर्षात्प्रोत्साहितचित्तवृत्तिनिरपेक्षम् ।
वसु विसृजति यो रभसात्तस्य न वार्ता त्वया दृष्टा ॥ १२२ ॥
चित्रादिकलाकुशलः स्मरशास्त्रविलक्षणो वृषप्रकृतिः ।
उपकुर्वन्नपि सर्वो विद्वेषिगणे त्वया क्षिप्तः ॥ १२३ ॥
चन्द्रवतीमाभरणं दत्तं मधुसूदनस्य पुत्रेण ।
पश्यन्ती विभ्राणामयि रागिणि किं न ह्रीतासि ॥ १२४ ॥
ग्रामोत्पत्तिमशेषां पश्यन्ती सिंहरागविनियोगात् ।
मन्मथसेनावासे लघयति ते रूपसौभाग्यम् ॥ १२५ ॥
आस्तामपरो लाभो भट्टाधिपनन्दिसेनतनयेन[1] ।
शिवदेव्या उपचारः क्रियते यत्नेन पर्याप्तम् ॥ १२६ ॥
पश्येदं धवलगृहं पाशुपताचार्यभावशुद्धेन ।
कारितमनङ्गदेव्या विभूषणं पत्तनस्य सकलस्य ॥ १२७ ॥
आपणिकार्थस्य कुतो राजा लभते चतुर्थमपि भागम् ।
हट्टपतिरामसेनप्रसादतो नर्मदा यमुपभुङ्क्ते ॥ १२८ ॥

१. 'नन्दिषेण' इति पा०.

पुंस्त्वाख्यापनकामो न स्त्री न पुमान्किल प्रभुस्वामी।
अनुबध्नन्नुपहसितस्त्वया जडः स्वार्थमनपेक्ष्य ॥ ५२९ ॥
वाजीकरणैकमतिर्नरनाथानुग्रहेण विख्यातः।
प्रत्याख्यातः स तथा रविदेवः किंकरत्वमाकाङ्क्षन् ॥ ५३० ॥
किं कंदर्पकुटुम्बे जातोऽसावुत वशीकरणयोगात्।
कामप्यवैति सिद्धिं येनाकृष्टासि सर्वभावेन ॥ ५३१ ॥
बाल्ये तावदयोग्या पश्चादपि वृद्धभावपरिभूता।
तारुण्ये रागहता यदि गणिका भ्रमतु तद्भिक्षाम् ॥ ५३२ ॥
उपनय भाण्डकमेनद्यदर्जितं मामकेन देहेन।
विदधामि तीर्थयात्रामास्व सुखं प्रेयसा सार्धम् ॥५३३॥ (अन्तःकुलकम्)
आर्यजनानन्दितानां पापकर्मप्रकाशनैकनारीणाम्।
एतावानेव गुणो यदभीष्टसमागमो निरावरणः ॥ ५३४ ॥
नो धनलाभो लाभो लाभः खलु वल्लभेन संयोगः।
अक्षिगतादर्थात्सिन्न भवति मनसः प्रसादाय ॥ ५३५ ॥
गाढानुरागभिन्नं तारुण्यसुखामृतेन संसिक्तम्।
न भजति सहृदयहृदयं विभवार्जनसंभवा चिन्ता ॥ ५३६ ॥
लाभः स एव परमः पर्याप्तं तेन तृप्तास्मि।
विनिवेश्य यदुत्सङ्गे निक्षिपति मुखे स ताम्बूलम् ॥ ५३७ ॥
सुरतश्रमवारिकणान्परिमार्ष्टि निजांशुकेन गात्रेषु।
यदुरसि निधाय पङ्कं तस्य न मूल्यं वसुंधरा सकला ॥ ५३८ ॥
शिथिलितनिजदाररतिर्मयि सक्तमना अनन्यकर्तव्यः।
यदसौ जितनलरूपस्तिरस्कृतं तेन गाणिक्यम् ॥ ५३९ ॥
बहुकुसुमरसास्वादं कुर्वाणा मधुकरीव विधियोगात्।
ईदृक्पुरुषविशेषं लभते खलु येन भवति कृतकृत्या ॥ ५४० ॥

१. 'जडे' इति पा०. २. द्रष्यादित्यर्थः. ३. 'सकलस्तस्य' इति पा०. ४. 'मधुकरी विधिनियोगात्' इति पा०.

अयि सरले तावदिमा उपदेशगिरो वसन्ति कर्णान्तः ।
यावन्नान्तर्भूतं तच्चेतसि मामकं चेतः ॥ ९४१ ॥
श्रीरस्तु दुर्गतिर्वा वेश्मनि वासो भवत्वरण्ये वा ।
स्वर्लोके नरके वा किं बहुना तेन मे सार्धम् ॥ ९४२ ॥
इदमास्तेऽलंकरणं दुर्जननि गृहाण किं ममैतेन ।
तेनैव भूषिताहं गुणनिधिना भट्टपुत्रेण ॥ ९४३ ॥
उचितस्थाननियुक्तान्यपनीय विभूषणानि सावेगम् ।
एवमभिधाय यास्यसि मातुः पुरतः समुत्सृज्य ॥९४४॥ (कुलकम्)
इति रागान्ध श्रुत्वा चेतसि कुरुते कदाचिदेवमिदम् ।
स्नेहाधिष्ठितमनसामविधेयं नास्ति नारीणाम् ॥ ९४५ ॥
जननीं जन्मस्थानं बान्धवलोकं वसूनि जीवं च ।
पुरुषविशेषासक्ताः सीमन्तिन्यस्तृणाय मन्यन्ते ॥ ९४६ ॥
रणशिरसि हते वज्रे वज्रोपमयन्त्रनिर्गतप्राणा ।
प्राणान्मुमोच दयिता न मन्त्रविधिना कृतानुयारामा (?) ॥ ९४७ ॥
कालवशेनायासीत्पञ्चत्वं दाक्षिणात्यमणिकण्ठः ।
प्रेमोपगता वेश्या तेनैव समं जगाम पञ्चत्वम् ॥ ९४८ ॥
भास्करवर्मणि याते सुरवसतिं वारितापि भूपतिना ।
तद्दुःखमसहमाना प्रविवेश विलासिनी दहनम् ॥ ९४९ ॥
ज्वालाकरालहुतभुजि नग्नाचार्यः पपात नरसिंहः ।
तस्मिन्नेव शरीरं निजमजुहोच्छोकपीडिता दासी ॥ ९५० ॥
प्रीतिभराक्रान्तमतिस्त्रिदशालयजीविकां क्रमोपगताम् ।
अङ्गीचकार मुक्त्वा जीर्णा खलु मिश्रपुत्रसा मृत्योः ॥ ९५१ ॥
देशान्तरादुपेता प्रमादमात्रेण वीक्षिता वनिता ।
तत्याज न पादयुगं समरे निहतस्य वामदेवस्य ॥ ९५२ ॥

१. 'कृतानुयागमा' इति पा०. २. 'भस्मत्वम्' इति पा०. ३. 'क्रमोपनताम्' इति पा०. ४. 'भट्टपुत्रम्' इति पा०.

भट्टकदम्बकतनये याते वसतिं परेतनाथस्य।
चक्रे देहत्यागं रणदेवी वारयोषितां मुख्या ॥ ५५३ ॥
अस्यामेव नगर्यां द्रविणमदात्कालसंचितमशेषम्।
प्रेम्णाकृष्टा गणिका मिश्रात्मजनीलकण्ठाय ॥ ५५४ ॥
इयमपि विहितास्था मां मातृवचःकलुषिता क्व गता।
त्यक्त्वाभरणं सर्वं परिवर्धितमन्युसंवेगा ॥ ५५५ ॥
उत्सृष्टालंकरणां परिशोषितमातृमुक्तपरिवाराम्।
संतर्पयामि संप्रति सर्वस्वेनापि हरिणाक्षीम् ॥ ५५६ ॥
गेहेन किं प्रयोजनमन्यैरपि बन्धुदारपरिवारैः।
संसारग्रहकारणमेका खलु मालती मम हि ॥ ५५७ ॥
अमृतकरावयवैरिव घटिता या दृढतरं परिष्वक्ता।
चेतो नयति समत्वं ब्रह्मण आनन्दरूपस्य ॥ ५५८ ॥
आविर्भवदात्मभवक्षोभक्षतधीरताद्य धृतरभसा।
विगलितकुचयुगलावृतिगालिङ्गति मालती धन्यम् ॥ ५५९ ॥
निर्दयतरौष्ठखण्डनमव्यथहुंकारमूर्छितं सुरते।
अहहेति वचस्तस्या अपुण्यभाजो न शृण्वन्ति ॥ ५६० ॥
स्मृतिजन्मजनितविकृतिव्रततिच्छन्नं करोति संसारम्।
आबद्धसुरतसंगरविमर्दसंक्षोभिता दयिता ॥ ५६१ ॥
गाढतराश्लिष्टवपुर्भजते कान्ता प्रमोदसंमोहम्।
शिथिलीकृता तु किंचिद्विविधविकारं समुच्छ्वसिति ॥ ५६२ ॥
सन्त्यन्या अपि सत्यं पुरुषोचितकर्मपण्डिता वेश्याः।
सृष्टानया तु नियतं विपरीतरतक्रियागोष्ठी ॥ ५६३ ॥
तन्त्रीवाद्यविशेषादुद्दामानन्यजन्मनस्तस्याः।
कुहरितरेचितकम्पितसंपादननैपुणं करोति रुजम् ॥ ५६४ ॥

१. रतवतीत्यर्थः. २. 'भट्टात्मज' इति पा०. ३. 'नु गता' इति पा०. ४. 'घनरभसात्' इति पा०. ५. 'तया' इति पा०.

ललिताङ्गहारजृम्भितवलितस्मितवेपनानि मालत्याः ।
पश्यन्नहाति कामो रतिमोहनचेष्टितेषु बहुमानम् ॥ १६५ ॥
न ग्राम्यं परिहसितं नाविभ्रमतरलिताक्षिविक्षेपः ।
[1]सुरतानुद्योगविधौ दोहददानं न पुष्पबाणस्य ॥ १६६ ॥
नार्थपरो नयनरसो न पराशयवेदने विचक्षणता ।
नासौष्ठवं प्रमङ्गे न [2]चान्यगुणकीर्तनेषु भारत्याः ॥ १६७ ॥
नापरपुरुषश्लाघा न त्यागः कालदेशवेपस्य ।
वैदग्ध्यजन्मभूमेर्गुरुजघनभरेण मन्दयातायाः ॥१६८॥ (विशेषकम्)
चक्राह्वपरिष्वजनं हंसममाश्लेषनकुलपरिरम्भम् ।
पारावतावगूहनमाचरति सुमध्यमा यथावसरम् ॥ १६९ ॥
तद्वक्रवदनहास्यव्यवहातिहृतमानसस्य जायन्ते ।
अनुकूलसुन्दरा अपि भरणीयाः केवलं दाराः ॥ १७० ॥
सूचयति पृथक्करणं भ्रातॄणां वक्ति विषमशीलत्वम् ।
विवृणोति गृहविसंस्थामभिनन्दति पितृकुलस्य गुणवत्ताम् ॥१७१॥
अन्यसुतपक्षपातं कथयति मातुस्तिरस्करोति पतिम् ।
पार्श्वनिमग्नां जायां मानयति विमुच्य कामुकं मदनः ॥ १७२ ॥
एवं कृतेऽपि सुन्दरि यदि तिष्ठति नायकः प्रकृत्यैव ।
इत्थं पथि परिमोषस्त्वन्मख्या नैपुणेन वक्तव्यः ॥ १७३ ॥
गृहकार्यव्यग्रतया [3]चित्तग्रहणाय वा कुलस्त्रीणाम् ।
[4]नायाते भवति सखी प्रावृड्घनकलुषिते दिशां चक्रे ॥ १७४ ॥
प्राग्ग्रीवकशयनगता स्फारीभवदात्मसंभवविकारा ।
त्वद्वर्त्मनिहितनेत्रा गीतामन्येन गीतिकामशृणोत् ॥ १७५ ॥
'यदि जीवितेन कृत्यं संभावय विरहिणि प्रियं तूर्णम् ।
घनरसितस्य हि पुरतः कदलीदलकोमलः कुलिशपातः ॥१७६॥'

---

१. 'सुरतावुद्योगविधौ' इति; 'सुरतोद्योगनिधौ' इति च पा०. २. 'वा' इति पा०. ३. 'वित्तग्रहणाय' इति पा०. ४. 'नायाता' इति पा०.

आकर्ण्य मामवादीद्धन्यास्ता युवतयः सखि कठोराः ।
या विषहन्ते दीर्घप्रियतमविरहानलासारम् ॥ ९७७ ॥
मम तु दिनान्तरितेऽपि प्रेयमि लब्ध्वा सहायसामग्रीम् ।
विदधाति मकरकेतन उत्कलिकाविधुरितं हृदयम् ॥ ९७८ ॥
उत्कण्ठयति नितान्तं समीरणो बकुलकुसुमसंमोहः ।
प्रच्यावयन्ति धैर्यान्मधुरध्वनिभिः कलाप्रभृतः ॥ ९७९ ॥
सतडिन्मिलद्बलाकाममिताम्बुधरावलीं समुद्यन्तीम् ।
उत्सहते सा वीक्षितुमविरलमालिङ्गितो यया कान्तः ॥ ९८० ॥
स्वेच्छागमनलघुत्वं बहुलापायं निशासु पन्थानम् ।
न विचारयन्ति महिला अभीष्टजनसंगतावुत्काः ॥ ९८१ ॥
क्रियतां भूषणशोभा त्वरयति मे मानसं मनोजन्मा ।
रञ्जयति मनो नितरां कलधौतनिवेशितं रत्नम् ॥ ९८२ ॥
घनजलदावृतककुभि प्रदोषसमये प्रदोषगमनाय ।
विदधानया कुबुद्धिं रागान्धे किमिदमारब्धम् ॥ ९८३ ॥
वचनप्रपञ्चसारं जायाश्रितमन्यदेशसंबन्धम् ।
पुरुषमभिगन्तुकामा नवेयमभिसारिका दृष्टा ॥ ९८४ ॥
जलधौततिलकरचनां गलदम्भोलुलितकेशान्ताम् ।
तिम्यत्तनुलीलावृतिचण्डानिलसलिलपातकण्टकिताम् ॥ ९८५ ॥
अविभावितसमविषमप्रस्खलदङ्घ्रि सहायकरलग्नाम् ।
पुरतोऽध्वनः प्रमाणं मुहुर्मुहुः साध्वसेन पृच्छन्तीम् ॥ ९८६ ॥
अन्यस्त्रीषु च पत्यौ व्यग्रे कृच्छ्रेण कथमपि प्राप्ताम् ।
तत्कालयोग्यपरिजननिवेदितामिति विकल्पसदृशाविधौ ॥ ९८७ ॥
किं प्रेम्णोऽयं महिमा किमुतात्यन्तं धनप्रलोभस्य ।
किं वान्यतः प्रवृत्ता प्रवेपिता वातवर्षेण ॥ ९८८ ॥

---

१. 'अनलासारम्' इति पा०. २. 'संवाहः' इति पा०. ३. 'अविरतम्' इति पा०.
४. 'बहुलापं ये' इति पा०. ५. 'अन्यस्मिन्प्रेतपतौ' इति पा०.

संनिहितकलत्राणामनुचितमिति बाह्यलोकसंवदनात् ।
अन्यस्मिन्नुद्वसिते विमार्जितामिष्टमालतीकेन ॥ ५८९ ॥
लोकेन हास्यमानां बिभ्राणं वाससी जलक्लिन्ने ।
रूपमदमुत्सृजन्तीं वैलक्ष्याद्विहसितेन नतवदनाम् ॥ ५९० ॥
पश्चात्तापगृहीतां कण्टकदर्भाग्रभिन्नपादतलाम् ।
अस्मद्वचः स्मरन्तीं द्रक्ष्यन्त्यभिसारिकां सुकर्माणः ॥ ५९१ ॥
इति परुषमभिदधानां मातरमवधीर्य युष्मदभ्याशम् ।
चौरहतका व्रजन्तीं विद्राविततरक्षिणः मखीं ममुषुः ॥५९२॥ (महाकुलकम्)
एषा प्रपञ्चरचना यदि भवति वृथा पुरस्तस्य ।
वणिगिदमुपेत्य वक्ष्यति सहायसंचोदितो भवतीम् ॥ ५९३ ॥
पूर्वं दत्तस्योपरि मुक्ताहारस्य केदरास्त्रिंशत् ।
परिचारिकयानीता अन्यानपि मृगयते वयस्यकृते ॥ ५९४ ॥
यत्तु घनसारकुङ्कुमचन्दनधूपादि मुक्तकं दत्तम् ।
तत्संपुटके लिखितं शृणु पिण्डालिकां करोमि ते पुरतः ॥ ५९५ ॥
एतावन्तं कालं नावसरेऽभ्यर्थिता मया त्वमसि ।
रिक्तं भाण्डस्थानं सांप्रतमिति याचनं क्रियते ॥ ५९६ ॥
एवंवादिनि तस्मिन्किंचिल्लज्जानतेक्षणं दृष्ट्वा ।
प्रियपूर्वं प्रश्रितया वाचा वाच्यः सवैलक्ष्यम् ॥ ५९७ ॥
हारस्तवैव तिष्ठतु मध्यस्थस्थापितेन मूल्येन ।
शेषं ततो यदन्यत्तद्दिवसैः पूरयिष्यामि ॥ ५९८ ॥
इयमपि कपटग्रथना पूर्वसमा चेत्तदेदमभिधेयम् ।
आशङ्कन्तेऽनिष्टं कातरहृदया हि योषितः प्रायः ॥ ५९९ ॥
अपटुशरीरे स्वामिनि विज्ञप्ता भगवती मया गत्वा ।
भवतु निरामयदेहो जीवितनाथस्तव प्रसादेन ॥ ६०० ॥

---

१. केदर इति नाणकविशेषस्य संज्ञा इति भाति. 'केदाराः' इति पा०. २. 'य एष कृते' इति पा०. ३. 'नाचष्टे' इति पा०.

संपन्नवाञ्छितार्था बल्युपहारेण पूजयिष्यामि ।
सामग्रीविरहेण तु न वितीर्णं तत्र मे शङ्का ॥१०१॥ (विशेषकम्)
अस्मिन्व्यर्थीभूते रिक्तीकृतशून्यवेश्मनो दाहम् ।
उत्पाद्य मन्दगामिनि सर्वविनाशः प्रकाशमुन्नेयः ॥ १०२ ॥
स्निग्धत्वमलं बुद्ध्वा सहभोजनशयनवसनलिङ्गैन ।
एभिरुपायद्वारैर्नार्तिविरक्तस्त्वया कार्यः ॥ १०३ ॥
वार्धुषिककदर्थनया भोगध्वंसात्महायवंचनैर्वा ।
अवधारितेऽपि निपुणं वरगात्रि विलुप्तसारत्वे ॥ १०४ ॥
परुषवचोनिर्धारणसावल्यासोहठोपघातानि (?) ।
यत्नादमी विधेया गम्यस्य विमोक्षणोपायाः ॥ १०५ ॥
पृथगासननिर्देशः प्रत्युत्थानादिकेऽपि शैथिल्यम् ।
सासूयसोपहासा आलापा मर्मवेधि परिहसितम् ॥ १०६ ॥
तत्प्रतिपक्षश्लाघा तदधिकगुणगणकीर्तनावृत्तिः ।
वदति प्रियमाभीक्ष्णं बहुप्रलापित्वदूषणाख्यानम् ॥ १०७ ॥
वचनान्तरोपघातैस्तत्प्रस्तुतसत्कथासमाक्षेपः ।
तद्व्यवहारजुगुप्सा सव्यपदेशस्तदन्तिकत्यागः ॥ १०८ ॥
व्याजेन कालहरणं स्वापावसरे विवर्तनं शयने ।
निद्राभिभवस्वापनमुद्वेगः संमुखीकरणे ॥ १०९ ॥
गुह्यस्पर्शनिरोधः स्वभावसंस्थापनानुयोगेषु ।
चुम्बति वदनविकम्पनमालिङ्गति कठिनगात्रसंकोचः ॥ ११० ॥
असहिष्णुत्वं प्रहणनकररुहदशनक्षतप्रसङ्गेषु ।
दीर्घरते निर्वेदः स्वपिहीति रताभियोजके भयः ॥ १११ ॥
तदशक्तावनुबन्धो वैदग्ध्यविनाशने तथा हासः ।
राज्यवसानस्पृहया पुनः पुनर्यामिकप्रश्नः ॥ ११२ ॥

---

१. 'राहात्' इति पा०. २. वृद्ध्याजीवी वणिग्वार्धुषिक इत्युच्यते. ३. 'अवधीरिते' इति पा०. ४. 'सां हतोपघातोनि' इति पा०. ५. 'तदति' इति पा०. ६. 'शङ्कया' इति पा०. ७. 'नियोगेषु' इति पा०. ८. 'वदनवियोजन' इति पा०. ९. 'रतानि योजके' इति पा०.

निःसरणं वासगृहादुषसि समुत्थाय तल्पतस्त्वरया ।
ससंभ्रममुदीरयन्त्या निशा प्रभाता प्रभातेति ॥ ६१३ ॥
उभयेच्छया प्रवृत्तं निरुपाधि प्रेम भवति रमणीयम् ।
अन्योन्यसमासक्तौ संस्थानमिवाभिजातमणिहेम्नोः ॥ ६१४ ॥
यस्त्वेकाश्रयरागः परिभवदौर्बल्यदैन्यनाशानाम् ।
स निदानमसंदिग्धं माता प्रति दशमुखस्येव ॥ ६१५ ॥
यानि हरन्ति मनांसि न ललितस्मितवीक्षितानि रक्तानाम् ।
तान्येव विरक्तानां प्रतिभान्ति विवर्तितानीव ॥ ६१६ ॥
विदधातु किमपि कथमपि निगृह्यमाणा मुहूर्तमासिष्ये ।
इति यत्र मनः स्त्रीणां तत्रापि रमन्त एव पशुतुल्याः ॥ ६१७ ॥
यत्र न मदनविकाराः सद्भावसमर्पणं न गात्राणाम् ।
तस्मिन्मुद्रितभावे पशुकर्मणि पशव एव रज्यन्ते ॥ ६१८ ॥
[1]अवधीरणयोपहतः प्रतिदिवसं हीयमानसद्भावः ।
अभिमानवान्मनुष्यो योषितमूढामपि त्यजति ॥ ६१९ ॥
साक्षिनिकोचं सख्याः पाणितलं पाणिना समाहत्य ।
यन्नरमुपहसति स्त्री ददातु तस्मै मही रन्ध्रम् ॥ ६२० ॥
पुरुषान्तरगुणकीर्तनमन्योद्देशेन चात्मनो निन्दाम् ।
शृण्वन्नपि यः स्वस्थः स्वस्थोऽसौ कालपाशबद्धोऽपि ॥ ६२१ ॥
अवगम्याभिप्रायं स्वामिन्याः परिजनोऽपि यं पुरुषम् ।
[4]अवहसति तिरस्कार्यं तस्य न मूल्यं वराटिकाः पञ्च ॥ ६२२ ॥
[5]तत्त्वातत्त्वसमुत्थव्यवहृत्योर्योऽन्तरं न जानाति ।
स्थानं भवति स पशुपतिरपसंशयमर्धचन्द्रलाभस्य ॥ ६२३ ॥
क्रमकर्[6]शितगौरवांशो रिक्ततया लाघवं परापतितः ।
अप्राप्तपरिच्छेदः प्लवतेऽसौ युवतिसरिति कुमनुष्यः ॥ ६२४ ॥

---

१. 'अवधारण-' इति पा०. २. विवादाहितापीन्यर्थः. ३. 'अप्रियम्' इति पा०. ४. 'व्यवहरति' इति पा०. ५. 'तत्त्वावहासमुग्धव्यवहृतयोः' इति पा०. ६. 'हसित' इति पा०.

यत्नेन कपटघटितान्शृङ्गारोद्दीपनार्थमनुभावान्।
रतिशिल्पजीविकाभिर्मूढास्तत्त्वेन गृह्णन्ति ॥ ६२५ ॥
या धनहार्या नार्यो निर्मर्यादाः स्वकार्यतात्पर्याः।
सह ताभिरपीहन्ते बत मन्दाः संगतमजर्यम् ॥ ६२६ ॥
अपरोक्षधनो गम्यः श्रीमानपि नान्यथेति निर्दिष्टम्।
कंदर्पशास्त्रकारैः कृतः कथा लुप्तविभवस्य ॥ ६२७ ॥
व्यासमुनिनापि गीतौ द्वावेव नराधमौ लोके।
धर्मः परो न विहितः कामकलायां मतिः स्थिरा यस्य ॥६२८॥
कामनवाभिनवगुणवाह्निः स्वस्य मदनरोगवतः।
अर्थोऽनर्थवतोऽभिगमकामः ममरतनरोपभोगेन (?) ॥ ६२९ ॥
यस्य न धर्मप्राप्त्यै नार्थाय न कामसाधनोपायः।
स पुमान्सच्चरितनरैः पर्यनुयुक्तः किमाचष्टे ॥६३०॥ (संदानितकम्)
कामोद्वेगगृहीतं धूर्तैरुपहस्यमानशृङ्गारम्।
दारिद्र्यहतं यौवनमबुधानां केवलं विपदे ॥ ६३१ ॥
व्यपगतकोपे रागिणि याति लयं पानमात्रलाभकृते।
क्षुद्रामधुकरिकाब्जे न तु गणिका चिन्तितस्वार्थे ॥ ६३२ ॥
यासां कार्यापेक्षा सकटाक्षनिरीक्षणेऽपि वेश्यानाम्।
दर्शनमात्रक्षुभितैर्वञ्च्यन्ते ताः कथं पुरुषैः ॥ ६३३ ॥
क्लेशाय दुर्भगानां मानस्तुतिगात्रभङ्गविन्यासः।
गणिकाभिनयचतुष्टयमाकृष्टयै स्वापतेयपुष्टानाम् ॥ ६३४ ॥
किं धक्ष्यति भौमोऽपि ज्वलनः खलु तादृशं कुलाङ्गारम्।
यो दह्यते न विरसं विरक्तदासीतिरस्कारैः ॥ ६३५ ॥
गृहमेतदीश्वराणां कान्तारं दुष्प्रवेशमन्येषाम्।
फूत्कृतमिदं सभुजया न मालती काममन्त्रदानपरा ॥ ६३६ ॥

---

१. 'गुणवार्भिःस्वस्य' इति पा०. २. 'सत्चरितनरैः' इति पा०. ३. 'कामोद्वेगि' इति पा०. ४. 'लाभहृते' इति पा०. ५. धनवतामित्यर्थः. ६. 'वक्ष्यति' इति पा०. ७. 'अतिविरसम्' इति पा०.

इति तुदितनिजचेटीनिगदितकटुकाक्षराण्यकृतलक्ष्मा (?) ।
आकर्णयतो वाचो दैवोपहतस्य मर्मरुजः ॥ ६३७ ॥
एवमभिधीयमानो बुध्यति यदि नो पशुर्नराकारः ।
तदिदं सुन्दरि वाच्यः प्रश्रितवचसा त्वया कामी ॥ ६३८ ॥
प्रीयत एव तवोपरि हृदयं मे किं तु गुरुजनाधीना ।
मातृवचोगतिक्रमणं न समर्था संविधातुमहम् ॥ ६३९ ॥
अर्हसि तावदतस्त्वं गन्तुमितः कतिपयान्यपि दिनानि ।
पुनरपि भवतैव समं भोक्तव्यं जीवलोकसुखम् ॥ ६४० ॥
निर्वासितेऽपि तस्मिन्यः कामी पूर्वमुज्झितोऽभूत्ते ।
तस्य प्राप्तविभूतेर्युक्तिरियं भिन्नसंधाने ॥ ६४१ ॥
उपवनलीलाविहरणहावोज्ज्वलमङ्गलस्य सह तेन ।
वर्णनमितिवृत्तस्य स्मरजाविकाराश्च वीक्षिते तस्मिन् ॥ ६४२ ॥
इदमुपवनमतिधन्यं निर्भरमालिङ्गितं सुरभिलक्ष्म्या ।
मत्कण्ठाश्रितपाणिर्बभ्राम स यत्र जीविताधीशः ॥ ६४३ ॥
सख्य इतो भ्रमरकुलत्रासितया प्रियतमो मया सहसा ।
वक्रीभवत्पयोधरमुपगूढो धीरसीत्कारम् ॥ ६४४ ॥
रणदिन्दिन्दिरवृन्दे कूजत्कलकण्ठवाररमणीये ।
अत्रातिमुक्तकगृहे मरुदीरणविततकुसुमसंछन्ने ॥ ६४५ ॥
मयि जाताधिकरागो बलवति मदने सहायसामग्र्या ।
कान्तः पल्लवशयने नो तृप्तिमगाद्विविक्तकार्येषु ॥ ६४६ ॥
मेकलप्रहरणयुक्त्या विध्यन्पार्श्वद्वयं नखैर्धूर्तः ।
चक्रे मां मदनमयीं व्रतपुङ्खमिमां समधिरूढाम् (?)॥ ६४७ ॥
स्पृहणीयोऽयमशोकः स्पृष्टो यद्दुर्लभेन हस्तेन ।
अस्मदवतंसकार्थं नूतनदलपल्लवान्विचारयता ॥ ६४८ ॥

---

१. 'कामम्' इति पा०. २. 'भुङ्क्ते' इति पा०. ३. 'संरागं' इति पा०. ४. शब्दायमानभ्रमरकुले इत्यर्थः. ५. वारः समूहः.

अस्मिन्सहकारतले तस्योत्सङ्गे सलीलमासीना।
अशृणवमहमिति वाचः पश्यन्ती विलसितानि तरुणानाम्॥६४९॥
उत्थापय मानवशा दयितं चरणाग्रनिपतितं तूर्णम्।
अत्याकृष्टं त्रुट्यति सुदृढमपि प्रेमबन्धनं मूढे॥६५०॥
उत्तिष्ठन्नपि यातः किं तेन निवारितेन सखि पशुना।
यासीति निष्प्रकम्पा विनिःसृता यस्य साधरे वाणी॥६५१॥
आयुःसारं यौवनमृतुसारः कुसुमसायकवयस्यः।
सुन्दरि जीवितसारो रतिभोगरसामृतास्वादः॥६५२॥
रम्यं कुसुमस्तवकं कुरु मे प्रिय कैङ्किरातमवतंसम्।
तिष्ठतु वा किमनेन प्रत्यग्रमशोककिसलयं चारु॥६५३॥
आस्तामास्तामेतत्प्रापय मां सिन्दुवारमभिरामम्।
नहि नहि राजति सुतरां चूतद्रुममञ्जरी कर्णे॥६५४॥
धिक्तारुण्यमकान्तं धिक्कान्तं यौवनेन रहितं च।
धिक्तद्द्वयमपि मन्मथशास्त्रविकामं विना सुरतम्॥६५५॥
जनितोऽप्यपराधशतैर्वामे तस्मिंश्चिरप्ररूढोऽपि।
अधिगतमधुना सख्या तव सत्त्वमतीत्य वर्तते मानः॥६५६॥
वर्षशतस्य हि सारः कलेवरः प्रथममलकस्थानम्।
सचकितमागच्छन्ती सोत्कलिकैर्यत्र दृश्यते रमणी॥६५७॥
किं निर्मितोऽसि धात्रा नवोऽपरः किमु वसन्तगुण एषः।
कुसुमशरपूर्णतूणः किमुताभवदन्य एष कंदर्पः॥६५८॥
नो पश्यसि यदि ककुभः प्रचुरोद्दलकुसुमसुरभिरमणीयः।
परभृतकूजनमिश्रं न शृणोषि यदि द्विरेफझंकारम्॥६५९॥
गन्धं यदि च न लभसे वासितदिग्व्योम सुमनसो हृद्यम्।
अनुभवसि यदि स्पर्शं नो शीतलदाक्षिणात्यपवनस्य॥६६०॥

१. 'आसीनाम्' इति पा०. २. 'तरुणीनाम्' इति पा०. ३. वसन्त इत्यर्थः ४. रक्ताम्लानपुष्पनिर्मितमित्यर्थः. ५. 'सत्यम्' इति पा०. ६. 'एव' इति पा० ७. 'दूर्वः' इति पा०. ८. 'एव' इति पा०.

वसने स्त्रियैकशेषः खल पञ्चार्यो गुणेन परिभूतः (?) ।
नार्हसि तदिति त्यक्तो निजाश्रमं गन्तुमन्यतो नितराम् ॥६६१॥
अस्मिन्सरसि सलीलं करयन्त्रविनिर्यदम्बुधाराभिः ।
दयितेन ताडिताहं मयाप्यमावाहतो मृणालिकया ॥ ६६२ ॥
पुनरन्तर्जलमग्नो मामुपगम्याविभावितः सहसा ।
उच्चिक्षेप सहासं हासितसंनिहितपरिवारः ॥ ६६३ ॥
संसक्तार्द्रावरणं जघनं ननु पश्यतस्तदा तस्य ।
प्रथमाकाङ्क्षाकूतं भेजे संभोगशृङ्गारम् ॥ ६६४ ॥
कालप्रदेशभोगव्यापारस्थितिविशेषघटनाभिः ।
चिररूढोऽपि हि यूनां नवत्वमुपनीयते रागः ॥ ६६५ ॥
सादरमर्पयतोऽङ्गं गोत्रस्खलनापराधिनस्तस्य ।
सख्यः स्मरामि सहसा विलक्ष्यतां क्लिष्टहसितस्य ॥ ६६६ ॥
प्रत्यग्रनखव्रणितस्तनान्तरे स्पृशति लोचने स्पृहया ।
प्रेमसिताच्छादनमकरवमहमाब्जिनीपत्रम् (?) ॥ ६६७ ॥
क्षिप्त्वातर्कितमम्भो गर्भितनलिनीपलाशपटभावात् ।
आहतया यद्विरुतं स्वस्थधिया नैव शक्यते कर्तुम् ॥ ६६८ ॥
सुश्लिष्टो दूरविधिर्मदनालसगात्रजृम्भितं ललितम् ।
गूढस्थानप्रकटनमङ्गुलिविस्फोटनं स्मितं सुभगम् ॥ ६६९ ॥
नीवीबन्धविमोक्षो मुहुर्मुहुः केशपाशविश्लेषः ।
स्वाधरदशनग्रहणं बालकपरिचुम्बनं रतोत्सुकता ॥ ६७० ॥
साकाङ्क्षितं क्षिपन्त्या तरलायतलोचनं मुहुः कान्ते ।
उद्दिश्य तद्वयस्यकमिति शोकग्रस्तवर्णशिरः ॥ ६७१ ॥
एकीभावं गतयोर्जलपयसोर्मित्रचेतसोश्चैव ।
व्यतिरेककृतौ शक्तिर्हंसानां दुर्जनानां च ॥ ६७२ ॥
येन तदा मा भूत्तुः (?) परिजनमुत्सार्य विधृतनटमन्युः ।
दर्शितहितस्वरूपः परपीडाकरणपण्डितः प्रथमः ॥ ६७३ ॥

१. 'कुष्ट' इति; 'धृष्ट' इति च पा०. २. 'च तथा' इति पा०. ३. 'वा' इति पा०.

अतिकोमलमतिपरिमितवर्णं लघुतरमुदाहरति शठः।
परमार्थतः महृदयं दहति पुनः कालकूटघटित इव॥ ६७४
अविदितगुणान्तगणां नो दोषैः प्राप्तदेशवासानाम्।
स्वाधीनकुङ्कुमा अपि यद्दिशति बहुमतिं नीले॥ ६७५॥
क्व महीतलरम्भात्वं न्यक्कृतचन्द्रप्रभा स्वदेहरुचा।
मिश्रलता क्व वराकी नीचैरुपसेवितारोहा॥ ६७६॥
यस्या न खलु विगणिताः प्रह्वात्मानो महाधनाः कुलजाः।
सोऽद्य हृदयेन तस्यां त्वयि तिष्ठति बाह्यवृत्तेन॥ ६७७॥
तामेव समाचरणां महाँवन प्रवर्तितां निपुणाः।
विन्दन्ति तत्र कुशलाः स्नेहविरूपं प्रभेदेन॥ ६७८॥
भवतु विरूढप्रेम्णः सत्कर्मविवेचने मनोवृत्तिः।
मार्गोहर्तीति मैवं निर्वादितं परिजनेन······· ॥ ६७९॥
इति दुर्जनाभिनिःसृतवागभिदूषितममस्तवपुषो मे।
ईर्ष्यारुषः प्ररूढाश्चिररूढप्रणयखण्डनप्रभवाः॥ ६८०॥
लघुहृदयतया तस्माद्दुर्भाषितवज्रपातविहतानाम्।
वर्मविशेषवितर्को न स्पृशति प्रायशो मनः स्त्रीणाम्॥ ६८१
प्रियमपि वदति दुरात्मा क्षिपति विपक्षस्त्वश्वनुधारे।
आसाद्य प्राणहरो सृनय परिलेढि जिह्वया रवहम् (?)॥ ६८२
हितमधुराक्षरवाणीव्यवहारमनुप्रविश्य तन्मानम्।
सरला दुराशयानामुपघातं फलत एव विन्दन्ति॥ ६८३॥
परसंतापविनोदो यत्राहनि न प्रयाति निष्पत्तिम्।
अन्तर्मना असाधुर्न गणयति तदा सुखोमध्ये (?)॥ ६८४॥
दिवसांस्तानभिनन्दति बहु मनुते तेषु जन्मनो लाभम्।
ये यान्ति दुष्टबुद्धेः परोपतापाभियोगेन॥ ६८५॥
विकसितवदनः पिशुनः प्रोत्फुल्लविलोचनस्तथा भ्रमति।
मन्ये यथा नराणां परहितकरणे श्रमो वन्ध्यः॥ ६८६॥

---

१. 'नोद्देशः' इति पा०. २. 'बहुमतिलाने' इति पा०. ३. 'परिचयेन' इति प

शठमृगयुः कुमतिशतैरज्ञातप्रतिविधीन्साधुमृगान् ।
अभ्यस्तलक्ष्यवेधः सनिश्चये परिश्रमं व्रजति (?) ॥ ६८७ ॥
अनुकूलवरपुरंध्रिषु पुरुषाणां बद्धमूलरागाणाम् ।
नयति मनो दुःशीलः कुसुमास्त्रो हीनपात्रेषु ॥ ६८८ ॥
मावरणं व्रजतोऽन्यान्कौतुकदृष्ट्या प्रसङ्गतो दयितान् ।
बुद्ध्वापि विदग्धधियो वर्तन्ते नाद्य[1] धर्मेण ॥ ६८९ ॥
सत्यं प्रेमणि वृद्धे व्यथयति हृदयं मनागपि स्खलितम् ।
अवहृतनिजमाहात्म्यास्तथापि धीरा न मुह्यन्ति[2] ॥ ६९० ॥
स्वच्छन्दः पिबतु रसं भ्रान्त्वा[3] नानावनानि कुसुमेषु ।
अनुभूतगुणविशेषः पुनरेष्यति मालतीं मधुपः ॥ ६९१ ॥
मालत्यां गुणवार्ता नो सम्यग्वेत्ति मधुकरस्तावत् ।
अनुभवमेति न यावत्सुमनोन्तरसंगमास्वादे ॥ ६९२ ॥
कोमलमानकदम्बां भजमानो भजति दीप्ततामधिकाम् ।
संचाल्यमानदारुः पावक इव सुप्रभः स्नेहः ॥ ६९३ ॥
यः पुनरतिकोपानलसंतापवशेन[4] दूरमाकृष्टः ।
काचमणिः खलु स यथा परिणामं खण्डखण्डमुपयाति ॥ ६९४ ॥
वेतनलाभाद्बहवः सेव्यन्ते सौष्ठवेन पञ्चजनाः[5] ।
विश्राम्यति यत्र मनः स तु दुष्प्रापः सहस्रेषु ॥ ६९५ ॥
मन्वादिमुनिवरैरपि कालत्रयवेदिभिः सुदुर्ज्ञेयम् ।
तत्सुकृतं यस्य फलं रभसागतवल्लभाश्लेषः ॥ ६९६ ॥
यातेऽपि नयनमार्गे प्रेयसि यस्याः स्मृतिर्व्यलीकेषु ।
मन्ये तां प्रति नियतं कुण्ठितशरपञ्चको मदनः ॥ ६९७ ॥
जीव्यत एव कथंचिद्धिग्वृत्तिमिमां महद्भिरवगीताम् ।
विजहाति यन्न गणिका तद्वाञ्छितरमणलाभलोभेन ॥ ६९८ ॥

---

१. 'नाद्य' इति; 'नाट्य' इति च पा०. २. 'तदपि न धीरा विमुह्यन्ति' इति पा०. ३. 'भ्रान्त्वा भ्रान्त्वा वनानि' इति पा०. ४. 'संततश्वासदूरमाचष्ट' इति पा०. ५. पुरुषा इत्यर्थः.

कण्टकिनः कटुकरसान्करीरबदरादिविटपतरुगुल्मान् ।
उपभुञ्जाना करभी दैवादाप्नोति मधुरमधुजालम् ॥ ६९९ ॥
का स्त्री न प्रणयिवशा का विलसितयो मनोभवविहीनाः ।
को धर्मो निरुपशमः किं सौख्यं वल्लभेन रहितानाम् ॥ ७००
स्वाच्छन्द्यफलं बाल्यं तारुण्यं रुचिरसुरतभोगफलम् ।
स्थविरत्वमुपशमफलं परहितसंपादनं च जन्मफलम् ॥ ७०१
अभिदधतीमिदमालीमवगम्य गृहीतयौवनभृतेन ।
यौवनसुखेन सार्धं तनयैरेध गृहपरिच्छिन्नाः (?) ॥ ७०२ ॥
अधुनाशु (?) तापपावकमध्यगता पच्यमानसर्वाङ्गी ।
निष्फलजन्मप्राप्तिर्जीवत्युच्छ्वसितमात्रेण ॥ ७०३ ॥
स्थानेषु येषु युष्मत्सङ्गत्या क्रीडितं चिरं धृत्या ।
तानि खलु वीक्षमाणा भवामि कण्ठस्थितप्राणा ॥ ७०४ ॥
अन्यर्वेश्मना विसंज्ञा कृतभूषणवस्त्रपत्रसंचारा ।
दारुमयीव प्रतिमा विदधामि विडम्बना बह्वीः ॥ ७०५ ॥
यदि नामादरभरणप्राप्त्यै कुरुतेऽन्यपुंप्पसंश्लेषम् ।
तदपि न पुष्टिर्भृङ्ग्या अपिबन्त्या मधुरवृन्दमकरन्दम् ॥ ७०६
आस्तामपरो लोकः क्रीडापेक्षापरो यदि प्रीतिः ।
व्यसनान्तरे पतन्ती न वारिता परिजनेनापि ॥ ७०७ ॥
किं वा बहुभिः कथितैः संप्रति हि मयापि नियमिता बुद्धिः ।
स्थास्यामि संनियुक्ता भवद्गृहे प्रेष्यभावेन ॥ ७०८ ॥
इति नेत्रादिविकारैर्वशमुपनीतं प्रलीनधैर्यस्य ।
सारग्रहाभिभूतं परिमृष्टप्राङ्गिराक्रांतस्मरणम् ॥ ७०९ ॥
प्रादुर्भूतारिरंसं क्षणे क्षणे जघनदेशगतदृष्टिम् ।
पक्काम्रमिव विमोक्ष्यसि पूर्ववदाचूष्य निःशेषम् ॥ ७१० ॥

१. 'काश्मीरप्रणयिवशा' इति पा०. २. 'सार्धं नयैत्र गृहम्' इति पा०. ३. 'धृत इति पा०. ४. 'वशेन' इति पा०. ५. 'पुष्ट' इति पा०. ६. 'क्रीडापेक्षी परा यदि प्रीत इति पा०. ७. 'प्रादुर्भूतं नितराम्' इति पा०.

अशरीरामिषदिग्धं चङ्क्रमितदृष्टिपातमस्खलितम् ।
प्रक्षिप्य क्षिप्रतरं स्फुरणेन विवर्जितं सुपरिपुष्टम् (?) ॥ ७११ ॥
हस्तद्वयान्तरागतमुपचारय येन संक्रत्य (?) ।
भुक्त्वा यावन्मांसं त्यक्ष्यसि चर्मास्थिशेषितं मत्स्यम् ॥ ७१२ ॥
शृणु सुश्रोणि यथास्मिन्कमलेश्वरपादमूलमञ्जर्या ।
प्रवराचार्यदुहित्रा राजसुतश्चर्वितश्च मुक्तश्च ॥ ७१३ ॥
'आसीच्छ्रीसिंहपटो नाम्ना नृपतिर्महीयमां श्रेठः ।
तस्यात्मजोऽधितस्थौ निवेशनं देवराजमंबद्धम् ॥ ७१४ ॥
स कदाचिद्वृषभध्वजदिदृक्षया परिमिताप्तपरिवारः ।
अनुवर्तमान आगात्तारुण्योदीर्णवेशचरितानि ॥ ७१५ ॥
पूर्वत्रिभागसंस्थितबृहदम्बरचीरकेशसंयमनः ।
अल्पतररागसान्द्रो घनकुङ्कुमलिप्तकर्णकेशाग्रः ॥ ७१६ ॥
सिद्धार्थबीजदन्तुरललाटतिलकोपयुक्तताम्बूलः ।
श्रवणनिवेशितकुण्डलर्टाट्टभकप्रायकंधराभरणः ॥ ७१७ ॥
केयूरस्थानगतसुवर्णभृतमश्वगर्भजतुगुडकः ।
मणिबन्धनविन्यस्तप्रचलाङ्कुरजातरूपमणिमालः ॥ ७१८ ॥
धृतवेत्रदण्डकूर्चकपरिवेष्टितमासिधेनुखड्गश्च ।
मृदुतरपटिकावरणः शब्दोल्बणचुंचुराङ्कचरणान्तः ॥ ७१९ ॥
गम्भोरेश्वरदास्यां नग्नं किल तर वयस्य को वीरः (?) ।
प्राप्स्यति सापि दुराशा वर्षत्रितयेन यन्मया प्राप्तम् ॥ ७२० ॥
दर्शयति दिशः फलिता अमृतगभस्ति करेण वारयति ।
सुरतकृतिचन्द्रवर्त्मा निर्वर्णकवाक्प्रपञ्चेन ॥ ७२१ ॥
त्वामनुयान्तं संप्रति यामि कुरङ्गाक्षि वसुशेषम् ।
अनुरूपिका भविष्यसि विषमं गुडजिह्विका तस्य ॥ ७२२ ॥

---

१. 'जदम्' इति पा०. २.'संकृत्या' इति पा०. ३.'निदेशनरदेवसंबद्धम्' इति पा०. ४. 'विषमध्वज' इति पा०. ५. 'वरणः' इति पा०. ६. 'प्रबला' इति पा०. ७. 'चुंचुराङ्कचरणकः' इति पा०. ८. 'कोवारः' इति पा०. ९. 'तारयति' इति पा०. १०. 'वर्मा' इति पा०.

वञ्चयति जनं योऽसौ हरिनिहतो भूर्ततामिमानेन।
लिखति शुभं दशाढ्या स निमज्जति तरलिकावर्ते॥ ७२३॥
गृह्णामि यत्पटान्तं मम पश्यत एव मन्द मदिराक्षीम्।
अत आवयोरवश्यं मा वक्ष्यसि नोक्तमन्तरं भवता॥ ७२४॥
योऽयं गृहीतभूमिः कुमुदाकर्णो विगुनदण्डकाषायः।
लोकस्य मा शशाङ्का कृतावसरो विलोकयन्पार्श्वे (?)॥ ७२५॥
कुर्वाणो मौनव्रतमनुत्पादितमकलवैष्णवप्रीतिः।
हरिशासनं प्रपन्नास्त्रिपुरान्तकदर्शनापदेशेन॥ ७२६॥ (अन्तर्विशेषकम्)
स्त्रैणं पश्यति युवत्या साकाङ्क्षं वर्जितान्यजनदृष्टिः।
कुमुदिनि मम हृदयगतं भवितव्यं व्याजलिङ्गिनानेन॥ ७२७॥
पश्यत्यदृश्यमानो निर्गोप्तिनो वीक्षते परां ककुभम्।
ब्रूते किंचिन्मग्रहमभियुक्तो भवति कीलितध्यानः॥ ७२८॥
न जहाति ममासन्नं नोत्सहते पार्श्वगोचरे स्थातुम्।
एष मनुष्यो मन्ये निष्प्रतिभः साभिलापश्च॥ ७२९॥ (अन्तर्युगलकम्)
ते नीता दिवसाः खलु क्रियते नर्म त्वया समं येषु।
अधुनाचार्याणां त्वं पाशुपताचार्यसंबन्धात्॥ ७३०॥
भ्रमसि यथेष्टं तावत्कुर्वाणो युवतिपल्लवग्रहणम्।
लोहितदामनया न द्रविणकृते पाशिकां विशसि॥ ७३१॥
एवं प्रकामवाग्यप्रमत्तवरवाटिकासमाकीर्णम्।
सेवाचतुरपुरःसरविजनीकृतधर्मदेवकुलम्॥ ७३२॥
उत्पादितहरपूजो निष्ठुरयाष्टीकनियमिते लोके।
त्वरितनियोगिस्थापितमध्यासमसरतस्वसंपूर्णम् (?)॥ ७३३॥
अग्रोपविष्टनर्तकसंशिप्राहप्रकाशयुवतिगणः।
श्रेष्ठिप्रमुखवणिग्जनढौकिततांबूलकुसुमपटवासः॥ ७३४॥

---

१. 'निहतो भूर्तता' इति पा०. २. 'वञ्चसि' इति पा०. ३. 'दष्टकोशो यः' इति पा०. ४. 'प्रथयन्' इति पा०. ५. 'नर्मक्रिया' इति पा०. ६. 'यासनया' इति पा०.

विविधविलेपनखराटिलकचक्रकधरखड्गधारिणाशून्यः (?) ।
पृष्ठत आत्तकृपाणैः शिरोभिरक्षैश्च विश्वस्तैः ॥ ७३५ ॥
ताम्बूलकरङ्कभृता संदंशगृहीतवीटिकाग्रहणे ।
ईषत्पृष्ठं कुर्वन्मन्दं खटकामुखेन वामेन ॥ ७३६ ॥
पार्श्वावस्थितनर्मप्रियमचिवन्यस्तपूर्वतनुभागः ।
पृच्छंश्च कुशलवार्ता मवणिग्जननर्तकप्रभृतीन् ॥७३७॥(चक्कलकम्)
अथ वैतालिक उच्चैरुपसंहृतलोककलकले धीरम् ।
अभितुष्टाव तमित्थं प्रसन्नगम्भीरया वाचा ॥ ७३८ ॥
जय देव परबलान्तक गुरुचरणाराधनैकशुभचित्त ।
वरवनिताजनमोहन दारिद्र्यतमःप्रचण्डकरदाम ॥ ७३९ ॥
रणवीरवंशभूषण गुरुवसुधादेवपूजनप्रह्व ।
शरणागताभयप्रद हितबान्धवबन्धुजीवमार्गस्त्वम् ॥ ७४० ॥
तादृक्प्रतापदहनः स तावको व्याप्तगगनदिक्चक्रः ।
दृष्टो जलावमानो रिपुवनितातिलकशोभामु ॥ ७४१ ॥
एष विशेषः स्पष्टो वह्नेश्च त्वत्प्रतापवह्नेश्च ।
अङ्कुरति तेन दग्धं दग्धस्यानेन नोद्भवो भूयः ॥ ७४२ ॥
श्रीफलभुक्पत्रवृतो विग्रहरमिको विमुक्तशस्त्रगतिः ।
राज्यस्थितिं न मुञ्चति हृतलक्ष्मीकोऽपि तव विपक्षगणः ॥ ७४३ ॥
ददतो वाञ्छितमर्थं दीने रक्तस्य तव गृहं त्यक्त्वा ।
स्त्रीचापलेन कीर्तिर्निर्गामक्ता गता ककुभः ॥ ७४४ ॥
भवतो भवतो धैर्यं तेन हि भिन्नोऽन्तको रिपुः प्रणतः ।
मुक्तास्त्वयेति बहवो रिपवस्तु प्रेक्षका समरे ॥ ७४५ ॥
अटता धात्रीमखिलामिदमाश्चर्यं मया परं दृष्टम् ।
धनदोऽपि नयननन्दन परिहरसि यद्बुधसंपर्कम् ॥ ७४६ ॥

---

१. खटकामुखो हस्ताविन्यासविशेषो भरतशास्त्रप्रसिद्धः. २. 'सदनुरक्त' इति सुभाषितावलिमुद्रितपाठस्तु छन्दोभङ्गदूषितः. ३. शिवादिन्यर्थः.

इदमपरमद्भुततमं युवतिसहस्रैर्विलुप्यमानस्य ।
वृद्धिर्भवति न हानिर्यत्तव सौभाग्यकोषस्य ॥ ७४७ ॥
अपरं विस्मयजननं धवलत्वं नोपयाति यद्भवतः ।
ललनालोचनकुवलयदलत्विषा शबलितस्यापि (?) ॥ ७४८ ॥
हृदयेषु कामिनीनामकोऽनेकेषु वससि येन त्वम् ।
जनकः कुसुमास्त्रभृतस्तेन त्वं विश्वरूपोऽसि ॥ ७४९ ॥
किं वहसि वृथा गर्वं प्रियोऽहमिति योषितां नगाधीश ।
काङ्क्षन्ति स्म मुरारिं षोडशगोपीसहस्राणि ॥ ७५० ॥
कार्पण्येन ययाचे सत्त्वसमये यो बलिं हृषीकेशः ।
न स भवति समो भवता दानैकनिषण्णहृदयेन ॥ ७५१ ॥
भूमिभृतामुपरिगस्थेन उन्नतये सकलजीवलोकस्य ।
दृष्टः संतापहरो मेघवदासारदानदक्षस्त्वम् ॥ ७५२ ॥
बहुमार्गो भद्रयुतः कृपानिषङ्गी गोत्रभेदकरणपटुः ।
गङ्गाजलप्रवाहः पृथ्व्यादिशा केवलं तव समानः ॥ ७५३ ॥
दुर्व्यवहारोत्पत्तिसौख्यप्रसरो विवेकितासमहः ।
एकस्त्वं दोषज्ञः कलीकृतो येन कलिकालः ॥ ७५४ ॥
सुगतोऽपि नाजिविमुखो वृषध्वजोऽपि न विषादितायुक्तः ।
उद्यतशस्त्रोऽपि रिपौ कथमसि संग्रामिको जातः (?) ॥ ७५५ ॥
सन्मणिरथकभोगो गरुताग्रहः स्थिरात्मना स्थाने (?) ।
नरदेव चित्रमेतद्यदशेषगुणैस्त्वमाश्लिष्टः ॥ ७५६ ॥
प्रकृतिलघोर्येन कृता जघन्यवर्णस्य गौरवापत्तिः ।
जघनचपला यदीया स पिङ्गलस्ते कथं तुल्यः ॥ ७५७ ॥
कस्य न जातिर्नात्मा नात्मज्ञानं न मानसं प्रशमः ।
भवसि भवसार न त्वं केन द्वयवादिना सदृशः ॥ ७५८ ॥
तत्रापि वृद्धियोगस्तस्मिन्नपि पुरुषगुणगणस्योक्तिः ।
परिभाषा तत्रापि व्याकरणान्नातिरिच्यते तेन ॥ ७५९ ॥

---

१. 'कथमपि' इति पा०. २. 'अपि चार्यो' इति पा०. ३. 'प्रेम' इति पा०.

निर्व्याजस्तवनोऽपि त्यक्ताक्षेपोऽपि निरुपमानोऽपि ।
संज्ञापकजातिगुणैर्नाथ त्वं गामलं कुरुषे ॥ ७६० ॥
अन्यैव वर्णनैषा दूराल्लोकान्तरास्थिता कापि ।
वामो यथैव शत्रुषु मित्रेषु तथैव वामोऽसि ॥ ७६१ ॥
पूजयसि येन गुरुजनमभिनन्दसि येन साधुचरितानि ।
प्रीणयसि येन विप्रान्नृपनन्दन तेन वृषभस्त्वम् ॥ ७६२ ॥
दैन्यमिदं यच्छ्लाघा क्रियते ते रक्षमापि न समस्य ।
न स बलमकरोद्योषिति भवांस्तु भुङ्क्ते प्रसह्य रिपुलक्ष्मीम् ॥ ७६३ ॥
लावणिका चाटुवचस्तवनं पल्लाभहेतुरस्माकम् ।
उत्पातितिस्वरूपे यां नीतः मन्तु मो स्वामी (?) ॥ ७६४ ॥
श्रुत्वोत्तरमवदत्तं बन्दिनमभिनन्द्य साधुवादेन ।
अस्ति किमाकुलता ते यास्यसि तुष्टो मया प्रहितः ॥ ७६५ ॥
पुनरपि पठ तद्युगलं गीतिकया यत्पुरा पठितम् ।
कक्षान्तरितेन मम स्थितस्य कुलपुत्रिकारामे ॥ ७६६ ॥
त्वयि वदति साधुवादं वागियमुन्मुद्रिता बुधसमाजे ।
अभिधायेति पपाठ त्रिस्थानविशुद्धनादेन ॥ ७६७ ॥
एका खण्डनकुपिता विरमान्या गेयभङ्गवैलक्ष्यात् ।
काचिन्निकटतरासनमप्राप्य बिभर्ति निर्वेदम् ॥ ७६८ ॥
अन्या कलहान्तरिता नवपरिणयलज्जया परा सहिता ।
रमणीगणमध्यगतः स्मरातुरः किं करोतु बहुजानिः ॥७६९॥(मंदानितकम्)
अभ्युपपत्त्यवबोधकमस्तकचलनं विधाय विकृतभ्रूः ।
नृत्याचार्यमवादीदेतस्मिन्किं नु संगीतम् ॥ ७७० ॥
सोवाचर्जतवो वणिग्जने नेतरोपत्रपात्राणि ।
गाथायनं दौस्यास्ये तत्र कुतः सौष्ठवं नाट्ये (?) ॥ ७७१ ॥

---

१. 'रावणिका' इति पा०. २. 'नयनाक्रोम-' इति पा०. ३. 'यानीतः सन्तु सो-चामि' इति पा०. ४. 'स्मरातुरोऽपि' इति पा०. ५. 'वलनम्' इति पा०. ६. 'साले-वणिग्जीते नेतरो' इति पा०. ७. 'हास्यम्' इति पा०.

काचिद्वलिना क्रान्ता काचिन्न जहाति कामिनं रुचिरम् ।
अन्या पानकगोष्ठ्यां नयति दिनं प्रीतकैः सार्धम् ॥ ७७२ ॥
नोत्सृजति सततमेका पुरुषागमनाशया गृहद्वारम् ।
शल्यापालः कथयति लब्धोत्कोचो रजस्वलामपराम् ॥ ७७३ ॥
रङ्गगतापि क्षुद्रा शृणोति यत्परिचितं गृहायातम् ।
उद्दिश्य चापि कार्यं व्रजति ततः प्रकृतमुत्सृज्य ॥ ७७४ ॥
आतारुण्यादृद्दात्कान्ते दृष्टिर्यथा न्यस्ता ।
सामाजिकमध्यस्था कथमन्या समुपयाति परभागम् ॥ ७७५ ॥
चेतोन्तरा न सत्त्वं सत्त्वे सति चारुता प्रयोगस्य ।
न भवति सा वेश्यानामल्पापि पुरुषहृतहृदयानाम् (?) ॥ ७७६ ।
वयमपि देवनिकेतनमनङ्गहर्षे गते त्रिदिवलोकम् ।
अश्रितवन्तो गत्वा तीर्थस्थानानरोधेन ॥ ७७७ ॥
इह तु कदाचित्किंचिद्वृत्ति निरोधाभिशङ्कया निरुत्साहा ।
रत्नावल्यामेता विदधति करपादविक्षेपम् ॥ ७७८ ॥
वत्सेश्वरभूमिकयोर्द्वयमनुकुरुते नरेश्वर वयस्यः ।
वामवदत्ताद्वितयप्रयोगमेषा विडम्बयति ॥ ७७९ ॥
श्रमसमादिष्वेवं शोभातिशयेन मदनुबन्धेन (?) ।
अनया प्रसिद्धिगमा सिंहलराजात्मजानुकर्ता ॥ ७८० ॥
विविधस्थानकरचनापरिक्रमं गात्रवलनलालित्यम् ।
काकुविभक्तार्थगिरो रसपुष्टि वासनास्थैर्यम् ॥ ७८१ ॥
सात्त्विकभावोन्मीलनमभिनयमनुरूपवर्तनाभरणम् ।
मिश्रामिश्रे नाट्ये लयच्युति वर्णयन्त्व मञ्जर्याः ॥ ७८२ ॥
एषाभिधानकीर्तनगुणितस्वशरीरकुसुमशररोषा ।
सहसोद्भिन्नमनोभवभावदशा मिन्दुवारविवरेण ॥ ७८३ ॥

---

१. इतः प्रभृति श्रीहर्षदेवकृतरत्नावलीनाटकावर्णनम्. २. 'एषो' इति पा०. ३. 'वत्सलमरिति व बहुश्लोषा-' इति पा०.

यन्ती वत्सेश्वरमनुकार्याकृतिरमन्दपरितोषम् ।
घुध्वनिमुखराननसामाजिकजनमनःसु विदधाति ॥ ७८४ ॥ (युगलकम्)

वत्सपतिमालिखन्ती कामावस्थाक्रमेण भजमाना ।
वेपथुपुलकस्वेदैरावहति विसंष्ठुलं हस्तम् ॥ ७८५ ॥

सदृशेऽप्यनुभावगणे करुणरसं विप्रलम्भतो भिन्नम् ।
दर्शयति निरभिकाङ्क्षितसौख्यं ननु गोचरापन्ना ॥ ७८६ ॥

अस्मिन्दर्शयतीत्थं मञ्जरिकां साभिलाषमवलोक्य ।
पस्पर्श राजपुत्रः किमु मामिति वेत्रदण्डेन ॥ ७८७ ॥

बुद्ध्वाथ तस्य भावं संशमयन्युवतिमंकथाकेलिम् ।
न्यक्कुर्वन्वारवधूः मचिवः प्रशशंस बन्धकीगमनम् ॥ ७८८ ॥

दाररतिः संततये व्याधिप्रशमाय चेटिकाश्लेषः ।
तत्खलु सुरतं सुरतं कृच्छ्रप्राप्यं यदन्यनारीषु ॥ ७८९ ॥

स्वव्यापारैकमतिः परवित्तार्था न काचिदप्यस्ति ।
पश्यन्त्यास्त्वामीदृशमद्य तु मे मानसं व्यथितम् ॥ ७९० ॥

यदि वेद्मि तस्य वसतिं सामर्थ्यं यदि भवेत्ततोऽप्यधिकम् ।
तद्गत्वा दग्धविधिं न शुभैः (?) संचूर्णयाम्यधुना ॥ ७९१ ॥

वपुरिदमनुपममीदृग्यदि विहितं तेन ते धात्रा ।
अधुनापि रमणविरहात्किमिति कृतं वन्ध्यजन्मफलम् ॥ ७९२ ॥

शैशवमस्तु जरा वा व्याधिर्बाह्येन्द्रियप्रणाशो वा ।
आकाराज्ञारुण्यं(?) न तु कुपति कदर्थनाग्रहस्तम् ॥ ७९३ ॥

केलिः प्रदहति मज्ञः शृङ्गारोऽस्थीनि चाटवः प्राणान् ।
न करोति मनस्तुष्टिं दानमभव्यस्य गृहभर्तुः ॥ ७९४ ॥

कुत आगतासि कस्मिन्वेलामियतीं स्थिता किमर्थमिति ।
पृच्छन्नस्वस्थमना जनयति [10]रोगी शिरःशूलम् ॥ ७९५ ॥

---

'परिपोषम्' इति; 'परिमोषम्' इति च पा०. २. 'सत्यम्' इति पा०. ३. 'कि-मस्ता' इति पा०. ४. 'प्रसारयन्' इति पा०. ५. 'बन्धकागमनम्' इति पा०. ६. 'क' ...मनाय' इति लोकप्रसिद्धः पाठः. ७. 'ते हि ते' इति पा०. ८. 'लज्जाम्' इति पा०. 'कटवः' इति पा०. १०. 'गेही' इति पा०.

यदि भवति दैवयोगाच्चक्षुर्विषयः समुज्ज्वलस्तरुणः ।
तत्रात्मानं क्रशयति जायां च रटन्गृहस्वामी ॥ ७९६ ॥

मविवादे परलोके जनापवादे च जगति बहुवादे ।
दैवाधीने प्रणये न विदग्धा हारयन्ति तारुण्यम् ॥ ७९७ ॥

दुर्भर्तृकरास्फालनमलिनीक्रियमाणशोभमनुदिवसम् ।
तुङ्गमपि पतितकल्पं स्तनशालिनि तत्पयोधरद्वन्द्वम् ॥ ७९८ ॥

पर्यङ्कः स्वास्तरणः पतिरनुकूलो मनोहरं सदनम् ।
तुलयति नाहि लक्षांशं त्वरितक्षणचौर्यसुरतस्य ॥ ७९९ ॥

सहसा संकटवर्त्मन्यवितर्कितसंमुखागतेनापि ।
अभिलषितेनोद्धृष्टकमनन्यशुभकर्मणा लभ्यम् ॥ ८०० ॥

प्रीतिः किल निरतिशया नेदुः (?) परलोकचिन्तकैर्गदिता ।
तस्यास्तु जन्मलाभो हृदयेप्सितपुरुषसंयोगात् ॥ ८०१ ॥

अतटस्थत्वादुफलग्रहणव्यवसायनिश्चयो येषाम् ।
ते शोकक्लेशरुजां केवलमुपयान्ति पात्रतां मन्दाः ॥ ८०२ ॥

किं प्रतिकूला ग्रहगतिरुतपरिणतमात्मदुश्चरितम् ।
स्वानुष्ठानव्यसनं किं वा तस्यात्मयोनिहतकस्य ॥ ८०३ ॥

येन वरस्त्रीषु युवा स्तौति शरीरं त्वदङ्गसंस्पृष्टम् ।
त्वत्पादाक्रान्तभुवे स्पृहयति ककुभं त्वदीप्सितां नमति ॥ ८०४ ॥

ध्यायति युष्मद्रूपं त्वन्नामकमन्त्रमालिकां जपति ।
एकात्मीकृतचेतास्त्वदनुगतः सौख्यसिद्धिमभिकाङ्क्षन् ॥ ८०५ ॥
(अन्तर्युगलकम्)

उत्सृज्य सकलकार्यं तिर्यग्ग्रीवं विलोकयन्भवति ।
कुरुते गृहाग्ररथ्यां यातायातैः शतावर्तीम् ॥ ८०६ ॥

---

१. 'संकाशं' इति पा०. २. उद्धृष्टकमालिङ्गनविशेषो वात्स्यायनादिकामशास्त्र... ३. 'प्रीतिः' इति पा०. ४. 'नेदुः' इति पा०. ५. 'गदितः' इति पा०. ६. '...' अतटस्थो ...इत्यर्थः. ७. 'च युवा' इति पा०. ८. 'उत्सृष्ट' इति पा०. ९. '...' इति पा०.

दृष्टोऽसि तया सुचिरं गेहाभ्याशे परिभ्रमन्स्पृहया ।
संदेश एष दत्तः प्राभृतमेतत्त्वया दत्तम् ॥ ८०७ ॥
शुष्यति सालभमाना भवत्कृते वेश्मनिर्गमावसरम् ।
इति चतुरशठस्त्रीभिर्विलुप्यते त्वदपदेशेन ॥ ८०८ ॥ (अन्तर्युगलकम्)
किं वा कथितैरधिकैरस्थानाविष्टचेतसस्तस्याः ।
अनुतिष्ठ यथायुक्तं शोभा शठ जीवरक्षा च ॥ ८०९ ॥

(दूतीवचनं महाकुलकम्)

कुलपतनं जनगर्हां नरकगतिं प्राणितव्यसंदेहम् ।
अङ्गीकरोति तत्क्षणमबला परपुरुषमभियान्ती ॥ ८१० ॥
स तु लिखति दासपत्रं त्यजति कुटुम्बं ददाति सर्वं च ।
यावन्न भवति पुरतः परयुवतिः प्रोज्झितावरणा ॥ ८११ ॥
दृष्टं यद्द्रष्टव्यं व्यपयातं कौतुकं विदितमन्तः ।
इति याति मनसि कृत्वा विहितविधेयस्ततस्तूर्णम् ॥ ८१२ ॥
सापि च्छिन्नाच्छोटनगृहीतमुक्ता विलोकयन्त्याशाः ।
विशति गृहं संत्रस्ता सर्वत आशङ्किता सवैलक्ष्यम् ॥ ८१३ ॥
नवचारित्रभ्रंशा सुरचितकुलटोदितेषु नो निपुणा ।
पृष्टा क्व गतासि त्वं न क्वचिदिति संभ्रमाद्ब्रूते ॥ ८१४ ॥
मितदोषे बहुरोषाः पुरुषा अपि चपलकौतुकप्रायाः ।
त्वं च ग्रहेण लग्ना कार्यविमूढात्र तिष्ठामि ॥ ८१५ ॥
इति दोलायितहृदया स्थिरीकृता न्यस्तकर्मणा दूत्या ।
दृष्टाभिशङ्कमाना पदे पदे चलति पर्णेऽपि ॥ ८१६ ॥
अनुदिक्षु विक्षिपन्ती पदे पदे चकिततरलिते नेत्रे ।
प्राप्ता संकेतभुवं शतगुणितमनोरथाकृष्टा ॥ ८१७ ॥
भयशृङ्गारव्रीडामिश्रीभूतानुभावसंदेहम् ।
जनयन्ती लोलांशुकधृतकृतिकटा सकुचनाभिः ॥ ८१८ ॥

---

१. 'त्वया' इति पा०. २. 'तस्य' इति पा०. ३. '[illegible]' इति पा०.
४. 'सर्वस्वम्' इति पा०. ५. 'परस्य' इति पा०. ६. 'जनयन्तीलोलांशुक-' इति पा०.

नीवीश्लथनारम्भे निरुन्धती तं न यामि यामीति ।
निहितास्फुटाभिधानैः पल्लवयन्ती स्मरस्य कर्तव्यम् ॥ ८१९ ॥
नयतीवालैर्विनयं (?) प्रसभमाने वार्धसर्वगात्राणि ।
संश्लिष्यतेऽन्ययोषा तिक्तं तस्यामृतं पुरतः ॥ ८२० ॥

(नायिकावचनमहाकुलकम्)

न कृतं तव रहसि पुरो वा तो वा विहतकम्पया वाचा (?) ।
गेहस्वामितिरस्कृतिनिष्पादितदुःखवेगनिर्वहणम् ॥ ८२१ ॥
उपधानीकृत्य भुजावन्योन्यं निर्विशङ्कमावाभ्याम् ।
संवरितोरु न सुप्तं शिथिलाङ्गं गतिविमर्दखिन्नाभ्याम् ॥ ८२२ ॥
आत्मगृहादानीतं प्रच्छाद्य स्वादुभोजनं विजने ।
स्वकरेण मया दत्तं निर्वृतहृदयेन नाशितं भवता ॥ ८२३ ॥
न कृता चरित्ररक्षा न च भुक्तं मच्छरीरपर्यन्तम् ।
दृष्टादृष्टभ्रष्टा क यामि किं वा करोमि दुर्जाता ॥ ८२४ ॥
अवगुण्ठननयविरतिं(?) स्वैरालापं च मन्दसंचारम् ।
संप्रति मम पापायाः करपिहितमुखा हसन्ति तत्त्वज्ञाः ॥८२५॥
यासामासीत्सख्यं मया समं समवयःकुलस्त्रीणाम् ।
ता वारयन्ति मत्तः कुसंगतिं तन्नियन्तारः ॥ ८२६ ॥
धिग्वादान्परिजनतः सहमाना मुहुरथाप्यधोवदना ।
तिष्ठामि निराभिमाना निजनिर्मितदोषदौर्बल्यात् ॥ ८२७ ॥
सद्भिर्विधीयमानं प्रसङ्गपतितं पतिव्रतास्तवनम् ।
हृदयेन दूयमाना मूढा सीदामि शृण्वन्ती ॥ ८२८ ॥
आसन्न उपविशन्तीं मां दाक्षिण्यान्नियन्तुमसमर्थाः ।
अन्योन्यमीक्षमाणा ज्ञातिजनाः संकुचन्ति भुञ्जानाः ॥ ८२९ ॥
प्रकटीकृतास्त्वयैवं क्षणमात्रमसुखता गृहोपान्तम् ।
अस्मान्सुदृशां मध्ये प्रेमस्निग्धाननुद्धरता ॥ ८३० ॥

१. 'विहता' इति पा॰. २. 'कण्ठया' इति पा॰. ३. 'संस्कारितोरु' इति पा॰. ४. न अशितं न भुक्तमित्यर्थः.

परगृहविनाशपिशुनाः सुभगंमन्याभिरूपकृतदर्पाः ।
कृकलासतुल्यभागा भवन्ति युष्मद्विधा एव ॥ ८३१ ॥
अनभीष्टव्यवहारप्रभवरुषा पीडिताक्षरा इत्थम् ।
मोपालम्भा वचनं (?) धन्याः शृण्वन्ति बन्धकीवाचः ॥ ८३२ ॥(कुलकम्)
परतरुणीसंभारस्नेहार्पितनयनभागदृष्टस्य ।
वेश्यारचितविलासाः कथिताः पुरतः पुराणतृणकल्पाः ॥ ८३३ ॥
उपनयति रतिमहोत्सवमाराधितदेवताविशेषाणाम् ।
वचनमपि प्रेमार्द्रं स्वैरिण्याः श्रवणमेति पुण्यवताम् ॥ ८३४ ॥
का गणना विषयवशे पुंसि वराके वराङ्गनास्पृहया ।
व्याजेन वीक्षमाणा ध्यानधियां स्पृशति सज्ज्ञानम् ॥ ८३५ ॥
शिरसा रचिताञ्जलयो दधति निदेशं त्रिविष्टपे गणिकाः ।
परदाररसाकृष्टस्तथापि भेजे शचीपतिरहल्याम् ॥ ८३६ ॥
अप्सरसः किं न वशा वैदग्ध्यवतां न किं न धौरेयः ।
येन चकारासक्तिं गोविन्दो गोपदारेषु ॥ ८३७ ॥
त्रैलोक्यगता वेश्याः स्वाधीना यातुधानस्य ।
तदपि जहार कलत्रं दशरथतनयस्य रामभद्रस्य ॥ ८३८ ॥
अथ मञ्जर्या जननी निजपक्षसमर्थने कृतोत्साहा ।
आक्षेप्तुमाचचक्षे नृपसुतसचिवाश्रितां वाचम् ॥ ८३९ ॥
घटयुवतिषु प्रगल्भः सागरिकादशनहृतपुंस्त्वः ।
ग्रामोषितोऽविदग्धो निन्दति गणिकां भवद्विधोऽवश्यम् ॥८४०॥
नार्दयति मनः पुंसामवगाहितमीनकेतुना स्त्रीणाम् ।
नखदशनक्षतहीनं जीवत्पतिबन्धकीसुरतम् ॥ ८४१ ॥
स्थापय घटकं तावत्कुरु भूमितले तृणैः समास्तरणम् ।
सुरतोपक्रम ईदृग्ग्रामीणकतरुणमिथुनानाम् ॥ ८४२ ॥
बहलोशीरविलुप्तस्थितजूटककरुणमाल्लिकामाल्यः ।
पामरनार्या दृष्टः स्मरोऽहमिति मन्यते विटग्राम्यः ॥ ८४३ ॥

---

१. 'रामदेवस्य' इति पा०.

गृहकर्मकृतायासां प्रस्विन्नां सलिलकार्यनिर्याताम् ।
उपपतिरुपैति हर्षान्निशागमे पामरीं प्राप्य ॥ ८४४ ॥
कूपक्षिप्तघटाया नार्यास्तत्काष्ठनिहितचरणायाः ।
वलितग्रीवं वीक्षितमुन्नमति ग्रामवासिनो यूनः ॥ ८४५ ॥
लग्नोऽसि यत्र गात्रे कथमपि दैवेन देवयात्रायाम् ।
अद्यापि तन्न मुञ्चति पुलकोद्गमकण्टकं तस्याः ॥ ८४६ ॥
उच्चेतुं कार्पासं प्रविष्टया शून्यवाटिकागहनम् ।
टंकारितेन संज्ञा कृता तया त्वं च वेत्सि नो मूर्खः ॥ ८४७ ॥
आलिङ्गितमुसलायास्त्वय्येव निविष्टचेतसस्तस्याः ।
आवृत्त्या भ्रमति पुरो जातः खलु शालिकण्डने विघ्नः ॥ ८४८ ॥
त्वां लोष्टमाक्षिपन्तं पार्श्वस्थैः स्तूयमानसामर्थ्यम् ।
गृहकर्तव्यं त्यक्त्वा पश्यति सा द्वाररन्ध्रेण ॥ ८४९ ॥
त्वयि मार्गनिकटवर्तिन्यविचेतितखेदया तया सुभग ।
प्रत्यासन्नगृहेष्वपि कृतः प्रसह्य स्मरातुरो लोकः ॥ ८५० ॥
इति चतुरदूतिकोदित उपचितसौभाग्यगर्वपूर्णस्य ।
ऊर्मिसहस्रोल्लसितं भवति मनो ग्राम्यविङ्गस्य ॥ ८५१ ॥
विनिवार्य तत्प्रवर्तितवाच्यविकासं नतोत्तमाङ्गेन ।
श्रीसिंहभटस्य सुतः समुवाच वचोऽथ नर्तकाचार्यम् ॥ ८५२ ॥
नायकभूमौ भवतः कुशीलवाः कोहलादयो मुनयः ।
अप्सरसः स्त्रीलास्ये गान्धर्वे[1] कमलजन्मनस्तनयः ॥ ८५३ ॥
सुषिरस्वरप्रयोगे प्रतिपादनपण्डितो मतङ्गमुनिः ।
यदि रञ्जयति भवतो भूमिं स्प्रष्टुं[2] ततः शक्तिः ॥ ८५४ ॥
अभ्यधिकं धृष्टत्वं प्रायेण हि शिल्पजीविनो[3] भवति ।
आश्रितनर्तकवृत्तेर्विशेषतो विजितरङ्गस्य ॥ ८५५ ॥
विज्ञापयाम्यतस्त्वां नरेन्द्रनाट्यप्रजासदृशम् ।
अवलोकयाङ्कमेकं मा भवतु मम श्रमो वन्ध्यः ॥ ८५६ ॥

---

१. 'गान्धर्वे' इति पा०. २. 'स्पृशतः' इति पा०. ३. 'जीवितम्' इति पा०.

[2]इति कथयन्नरभर्तुः पुत्रेण स चोदितो भुवोन्नतया ।
रचिते सकलातोद्ये नियोजयामास स प्रकृतम् [1] ॥ ८५७ ॥
वांशिकदत्तकस्थानकतद्भाविताभिन्नपश्चमे सम्यक् ।
प्रावेशिक्यवसाने द्विपदीग्रहणान्तरे विशति सूत्रीम् ॥ ८५८ ॥
उत्साहभावयुक्तः सामाजिकहृदयरञ्जनं कुर्वन् ।
कविनैपुणवत्सेश्वरचरितस्य विधेयदाक्ष्यमामय्या ॥ ८५९ ॥
अष्टकलापरिमाणां ध्रुवां च परिकल्प्य तानलययुक्ताम् ।
आहूय नटीं कृत्वा तया समं स्वगृहकार्यसंलापम् ॥ ८६० ॥
सूचितपात्रागमनः किंचिद्गत्वा पदानि निपुणानि ।
निश्चक्राम गृहिण्या सार्धं निःसरणगीतेन ॥ ८६१ ॥
आश्रित्य पदोद्घातं प्रविवेश ततः सविस्मयोऽमात्यः [3] ।
दुर्घटघटनेन क्षितिनाथस्योदयं समुद्दिश्य (?) ॥ ८६२ ॥
प्रासादमारुहन्तं कुसुमायुधपर्वचर्चरीं द्रष्टुम् ।
निर्दिश्य वत्सराजं समनन्तरकार्यसिद्धये निरगात् ॥ ८६३ ॥
विस्मयति स्म नरेन्द्रः प्रासादगतः समं वयस्येन ।
अवलोकयन्प्रगाढं समुदितचेताः स्वसैन्यसंपत्त्या ॥ ८६४ ॥
विस्मयभावाकृष्टः प्रोत्फुल्लविलोचने ततो विसृजन् ।
नृत्यति पौरजनौघे प्रोवाच वयस्य पश्येति ॥ ८६५ ॥
तुल्यशिशुतरुणवृद्धं समगुप्तागुप्तयुवतिसविचेष्टम् ।
अगणितवाच्यावाच्यं क्रीडन्ति जनाः प्रवृद्धहर्षेण ॥ ८६६ ॥
पिष्टातकपिञ्जरितं रुचिरोच्छ्रितविविधकुसुमनिर्यूहम् ।
गात्रायामसमुत्थितबहुनिःश्वासप्रकीर्णपटवासम् ॥ ८६७ ॥
तूर्यरवव्यामिश्रितकरतालैरनुजनं प्रनृत्यन्तम् ।
मुहुरुपयत्सवलनं संदर्शितदार्ढ्यसौष्ठवं सुचिरम् (?) ॥ ८६८ ॥

---

१. 'प्राभृतम्' इति पा०. २. इतः प्रभृति श्रीहर्षदेवकृतरत्नावलीनाटिकानुकूल-नाट्यवर्णनम्. ३. अमात्यो यौगन्धरायण इत्यर्थः.

अस्तु वसन्तः सततं स्वाधीनाभीष्टजनसमाश्लेषात् ।
इति गायन्ती रभसादालिङ्गति मदवशात्तरुणी ॥ ८६९ ॥

क्रीडन्त्या श्रमरहितं शृङ्गकसलिलेन ताडितस्तरुणः ।
सीमन्तिन्या गायति हृष्टात्मा सुभगमात्मानम् ॥ ८७० ॥

भग्ने लज्जासेतौ पर्वावमरेण कुलवधूवदनात् ।
अम्लानोक्तिजलौघो निर्यातः केन वार्यते प्रसरन् ॥ ८७१ ॥

तुल्यव्यापारगिरां ललनानां देवनप्रसक्तानाम् ।
आर्यानार्यावगमं मदनावृतिजापिका कुरुते ॥ ८७२ ॥

अथ सहचरनिर्दिष्टे मदंव्यरणघटितानिनयना (?) ।
वासवदत्ताप्राहिते नृत्यन्त्यौ प्रविशतश्चेन्व्यौ ॥ ८७३ ॥

दर्शितसरोजवर्तनगात्राभिनयं शरेक्षिनेतव्ये (?) ।
निदधाने वीरदशामायुधमात्रां समाश्रित्य ॥ ८७४ ॥

चलितनयनवृत्तिः कौतुकहृतमानसो नगाधिपतिः (?) ।
निजगाद निर्भरमहो क्रीडितमनयोर्विलासिन्योः ॥ ८७५ ॥

करपीडनोपमर्दव्यतिकरसमकदर्थ्यमानोऽपि ।
स्तनमण्डले स्थितोऽहं त्वं पुनराकृष्य कुत्रचित्क्षिप्तः(?) ॥८७६॥

अधुना त्वरयसि मामिति कोपादिव वाणवारमभिरामाम् ।
वर्णचित्रपदन्यासैर्वदन्त्याहन्तिहार उच्छलितः ॥ ८७७ ॥

चूतलताधम्मिल्लस्नानच्युतशेखरेन्दवे श्लाघ्यम् ।
अभूतपतनिर्यूहं न च समदनिकां वाणीम् ॥ ८७८ ॥

स्तनभारावनतस्य प्रतनोर्मध्यस्य नास्ति तेऽपेक्षा ।
इत्थमिव पादलग्नौ क्रीडन्त्या नूपुरौ रसतः ॥ ८७९ ॥

वहति स्म यानि तत्त्वं सपाणिकृच्छ्रेण मन्दसंचारम् ।
कलयति तत्रूनमयं जयति मनोजन्मनो महिमा ॥ ८८० ॥

---

१. अतोऽग्रपुस्तकमेतत्सर्वम्, पुस्तकद्वये अत्रुटं च.

उदयनसमनुज्ञातो नयमन्तर्न वसन्तकोऽपि मुदितात्मा।
दास्योर्नयाभिरामं चर्चरिकार्धेन तन्मध्ये ॥ ८८१ ॥

धीरोद्धतललितपरैः क्रीडित्वा ते चिराय नरनाथम्।
प्रद्योतस्य सुतायाः संदेशमथोचतुः समुपगम्य ॥ ८८२ ॥

आदिशति देव देवीत्यर्धोक्ते सलज्जमन्योन्यम्।
अवलोक्य मुखं नहि नहि विज्ञापयति प्रणम्य विनयेन ॥ ८८३ ॥

मकरध्वजस्य पूजां त्वत्पादसरोजसंनिधौ कर्तुम्।
पृथिवीमण्डलमण्डन समीहते मे मनोवृत्तिः ॥ ८८४ ॥

प्रियरतिभोगो मदनो दयितवसन्तो मदसिवमनाम्।
भावेन भवान्सृष्टो लोकस्थित्या नु कुसुमशरपाणिः ॥ ८८५ ॥

इति दत्त्वा संदेशं प्रकृतिवयःकालसमुचितं भ्रान्त्वा।
ते मदमदनाविष्टे बभूवतुर्जवनिकान्तरिते ॥ ८८६ ॥

अपनीततिरस्कारिणी ततोऽभवन्नृपसुता समं चेट्या।
अविदितरत्नावल्या पूजोदितवस्तुहस्तयानुगता ॥ ८८७ ॥

अथ बुद्ध्वा सागरिकां प्रमादतः परिजनस्य निन्दित्वा।
काञ्चनमालामवदन्नृपमहिषी जातसंक्षोभा ॥ ८८८ ॥

प्रेषय कन्यामेनामवरोधं त्वं गृहाण कुसुमादि।
यावन्न भवति विषये वीक्षणयोर्भूमिनाथस्य ॥ ८८९ ॥

उपगम्य ततश्चेटी तामभ्यवदत्किमर्थमायाता।
मेधाविनीं विमुच्य व्रज तस्मिन्मा विलम्बस्व ॥ ८९० ॥

विहिते देव्यादेशे मनसीदं संविधाय सा तस्थौ।
विहगी सुसंगतायाा हस्ते दत्ता मनोभवसपर्याम् ॥ ८९१ ॥

---

१. 'कृत्वा अञ्जलिमथाविष्टे' इति पा०. २. मेधाविनी नाम काचित्सारिका रत्नावल्यां प्रसिद्धा.

अवलोकयामि तावत्तिरोहिता सिन्दुवारविटपेन।
तातान्तःपुरिकाभिर्यथार्च्यते किं तथैतदुत नेति॥ ८९२॥
पिण्डीकृतमिव रागं हृच्छयमिव लब्धविग्रहोत्कर्षम्।
समुपेत्य वत्सराजं जगाद सा जयति देव इति॥ ८९३॥
परिभुक्तमपि नवत्वं शृङ्गाररसं मदनपर्वणा नीतम्।
भजमानो भजमानां स्वागतवचसाभिनन्द्य तामूचे॥ ८९४॥
भर्गविलोचनपावकदाहान्यधिकां मनोभवो मन्ये।
प्राप्स्यति तव करसंगमसुखविरहसमुत्थितां पीडाम्॥ ८९५॥
सा मन्मथमभ्यर्च्य क्षितिनाथं तदनु साधिकं तस्याम्।
परमां मुदं वहन्त्यां विग्रहवन्मनसि कन्यायाम्॥ ८९६॥
शृङ्गाररससमुद्रे सोत्कलिकं निपतिते तथा नृपतौ।
तारमधुरस्फुटार्थं नग्नाचार्यः पपाठ नेपथ्ये॥ ८९७॥
नयनानन्दमखण्डितमण्डलमभिगममसृतरश्मिमिव।
सायंतन आस्थाने क्षितिपतयः सन्त्युदयनं द्रष्टुम्॥ ८९८॥
उच्चारितेऽन्यनाम्नि त्रिदशपतौ तत्क्षणाच्च्युतपदायाम्।
उत्पन्नविस्मयपरा मानं दधे नरभर्तृगात्मजा हृदये॥ ८९९॥
अयमुदयनः स राजा तातः सत्कृत्य मां ददौ यस्मिन्।
हन्त परप्रेषणमपि न निष्फलं सांप्रतं जातम्॥ ९००॥
यावन्न वेत्ति कश्चित्तावदितस्त्वरितमेव निर्यामि।
इति कथमपि नायकतो हृत्वा दृशमुत्ससर्ज रङ्गभुवम्॥ ९०१॥
कंदर्पमहमहोत्सवहृतहृदयैर्नावधारितोऽस्माभिः।
संध्यातिक्रमकालः पश्य त्वं प्रियवयस्यक तथा हि॥ ९०२॥
उदयनगान्तरितमियं प्राची सूचयति दिङ् निशानाथम्।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी॥ ९०३॥

---

१. 'आखण्डलम्' इति पा०. २. 'परैतिमि' इति पा०. ३. 'अथ उदयनः' इति पा०. ४. रत्नावलीस्थितैवेयमार्या गृहीता.

देवि त्वन्मुखपद्मं पद्मान्विदधाति पश्य विच्छायान् ।
अलयोऽपि लज्जिता इव शनैः शनैस्तदुदरेषु लीयन्ते ॥ ९०४ ॥

एवमभिधाय चित्रैश्चरणन्यासैः परिक्रमं कृत्वा ।
निष्क्रामन्पादुकया विनिर्ययौ नायकोऽपि सह सर्वैः ॥ ९०५ ॥

अङ्के जातसमाप्तौ गीतातोद्यध्वनौ च विश्रान्ते ।
प्रेक्षणकगुणग्रहणं नृपसूनुः प्रववृते कर्तुम् ॥ ९०६ ॥

नाट्यप्रयोगतत्त्वे मतयो न विशन्ति मादृशां प्रायः ।
वाहनयानपदातिग्रामादिककार्यदत्तहृदयानाम् ॥ ९०७ ॥

आस्ते ह्यालिखितोऽयं गृहाण सर्वं प्रदेशबहुभूमिम् ।
वासय तत्रावासं भैरवमि ततन्नकुरो(?) दिवसैः ॥ ९०८ ॥

कृतजीवनसंस्थो हि त्वमपि किमर्थं करोषि विज्ञप्तिम् ।
अर्पय वा यदि नेच्छसि कुरु स्थितिं हस्तदानेन ॥ ९०९ ॥

न च पत्तयो न मन्त्रिर्न च पोष्यजनस्तथाप्यसंतुष्टः ।
लभमानेऽपि स दायं चिरंतनत्वाभिमानेन ॥ ९१० ॥

विज्ञप्तिकोन्मुखत्वं दूरत एवावधारितं भवतः ।
तूष्णीं क्रियतामस्माच्छोष्यसि कार्यं प्रतीहारात् ॥ ९११ ॥

यूयं कुटुम्बमध्ये क्व गम्यते गोत्रपुत्रसामान्याः ।
आदाय संविभागं गृह एव स्थीयतां यथा सौख्यम् ॥ ९१२ ॥

अभ्यन्तरव्ययार्थेन विलम्बो यो महांस्तुङ्गः (?) ।
अत्रापि न न वचो मे नो जाने किं करोमीति ॥ ९१३ ॥

प्रथमं चरमविकल्पितमन्यापि कलजीवनप्रदेशस्थम् ।
अद्यापि ते न यातं नियोगितानां मदन्तरताम् ॥ ९१४ ॥

एवं प्रायैरनुदिनलाभोदयमोहकारिभिर्वचनैः ।
फलशून्यैरनुजीवी प्रतारितः कः कियत्कालम् ॥ ९१५ ॥

---

१. 'पिदधाति' इति पा०. २. अत्रैव रत्नावलीप्रथमाङ्कसमाप्तिः. ३. 'भवति न तस्य कुरो' इति पा०. ४. इतः प्रभृत्यत्रुटमस्ति पुस्तकद्वयेऽपि.

एतद्विषमं नैपुणमत्र तु भूमीभृतां समाश्रित्य ।
मुखरतया कथयामो जडमिव सामाजिकोचितं किंचित् ॥९१६॥
समाश्रयः स महात्मा सशरीरस्त्रिः प्रमाणपरिमाणे ।
यस्माद्विलोक्य धृष्टो व्यस्तसमस्तैस्त्रिभिर्विनिष्पाद्यः ॥ ९१७ ॥
स्वर्गसाराधिक्यक्रियद्गुपरश्चकरञ्जितो विविधवृत्तिः ।
आदाय त्वममर्त्यैर्भावः संपादितः प्रयोगोऽयम् ॥ ९१८ ॥
गम्भीरमधुरशब्दं परिबृंहितगीतविविधमङ्ग्युतम् ।
दर्शयते वैचित्र्यं तद्रथवाहकस्तलकालः ॥ ९१९ ॥
अविभक्ततद्यानम्य काकुपरस्यास्फुटापदम् ।
अभिरामाविश्रान्तं पठितं निरवद्यभाषामु ॥ ९२० ॥
नियमितदीपनगमनं द्रुतमध्यविलम्बि तानलययुक्तम् ।
तमवस्वगेययत्नं तत्साम्यं मार्दिभिर्विहितम् ॥ ९२१ ॥
प्रकृतिविशेषावस्थाप्रतिपादकवेषरचनसामग्र्या ।
अभिनयकरणे नीता सिद्धिद्वयसंपदाचारम् ॥ ९२२ ॥
नवसुरतैरुपदिष्टं क्षितिपतिजनुषावबोधकाराणाम् ।
ता अपि नाट्ये सर्वाः शोभासंदोहमादृशं नापुः ॥ ९२३ ॥
आश्लिष्टसंधिबन्धं सत्पात्रसुवर्णयोजितं सुतराम् ।
निपुणपरीक्षकदृष्टं राजति रत्नावलीरत्नम् ॥ ९२४ ॥
एवंविधगुणकथनं यमदादिविभावितार्था तं पतये ।
पठति स्मार्यामन्यः स्मृतिविषयमुपागतां प्रसङ्गेन ॥ ९२५ ॥
संग्रामादनपसृतिः प्रेक्षाभिज्ञा सुभावनाभिरतिः ।
आच्छोटनाभियोगः कुलविद्या राजपुत्राणाम् ॥ ९२६ ॥
एतद्वस्तुनि जाते स्तुतिभाजां नृपतिनन्दनो रभसात् ।
आरभ्य कथाच्छेदकमाखेटं वो............... ॥ ९२७ ॥

---

१. एतावानेव ग्रन्थः प्राप्तः.

श्रीरुद्रभट्टकृतं

# शृङ्गारतिलकम्।

## प्रथमः परिच्छेदः।

शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया।
रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसाश्रयः पशुपतिर्भूयात्सतां भूतये॥ १॥

आख्यातनामरचनाचतुरस्रसंधि
सद्वागलंकृतिगुणं सरसं सुवृत्तम्।
आसेदुषामपि दिवं कविपुंगवानां
तिष्ठत्यखण्डमिह काव्यमयं शरीरम्॥ २॥

काव्ये शुभेऽपि रचिते खलु नो खलेभ्यः
कश्चिद्गुणो भवति यद्यपि संमतीह।

---

१. अयं रुद्रभट्टः पञ्चतन्त्रसंग्रहकर्तुर्विष्णुशर्मणः प्राचीनः. यतः, अत्रत्यप्रथमपरिच्छेदस्थः 'सार्धं मनोरथशतैस्तव धूर्त कान्ता' इत्यादिश्लोकः पञ्चतन्त्रस्य लब्धप्रणाशनाम्नि चतुर्थे तन्त्रे वर्तते. विष्णुशर्मापि ख्रिस्तसंवत्सरीयाष्टमशतकमध्यभागतो न प्राचीनः. यतः, कुट्टनीमतग्रन्थस्य 'पर्यङ्कः स्वास्तरणः' इत्याद्यार्या पञ्चतन्त्रस्य प्रथमे तन्त्रे दृश्यते. शृङ्गारतिलककर्ता रुद्रट इति तु बहूनां भ्रमः. केषुचित्पुस्तकेष्वपि तथैव लिखितमस्ति. किं तु ग्रन्थसमाप्तौ 'त्रिपुरवधादेव गतामुच्चासमुमां समस्तदेवनताम्। शृङ्गारतिलकविधिना पुनरपि रुद्रः प्रसादयतु॥' इत्येतस्यामार्यायां शृङ्गारतिलककर्ता रुद्रः, न तु रुद्रटः, इति स्फुटमेव. केषुचित्पुस्तकेष्वियमार्या न वर्तते. अस्मल्लब्धेष्वतिप्राचीनपुस्तकेष्वस्त्येव. शृङ्गारतिलकटीकाकर्ता गोपालभट्टोऽपि टीकाप्रारम्भे 'आशीरूपं मङ्गलं निबध्नाति रुद्रकविः—शृङ्गारीति।' इति वदति. तस्माद्रुद्र एव शृङ्गारतिलककर्तेति ज्ञेयम्. 'त्रिपुरवधादेव गताम्' इत्यार्यया 'त्रिपुरवध'नामकः कोऽपि ग्रन्थो रुद्रभट्टेन कृत इत्यपि सूच्यते. शार्ङ्गधरपद्धति-सूक्तिमुक्तावलि-साहित्यदर्पणादिष्वपि शृङ्गारतिलकश्लोका लभ्यन्ते. गोपालभट्टकृता रसतरङ्गिण्याख्या शृङ्गारतिलकस्य व्याख्यापि वर्तते. सा त्वस्माभिः संपूर्णा न लब्धा. २. 'दक्षविमर्दनेन'. ३. 'सर्वरसात्मकः', ४. [illegible], ५. 'संमति यद्यपीह'.

कुर्यां तथापि सुजनार्थमिदं यतः किं
यूकाभयेन परिधानविमोक्षणं स्यात् ॥ ३ ॥

सानन्दमममदाकटाक्षविशिखैर्येषां न भिन्नं मनो
यैः संसारसमुद्रपातविधुरेष्वन्येषु पोतायितम्।
यैर्निःसीमसरस्वतीविलसितं द्वित्रैः पदैः संहृतं
तेषामप्युपरि स्फुरन्ति मतयः कस्यापि पुण्यात्मनः ॥ ४ ॥

प्रायो नाट्यं प्रति प्रोक्ता भरताद्यै रसस्थितिः।
यथामति मयाप्येषा काव्यं प्रति निगद्यते ॥ ५ ॥

यामिनीवेन्दुना मुक्ता नारीव रमणं विना।
लक्ष्मीरिव ऋते त्यागान्नो वाणी भाति नीरसा ॥ ६ ॥

सत्यं सन्ति गृहे गृहे सुकवयो येषां वचश्चातुरी
स्वे हर्म्ये कुलकन्यकेव लभते जातैर्गुणैर्गौरवम्।
दुष्प्रापः स तु कोऽपि कोविदमतिर्यद्वाग्रसग्राहिणां
पण्यस्त्रीव कलाकलापकुशला चेतांसि हर्तुं क्षमा ॥ ७ ॥

तस्मात्यत्नेन कर्तव्यं काव्यं रसनिरन्तरम्।
अन्यथा शास्त्रविद्गोष्ठ्यां तत्स्यादुद्वेगदायकम् ॥ ८ ॥

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताश्च नव काव्ये रसाः स्मृताः ॥ ९ ॥

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः ॥ १० ॥

निर्वेदोऽथ तथा ग्लानिः शङ्कासूया मदः श्रमः।
आलस्यं चैव दैन्यं च चिन्ता मोहो धृतिः स्मृतिः ॥ ११ ॥

व्रीडा चपलता हर्ष आवेगो जडता तथा।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ १२ ॥

---

१. 'सानन्दम्'. २. 'नाट्ये'.

सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्था तथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ १३ ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदिमे भावाः प्रयान्ति च रसस्थितिम् ॥ १४ ॥
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ १५ ॥
भावा एवातिसंपन्नाः प्रयान्ति रसतामभी ।
यथा द्रव्याणि भिन्नानि मधुरादिरसात्मताम् ॥ १६ ॥
संभवन्ति यथा वृक्षे पुष्पपत्रफलादयः ।
तद्वद्रसेऽपि रुचिरा विशेषा भावरूपिणः ॥ १७ ॥
प्रायो नैकरसं काव्यं किंचिदत्रोपलभ्यते ।
बाहुल्येन भवेद्यस्तु स तद्वृत्त्या निगद्यते ॥ १८ ॥
कैशिक्यारभटी चैव सात्वती भारती तथा ।
चतस्रो वृत्तयो ज्ञेया रसावस्थानसूचकाः ॥ १९ ॥
धर्मादर्थोऽर्थतः कामः कामात्सुखफलोदयः ।
साधीयानेष तन्मध्ये शृङ्गारो नायको रसः ॥ २० ॥
चेष्टा भवति पुंनार्योर्या रत्युत्थानिरक्तयोः ।
संयोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः ॥ २१ ॥
संयुक्तयोश्च संयोगो विप्रलम्भो वियुक्तयोः ।
प्रच्छन्नश्च प्रकाशश्च पुनरेष द्विधा यथा ॥ २२ ॥

'मदनकुञ्जरकुम्भतटोपमे स्तनयुगे परितः स्फुरिताङ्गुलिम् ।
मकरजक्षतवाममपि प्रिया दयितपाणिममन्यत दक्षिणम् ॥'

---

१. 'स्वप्नावबोधौ'; 'सुप्तं विबोध'. २. 'अवहित्थम्.' ३. अस्माच्छ्लोकादग्रे केषुचिन्मूलपुस्तकेष्वन्यच्छ्लोकद्वयं दृश्यते—'विभावेनाहृतो योऽर्थस्त्वनुभावैश्च गम्यते । वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः ॥ बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रिताः । अनेन यस्मात्तदयं विभाव इति संज्ञितः ॥' ४. 'कौशिकी' इति केषुचित्पुस्तकेषु पाठः प्रामादिक एव. ५. 'सूचिकाः'. ६. 'मतः'. ७. 'कुचयुगे'.

'संतप्तः स्मरमर्मनिवेशविवशैः श्वासैर्मुहुः पक्ष्मो-
द्रागवर्तिभिरापतद्भिरभितः सिक्तश्च नेत्राम्बुभिः।
एतस्याः प्रियविप्रयोगविधुरस्त्यक्त्वाधरो रागितां
संप्रत्युद्धतवह्निवारिविषमं मन्ये व्रतं सेवते॥'

'कान्ते विचित्रसुरते क्रमबद्धरागे
संकेतकेऽपि मृगशावदृशा रमेन।
तत्कूजितं किमपि येन तदीयतल्पं
नाल्पैः परीतमनुकूजितलावकौघैः॥'

'किंचिद्वक्रितकण्ठकन्दलदलत्पीनस्तनावर्तन-
व्यायामाश्रितकञ्चुकं मृगदृशस्तस्यास्तदालोकितम्।
वाचस्ताश्च विदग्धभावचतुराः स्फारीभवन्मन्मथा
हंहो मानस किं स्मरस्यभिमताः सिद्ध्यन्ति पुण्यैः क्रियाः॥'

**त्यागी कुलीनः कुशलो रतेषु
कल्पः कलावित्तरुणो धनाढ्यः।
भव्यः क्षमावान्सुभगोऽभिमानी
स्त्रीणामभीष्टस्त्विह नायकः स्यात्॥ २३॥**

**तस्यानुकूलदक्षिणशठधृष्टा इत्थमत्र चत्वारः।
भेदाः क्रियन्ते तदुदाहृतयश्च रमणीयाः॥ २४॥**

**अतिरक्ततया नार्या सदा त्यक्तपराङ्गनः।
सीतायां रामवत्सोऽयमनुकूलः स्मृतो यथा॥ २५॥**

'अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः।

---

१. 'अनुरञ्जित-'. २. 'स्तनोद्वर्तन-'. ३. 'मुग्धमधुराः'; 'भावमधुराः'. ४. एतच्छ्लोकचतुष्टयं क्रमेण संभोग-विप्रलम्भ-प्रच्छन्नसंभोग-प्रच्छन्नविप्रलम्भानामुदाहरणम्. ५. 'भव्यः क्षमी स्थिररुचिः सुभगोऽभिमानी स्त्रीणां मतः सुभगवाग् इह नायकः स्यात्।' अयं पाठः केषुचित्पुस्तकेषूपलभ्यमानोऽपि पूर्वार्धस्य भिन्नवृत्तत्वादुपेक्ष्यः. ६. 'इत्थमथ'. ७. 'अनुरक्ततया'.

'किं त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो
दृष्टिं निःक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥'

**यो गौरवं भयं प्रेम सद्भावं पूर्वयोषिति ।**
**न मुञ्चत्यन्यचित्तोऽपि ज्ञेयोऽसौ दक्षिणो यथा ॥ २६ ॥**

'सैवास्य प्रणतिस्तदेव वचनं ता एव केलिक्रिया
भीतिः सैव तदेव नर्म मधुरं पूर्वानुरागोचितम् ।
कान्तस्याप्रियकारिणी च भवती तं वक्ति दोषाविलं
किं स्यादित्थमहर्निशं मयि मनो दोलायते चिन्तया ॥'

**प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् ।**
**ज्ञातापराधचेष्टश्च कुटिलोऽसौ शठो यथा ॥ २७ ॥**

'सहजतरले आवां तावद्बहुश्रुतिशालिनौ
पुनरिह युवां मन्ये शिष्टं तदत्र कृतागसि ।
प्रणयिनि पुनर्युक्तं गन्तुं न वीति वतावयो
र्ध्रुवमुपगतं कर्णौ प्रष्टुं कुरङ्गदृशो दृशौ ॥'

अपि च ।

'कोपात्किंचिदुपानतोऽपि रभसादाकृष्य केशाञ्चलं
नीत्वा मोहनमन्दिरं दयितया हारेण बद्ध्वा दृढम् ।
भूयो यास्यसि तद्गृहानिति मुहुः कण्ठार्धरुद्धाक्षरं
जल्पन्त्या श्रवणोत्पलेन सुकृती कश्चिद्रहस्ताड्यते ॥'

**निःशङ्कः कृतदोषोऽपि विलक्षस्तर्जितोऽपि नो ।**
**मिथ्यावाग्दृष्टदोषोऽपि धृष्टोऽसौ कथितो यथा ॥ २८ ॥**

---

१. 'दुःस्थितम्'. २. 'इति'; 'इव'. ३. 'मुक्तापराधचेष्टस्तु शठोऽयं कथितो यथा'. ४. 'आवाम्'. ५. केषुचित्पुस्तकेषु नास्ति. ६ 'उपागतोऽपि'. ७. 'कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं नीत्वा मोहनमन्दिरं दयितया सायं सखीनां पुरः । भूयोऽप्येवमिति स्खलन्मृदुगिरा संसूच्य दुश्चेष्टितं धन्यो हन्यत एव निह्नुतिपरः प्रेयान्रुदत्या हसन् ॥' इत्यस्यामरुश्लोकस्य च्छायाभूतोऽयं श्लोकः. ८. 'तर्जितो हसन्'; 'तर्जितोऽपि सन्'. ९. 'अयम्'.

'जल्पन्त्याः परुषं रुषा मम बलाच्चुम्बत्यसावाननं
गृह्णात्याशु करं करेण बहुशः संताड्यमानोऽपि सन् ।
आलीनां पुरतो दधाति शिरसा पादप्रहारान्नतो
नो जाने सखि सांप्रतं प्रणयिने कुप्यामि तस्मै कथम् ॥

अपि च ।

'धिक्त्वां धूर्त गतत्रप प्रणयिनी सैव त्वयाराध्यतां
यस्याः पादतलाहतिं तव हृदि व्याख्यात्यसौ यावकः ।
इत्युक्तोऽपि न नाम मुञ्चति यदा पादावयं दुर्जनो
मिथ्यावादविचक्षणः किमपरं कुर्यां वयस्ये तदा ॥'

गूढमन्त्रः शुचिर्वाग्मी भक्तो नर्मविचक्षणः ।
स्यान्नर्मसचिवस्तस्य कुपितस्त्रीप्रसादकः ॥ २९ ॥
पीठमर्दो विटश्चेति विदूषक इति त्रिधा ।
स भवेत्प्रथमस्तत्र नायकानायकानुगः ॥ ३० ॥
एकविद्यो विटः प्रोक्तः क्रीडाप्रायो विदूषकः ।
स्ववपुर्वेषभाषाभिर्हास्यकारी च नर्मवित् ॥ ३१ ॥
एषां प्रबन्धविषयो व्यवहारः प्रायशो भवेत्प्रचुरः ।
प्रत्येकमुदाहृतयस्तथापि काश्चिन्निगद्यन्ते ॥ ३२ ॥

'विमुञ्चामुं मानं सफलय वचः साधु सुहृदां
मुधा संतापेन ग्लपयसि किमङ्गं स्मरभुवा ।
प्रियं पादप्रान्तप्रणतमधुना मानय भृशं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥'

'प्रणयिनि भृशं तस्मिन्मानं मनस्विनि मा कृथाः
किमपरमितो युक्तायुक्तैर्विना ह्यमुना तव ।

१. पीठमर्दः. २. 'नायको नायकानुगः'. ३. 'कर्मवित्'. ४. 'स्वकर्मविषये'. ५. 'प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः । निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥' अतिप्राचीनस्य कस्मीरदेशोद्भूतचन्द्रककवेरयं श्लोकः.

अयमपि भवेत्संप्रत्येव क्षयानलसंनिभः
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥'

'दूरात्कन्दलितैर्हृदि प्रविततैः कण्ठे लुठद्भिर्हठा-
द्वक्त्रे संकटनासिकान्तरलितैर्निर्यद्भिरत्यूष्मभिः ।
निःश्वासैः पृथुमन्मथोत्थदवथुर्व्यक्तं[2] तवावेदिता
मिथ्यालम्बितमौष्ठ्येन किमतः कोपेन कान्तं प्रति[3] ॥'

**स्वकीया परकीया च सामान्यवनिता तथा ।**
**कलाकलापकुशलास्तिस्रस्तस्येह[4] नायिकाः ॥ २३ ॥**

**पौराचाररता साध्वी क्षमार्जवविभूषिता ।**
**मुग्धा मध्या प्रगल्भा च स्वकीया त्रिविधा मता ॥ २४ ॥**

**मुग्धा नववधूस्तत्र नवयौवनभूषिता ।**
**नवानङ्गरहस्यापि लज्जाप्रायरतिर्यथा ॥ २५ ॥**

'गतं कर्णाभ्यर्णं प्रसरति तथाप्यक्षियुगलं
कुचौ कुम्भारम्भौ तदपि चिबुकोत्तम्भनरुची ।
नितम्बप्राग्भारो गुरुरपि गुरुत्वं मृगयते
कथंचिन्नो तृप्तिस्तरुणिमनि मन्ये मृगदृशः ॥

'यथा रोमाञ्चोऽयं स्तनभुवि लसत्स्वेदकणिको
यथा दृष्टिस्तिर्यक्पतति सहसा संकुचति च ।
तथा शङ्केऽमुष्याः प्रणयिनि दुरास्वादितरसं
न मध्यस्थं चेतः प्रगुणरमणीयं न च दृढम् ॥'

'विरम नाथ विमुञ्च ममाञ्चलं शमय दीपमिमं सभया सखी ।
इति नवोढवधूवचसा युवा मुदमगादधिकां सुरतादपि[10] ॥'

---

१. 'प्रथममरुणच्छायस्तावत्ततः कनकाकृतिः प्रसरति ततो ध्वान्तक्षोदक्षमः क्षणदामुखे । तदनुविरहोत्ताम्यत्तन्वीकपोलतलद्युतिः सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥' अयमपि प्राचीनः श्लोकः. २. व्यक्तः. ३. एतच्छ्लोकत्रयं पीठमर्दादीनां क्रमेणोदाहरणम्. ४. 'तस्येति'. ५. 'जाने'. ६. 'सगुण'. ७. 'इयम्'. ८. समीपे. ९. 'अधिकम्'. १०. श्लोकत्रयं क्रमेण नवयौवन-नवानङ्गरहस्य-लज्जाप्रायरतीनामुदाहरणम्.

सकम्पा चुम्बने वक्त्रं हरत्येषोपगूहिता।
परावृत्य चिरं तल्प आस्ते रन्तुं च वाञ्छति ॥ ३६ ॥

'अपहरति यदास्यं चुम्बने श्लिष्यमाणा
वलति च शयनीये कम्पते च प्रकामम्।
वदति च यदलक्ष्यं किंचिदुक्तापि भूयो
रमयति सुतरां तच्चित्तमन्तर्नवोढा ॥'

मुग्धामावर्जयन्त्येव मृदूपायेन सान्त्वयन्।
नातिभीतिकरैर्भावैर्नवबन्धैर्बालभीषकैः ॥ ३७ ॥

'सरति सरसमन्तर्गोदपा भ्रमद्भ्रमरावली
सुमुखि विमुखी पद्मे मन्ये तवास्यपिपासया।
इति निगदिते किंचिद्व्रीड्या विवर्तितकंधरा
वदनकमले भर्त्रा बाला चिरं परिचुम्बिता ॥'

अन्यां निषेवमाणेऽपि यदि कुप्यति सा प्रिये।
रोदित्यस्याग्रतः स्वल्पमनुनीता च तुष्यति ॥ ३८ ॥

'मन्यौ कृते प्रथममेव विकारमन्यं
नो जानती नववधू रुदती परं सा।
धूर्तेन लोचनजलं परिमृज्य गाढं
संचुम्ब्य चाधरदले गमिता प्रसादम् ॥'

आरूढयौवना मध्या प्रादुर्भूतमनोभवा।
प्रगल्भवचना किंचिद्विचित्रसुरता यथा ॥ ३९ ॥

१. 'सलज्जा'. २. 'अवगूहिता'. ३. अस्माच्छ्लोकादग्रे 'दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता' इत्यादि नागानन्दनाटकतृतीयाङ्कस्थश्लोकः केषुचिन्मूलपुस्तकेषु सटीकपुस्तके च वर्तते. ४. 'चित्रैः'. ५. 'भाषितैः'. ६. 'दरमपास्य विरागि परागिणीरलिकदम्बकमम्बुरुहां ततीः। स्तनभरेण जितस्तबकानमन्नवलते वलतेऽभिमुखं तव ॥' इति शिशुपालवधे (६।११) माघः. ७. 'प्रथमजनिते मन्यौ बाला विकारमजानती कितवचरितेनारोप्याङ्कं विनम्रमुखेव सा। चिबुकमलकं चोन्नम्योच्चैरकृत्रिमविभ्रमा नयनसलिलस्यन्दिन्योष्ठे रुदत्यपि चुम्बिता ॥' इति कस्यचित्पद्यम्. ८. 'विराजद्विभ्रमा'.

'तरत्तारं चक्षुः क्षपयति मुनीनामपि दृशः
कुचद्वन्द्वाक्रान्तं हृदयमहहः कान्न कुरुते ।
गतिर्मन्दीभूता हरति गमनं मन्मथवता-
महो तन्व्यास्तुल्यं तरुणिमनि सर्वं विजयते ॥'

'दृष्टिः स्निह्यति निर्भरं प्रियतम वैदग्ध्यभाजो गिरः
कामं कुन्तलमालिकाविरचने त्यक्तान्यकर्मा करः ।
वक्षः संव्रियते पुनःपुनरिदं लीलालसं गम्यते
जाता सुभ्रु मनोरमा तव दशा कस्मादकस्मादियम् ॥'

'सुभग कुरबकस्त्वं नो किमालिङ्गनोत्कः
किमु मुखमदिरेच्छुः केसरो नो हृदिस्थः ।
त्वयि नियतमशोके युज्यते पादघातः
प्रियमिति परिहासात्पेशलं काचिदूचे ॥'

'कान्ते तथा कथमपि प्रथितं मृगाक्ष्या
चातुर्यमुद्धतमनोभवया रतेषु ।
तत्कूजितान्यनुवदद्भिरनेकवारं
शिष्यायितं गृहकपोतशतैर्यथास्याः ॥'

गाढं व्यापयते कान्तं पिबतीव रतावियम् ।
विशतीव तदङ्गेषु सुखनीव मुखे यथा ॥ ४० ॥

'कृत्वानेकविधां रतिं सुरते केलिं कथंचिच्चिरा-
त्प्रान्तश्रान्तःसुखमीलिताक्षियुगला स्विद्यत्कपोलस्थली ।
सुप्तेयं किल सुन्दरीति सुभगः स्वैरं तथैवास्वज-
द्गाढानङ्गविमर्दनिःसहवपुर्निद्रां सहैवागतः ॥'

**सा धीरा वक्ति वक्रोक्त्या प्रियं कोपात्कृतागसम् ।**
**मध्या रोदित्युपालम्भैरधीरा परुषं यथा ॥ ४१ ॥**

---

१. 'कर्माग्रहः'. २. 'तत्कूजितं मृदु'. ३. 'गृहशकुन्त-'. ४. एतच्छ्लोकचतुष्टयं क्रमेणारूढयौवना-आदुर्भूतमनोभवा-प्रगल्भवचना-विचित्रसुरतानामुदाहरणम्. ५. 'वदति'.

'उपेत्य तां दृढपरिरम्भलालसश्चिरादभूः प्रमुषितचारुचन्दनः।
धृताञ्जनः सपदि तदक्षिचुम्बनादिहैव ते प्रिय विदिता कृतार्थता॥'

'यत्रार्कायितमिन्दुना सरसिजैरङ्गारपुञ्जायितं
क्रुद्धायां मयि नाथ ते कदलिकाकाण्डैरलातायितम्।
कालोऽन्यः खलु कोऽपि सोऽमृतमयो जातो विषात्माधुना
विकल्वां धूर्त विनियदश्रुरवला सोऽहं रुदन्ती गता॥'

'साधं मनोरथशतैस्तव धूर्त कान्ता
सैव स्थिता मनसि कृत्रिमभावरम्या।
अस्माकमस्ति न कथंचिदिहावकाश-
स्तस्मात्कृतं चरणपातविडम्बनाभिः॥'

**लब्धायतिः प्रगल्भा स्यात्समस्तरतकोविदा।**
**आक्रान्तनायका वाढं विगर्जाद्विभ्रमा यथा॥ ४२॥**

'सेयं पङ्कजिनी मृणाललतिकामादाय यस्याः प्रियो
हारं स कुरुते पयोधरतटे प्रत्यग्रतारारुचम्।
बन्धूकं न तदेतदालि विदलद्यत्तेन सीमन्तितं
सर्वाशाविजिगीषुपुष्पधनुषो बाणश्रियं धास्यति॥

'यत्र स्वेदलवैरलं विगलितैर्व्यालुप्यते चन्दनं
स्वच्छन्दैर्मणितैश्च यत्र रणितं निह्नूयते नूपुरम्।
यत्रायान्त्यचिरेण सर्वविषयाः कामं तदेकाग्रतां
सख्यस्तत्सुरतं भणामि रतये शेषा तु लोकस्थितिः॥

'स्वामिन्भङ्गुरयालकं सतिलकं भाले विलासिन्कुरु
प्राणेश त्रुटितं पयोधरतटे हारं पुनर्योजय।
इत्युक्त्वा सुरतावसानसुखिता संपूर्णचन्द्रानना
स्पृष्टा तेन तथेति जातपुलका प्राप्ता पुनर्मोहनम्॥'

१. धीरा-मध्या-धीराणां क्रमेणोदाहरणत्रयम्. २. 'तदेतदेव विलसत्'. ३. 'स-खेदैः'. ४. 'धृतये'. ५. 'भङ्गुरितालकम्'. ६. 'पयोधरयुगे'. ७. 'इत्युक्ते'. ८. 'मुषिताप्यापूर्ण-'.

'मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनै-
रलसवलितैरङ्गन्यासैर्मनोभवबन्धुभिः ।
असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितै-
स्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम् ॥

निराकुला रतावेषा द्रवतीव प्रियाङ्कके ।
कोऽयं कास्मि रतं किं वा न वेत्ति च रसाद्यथा ॥ ४३ ॥

'धन्यास्ताः सखि योषितः प्रियतमे सर्वाङ्गलग्नेऽपि याः
प्रागल्भ्यं प्रथयन्ति मोहनविधावालम्ब्य धैर्यं महत् ।
अस्माकं तु तदीयपाणिकमलेऽप्युन्मोचयत्यंशुकं
कोऽयं का वयमत्र किं नु सुरतं नैव स्मृतिर्जायते ॥'

कृतदोषेऽपि माधीरा तस्मिन्नाद्रियते रुषा ।
आकारसंवृतिं चापि कृत्वोदास्ते रतौ यथा ॥ ४४ ॥

'यद्वाचः प्रचुरोपचाररचना यत्सादरं दर्शनं
प्रत्युत्थानमिदं स्वहस्तनिहितं यद्भिन्नमप्यासनम् ।
उत्पश्यामि यदेवमेव च सुहृद्दोष्टि सखीसंसृर्गा
तच्छङ्के तव पङ्कजाक्षि बलवान्कोऽप्यप्रमादो मयि ॥

'यत्पाणिर्न निवारितो निवसनग्रन्थिं समुद्ग्रन्थय-
न्भ्रूभेदो न कृतो मनागपि मुहुर्यत्खण्ड्यमानेऽधरे ।
यन्निःशङ्कमिवार्पितं वपुरहो पत्युः समालिङ्गने
मानिन्या कथितोऽनुकूलविधिना तेनैव मन्युर्महान् ॥

मध्या प्रतिभिनत्त्येनं सोल्लुण्ठं साधुभाषितैः ।
अधीरा परुषैर्हन्ति संतर्ज्य दयितं यथा ॥ ४५ ॥

'कृतं मिथ्यावादैर्विरम विदितं कामुक चिरा-
त्प्रियां तामेवोच्चैरभिसर यदीयैर्नखपदैः ।

---

१. लज्जायत्यादीनामुदाहरणचतुष्टयम्. २. 'अनुकूलरतावेगाद्द्रवतीव तदङ्कके'. 'काहम्'. ४. 'साग्रहम्'. ५. 'च रुषा'.

विलासैश्च प्राप्तं तव हृदि पदं रागबहुलै-
मया किं ते कृत्यं ध्रुवमकुटिलाचारपरया ॥'

'सा बाढं भवतोक्षितेति निबिडं संयम्य बाह्वोः स्रजा
भूयो द्रक्ष्यसि तां शठेति दयितं संतर्ज्य संतर्ज्य च।
आलीनां पुर एव निह्नुतिपरः कोपाद्रणन्नूपुरं
मानिन्या चरणप्रहारविधिना प्रेयानशोकीकृतः ॥'

एकाकारा मता मुग्धा पुनर्भूश्च यतोऽनयोः।
अतिसूक्ष्मतया भेदः कविभिर्न प्रदर्शितः ॥ ४६ ॥

मध्या पुनः प्रगल्भा च द्विधा सा परिभण्यते।
एका ज्येष्ठा कनिष्ठान्या नायकप्रणयं प्रति ॥ ४७ ॥

उपरोधात्तथा स्नेहात्सानुरागोऽपि नायकः।
चेष्टते तां प्रति प्रायः कलासु कुशलो यथा ॥ ४८ ॥

'त्वदक्षिणी कुवलयबुद्धिरत्यलं रुणध्म्यहं तदिति निमील्य लोचने।
ततो भृशं पुलकितगण्डमण्डलां युवा परां निभृतमचुम्बदङ्गनाम् ॥'

संपत्तौ च विपत्तौ च मरणेऽपि न मुञ्चति।
या स्वीया तां प्रति प्रेम जायते पुण्यकारिणः ॥ ४९ ॥

अन्यदीया द्विधा प्रोक्ता कन्योढा चेति ते प्रिये।
दर्शनाच्छ्रवणाद्वापि कामिते भवतो यथा ॥ ५० ॥

'किमपि ललितैः स्निग्धैः किंचित्किमप्यतिकुञ्चितैः
किमपि वेल्लितैः कंदर्पपुन्द्रमाद्रिविलक्षणैः।
अभिमतमुखं वीक्षां चक्रे नवाङ्गनया तथा
ललितकुशलोऽप्यालीलोको यथातिविसिस्मिये ॥'

---

१. 'परुष संभत्स्ये'; 'दयितं संभत्स्ये'. २. 'निह्नुनपरम्.' ३. 'एकाकाररता'. ४. 'द्विधासौ'; 'द्विविधा'. ५. 'कनिष्ठा च नायक-'; 'कनिष्ठा स्यान्नायिका-'. ६ गद्य. ७. 'मरणे च'. ८. 'पुण्यकारिणाम्'. ९. 'चापि'. १०. 'अतिकुञ्चितैः'. ११. 'वलितैः'. १२. 'ललन'; 'कलन'.

'निशमय्य बहिर्मनोहरं स्वरमैक्षिष्ट तथापरा यथा ।
तिलमात्रकमप्यभून्नहि श्रवणेन्दीवरलोचनान्तरम् ॥'
'कस्याश्चित्सुभग इति श्रुतश्चिरं यस्तं दृष्ट्वाधिगतरतेर्निमीलिताक्ष्याः ।
निस्पन्दं वपुरवलोक्य मौविदल्लाः मंतेपुर्विधुरधियो निशान्तवध्वाः ॥
'कार्श्यजागरसंतापान्यः करोति श्रुतोऽप्यलम् ।
तमेव दुर्लभं कान्तं चेतः कस्माद्दिदृक्षसे ॥'
साक्षाच्चित्रे तथा स्वप्ने तस्य स्याद्दर्शनं त्रिधा ।
देशे काले च भङ्ग्यां च श्रवणं चास्य तद्यथा ॥ ५१ ॥
'सत्यं सन्ति गृहे गृहे प्रियतमा येषां भुजालिङ्गन-
व्यापारोच्छलदच्छमोहनजला जायन्त एणीदृशः ।
प्रेयान्कोऽप्ययमत्र सुकृती दृष्टेऽपि यस्मिन्वपुः
स्वेदोज्जृम्भणकम्पमाल्वममुस्वैः प्राप्नोति कांचिद्दशाम् ॥'
'चित्रं चित्रगतोऽप्येष ममालि मदनोपमः ।
समुन्मूल्य बलाल्लज्जामुत्कण्ठयति मानसम् ॥'
'मुग्धा स्वप्नसमागते प्रियतमे तत्पाणिसंस्पर्शना-
द्रोमाञ्चाञ्चितया शरीरलतया संसूच्य कोपात्किल ।
मा मां वल्लभ संस्पृशेति सहसा शून्यं वदन्ती मुहुः
सख्या नो हसिता सचिन्तमसकृत्संशोचिता प्रत्युत ॥'
'स्फारस्फुरत्प्रदीपं सौधं मधु सोत्पलं कलं गीतम् ।
प्रियसखि सकलमिदं तव सफलं खलु यदि भवेत्सोऽत्र ॥'
'विकसति कैरवनिकरे सरति च सरसीसमीरणो सुतनु ।
चुम्बत्यम्बरमिन्दौ तव तेन विना रतिः कीदृक् ॥'
'अजननिरस्तु दृशोस्तव कुचयोरभवनिरलं भवतु ।
यदि दृश्यते न स युवा निर्भरमालिङ्ग्यते नो वा ॥'

---

१. 'मनोगतं चिरम्'. २. 'तस्य'. ३. 'नियतम्'. ४. 'मुहुः'. ५. 'कस्मात्'. ६. 'सचित्रम्'. ७. 'विफलं यदि नो भवेत्सोऽत्र'. ८. 'सुभ्रु'. ९. 'ते'. १०. 'सुमुखि यदि दृश्यते न स'.

द्रष्टुं वक्तुं च नो कन्या रक्ता शक्नोत्यमुं स्फुटम् ।
पश्यन्तमभिजल्पन्तं विविक्तेऽपि ह्रिया यथा ॥ ५२ ॥

'कामं न पश्यति दिदृक्षत एव भूम्ना
नोक्तापि जल्पति विवक्षति चादरेण ।
लज्जास्मरव्यतिकरेण मनोधिनाथे
बाला रसान्तरमिदं ललितं बिभर्ति ॥'

विज्ञाननायिकाचित्ता सखी वदति नायकम् ।
नायकं वा सखीं तस्याः प्रेमाभिव्यक्तये यथा ॥ ५३ ॥

'कण्टकिततनुशरीरा लज्जामुकुलायमाननयनेयम् ।
तव कुमुदिनीव वाञ्छति नृचन्द्र बाला करस्पर्शम् ॥'

'संतापयन्ति शिशिरांशुरुचो यदेते
संमोहयन्ति च विनिद्रसरोजवाताः ।
यत्खिद्यते तनुरियं च तदेष दोषः
सख्यास्तवैव सुतनु प्रचुरत्रपायाः ॥'

अपश्यन्तं च सा कान्तं स्फारिताक्षी निरीक्षते ।
दूरादालोकयत्येवं सखीं स्वजति निर्भरम् ॥ ५४ ॥
निर्निमित्तं हसन्ती च सखीं वदति किंचन ।
सव्याजं सुन्दरं किंचिद्गात्रमाविष्करोति च ॥ ५५ ॥
सख्यादि स्थापितां माल्यं कार्यादि रचयेत्पुनः ।
चेष्टां च कुरुते रम्यामङ्गभङ्गैः शुभैर्यथा ॥ ५६ ॥

'अभिमुखगते तस्मिन्नेव प्रिये बहुशो वद-
त्यवनतमुखं तूष्णीमेव स्थितं मृगनेत्रया ।
अथ किल वलद्ग्रीवालोलं स एव तथेक्षितः
कथमपि यथा मन्ये दृष्ट्या कृतं श्रुतिलङ्घनम् ॥'

---

१. 'सा मोहयन्ति'. २. 'स एष'. ३. 'अपश्यन्ती तु सा कान्तं स्फुरिताक्षी'. ४. 'पृथा'. ५. 'बाला'. ६. 'पुरतः'. ७. 'वलज्जीवं यातः'.

‘तिर्यग्वर्तितगात्रयष्टिविषमोद्वृत्तस्तनास्फालन-
त्रुट्यन्मौक्तिकमालया सपुलकस्वेदोल्लसद्गण्डया ।
दूरादेव विलोकयत्यभिमते तद्वक्त्रदत्तेक्षणं
दुर्वारस्मरतापया सहचरी गाढं समालिङ्गिता ॥’
‘अनिमित्तं यदिह हसति निष्कारणमेव यत्सखीं वदति ।
दयितं विलोक्य तदियं शंसति तदधीनमात्मानम् ॥’
‘प्रादुष्यद्भुजमूलकान्तिललितामुद्यम्य दोर्वल्लरीं
वल्गत्पीनपयोधरस्थललुठन्मुक्तावलीसुन्दरम् ।
अङ्गुल्या प्रचलत्कराग्रवलयस्वानोपहूतस्मरं
तन्व्याः कुञ्चितलोचनं विजयते तत्कर्णकण्डूयनम् ॥’
**स्रजोऽवतंसं रशनां च किंचित्स्मयं समालोक्य समामजन्ती ।**
**पुनस्तरां सा सुहृदो ददाति प्रत्यङ्गमावासमिव स्मरस्य ॥ ५७ ॥**
‘व्याजृम्भणोल्लसितदन्तमयूखजाल-
व्यालम्बिमौक्तिकगुणं रमणं मुदैव ।
ऊर्ध्वं मिलद्भुजलतावलयप्रपञ्च-
सत्तोरणं हृदि विशत्यपरा व्युदास ॥’
**अन्योढापि करोत्येवं सर्वमुद्धतमन्मथा ।**
**दुरवस्था पुनः कान्तमभियुङ्क्ते स्वयं यथा ॥ ५८ ॥**
‘उल्लङ्घ्यापि सखीवचः समुचितामुत्सृज्य लज्जामलं
हित्वा भीतिभरं निरस्य च निजं सौभाग्यगर्वं मनाक् ।
आज्ञां केवलमेव मन्मथगुरोरादाय नूनं मया
त्वं निःशेषविलासिवर्गगणनाचूडामणे संश्रितः ॥’
**चक्षुर्मीलति सानन्दं नितम्बः प्रस्रवत्यपि ।**
**वेपते च तनुस्तन्वी तस्यास्तद्दर्शने यथा ॥ ५९ ॥**

---

१. ‘स्फालनात्रुट्यन्’. २. ‘गण्डया’. ३. ‘चलन्’. ४. ‘अङ्गुल्यप्रचलत्’. ५. ‘सम-प्रचलत्कर्णस्य’. ६. ‘रमणम्’. ७. ‘अपराध्युवास’. ८. ‘दुःखावस्था’. ९. ‘भित्त्वा’. १०. ‘तन्व्याः’.

'मीलन्मन्थरचक्षुषा परिपतत्काञ्चीग्रहव्यग्रया
गाढानङ्गभरस्खलज्जघनया कम्पोपरुद्धाङ्गया।
सर्वाङ्गं चटुकारकोऽप्यवलया संकेतके कौतुका-
दास्तां रन्तुमहो निरीक्षितुमपि प्रेयान्न संभावितः॥'

नाभियुङ्क्ते स्वयं कन्या मुग्धत्वाद्दुःस्थितापि तम्।
तदवस्थां तु कान्ताय तत्सखी कथयेद्यथा॥ ६०॥

'निश्वासेषु स्खलति कदलीवीजनं तापमेप-
न्नेत्राम्भोभिश्छलमिति पतितैः सिच्यते च स्तनान्तः।
अस्याः किंचित्सुभग तदभूत्तानवं त्वद्वियोगे
येनाकस्माद्वलयपदवीमङ्गुलीयं प्रयाति॥'

अनन्यशरणा स्वीया धनाहार्या पराङ्गना।
अस्यास्तु केवलं प्रेम नैनपा रागिणां मता॥ ६१॥
सामान्यवनिता वेश्या सा वित्तं परमिच्छति।
निर्गुणेऽपि न विद्वेषो न रागोऽस्या गुणिन्यपि॥ ६२॥
तत्स्वरूपमिदं प्रोक्तं केचिदत्रास्मा वयं पुनः।
वर्णयन्त्यनया युक्त्या तासामप्यनुरागिताम्॥ ६३॥
शृङ्गाराभास एव स्याद्यदि ता रागवर्जिताः।
तद्व्यापारोऽथवा तासां स्मरः किं भाक्षितो वकैः॥ ६४॥
तस्मात्तासामपि क्वापि रागः स्यात्किं नु सर्वथा।
धनार्थं कृत्रिमैर्भावैर्ग्राम्यं व्यामोहयन्ति ताः॥ ६५॥
लिङ्गी प्रच्छन्नकामश्च नरमन्यश्च पण्डकः।
सुखप्राप्तधनो मूर्खः पितृवित्तेन गर्वितः॥ ६६॥
इत्यादीन्प्रथमं ग्राम्याञ्ज्ञात्वाकृष्य च तद्धनम्।
अपूर्वा इव मुञ्चन्ति तानेतास्तापयन्ति च॥ ६७॥

१. 'भवद्भमणया'. २. 'स्थगिति'. ३. 'ताम्यते'. ४. 'त्वद्वियोगात्'. ५. 'वराङ्गया'. ६. 'बलवत्यानया'. ७. 'शृङ्गाराभाव'. ८. 'भावश्च'. ९. 'दर्पितः'. १०. 'इत्यादि प्रथमं ज्ञात्वा सम्यक्कर्षेति तद्धनम्—तस्यादेता विषोपमाः'.

किं तु तासां कलाकेलिकुशलानां मनोरमम् ।
विस्मारितापरस्त्रीकं सुरतं जायते यथा ॥ ६८ ॥

'गाढालिङ्गनपीडितस्तनतटं स्विद्यत्कपोलस्थलं
संदष्टाधरमुक्तसीत्कृतमभिभ्रान्तभ्रु नृत्यत्करम् ।
चाटुप्रायवचो विचित्रभणितं घातैर्नखैश्चाङ्कितं
वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम् ॥'

ईर्ष्या कुलस्त्रीषु न नायकस्य निःशङ्ककेलिर्न पराङ्गनासु ।
वेश्यासु चैतद्द्वितयं प्रसिद्धं सर्वस्वमेतास्तदहो स्मरस्य ॥ ६९ ॥

कुप्यत्पिनाकिनेत्राग्निज्वालाभस्मीकृतः पुरा ।
उज्जीवितः पुनः कामो मन्ये वेश्याविलोकितैः ॥ ७० ॥

आनन्दयन्ति युक्त्या ताः सेविता घ्नन्ति चान्यथा ।
दुर्विज्ञेयाः प्रकृत्यैव तस्माद्वेश्या विषोपमाः ॥ ७१ ॥

स्वाधीनपतिकोत्का च तथा वासकसज्जिका ।
संधिता विप्रलब्धा च खण्डिता चाभिसारिका ॥ ७२ ॥

प्रोषितप्रेयसी चैवं नायिकाः पूर्वसूचिताः ।
ता एवात्र भवन्त्यष्टाववस्थाभिः पुनर्यथा ॥ ७३ ॥

यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति ।
विचित्रविभ्रमासक्ता स्वाधीनपतिका यथा ॥ ७४ ॥

'लिखति कुचयोः पत्रं कण्ठे नियोजयति स्रजं
तिलकमलिके कुर्वन्गण्डादुदस्यति कुन्तलान् ।
इति चटुशतैर्वारं वारं वपुः परितः स्पृश-
न्विरहविधुरो नास्याः पार्श्वं विमुञ्चति वल्लभः ॥'

उत्का भवति सा यस्याः संकेतं नागतः प्रियः ।
तस्यानागमने हेतुं चिन्तयन्त्याकुला यथा ॥ ७५ ॥

---

१. 'किंचित्'. २. 'नृणाम्'. ३. 'भणितैः'. ४. 'रतैः'. ५. 'अभिसंधिता'; 'अतिसंधिता'. ६. 'सा स्वाधीनपतिः'. ७. 'कज्जलम्'. ८. 'आकुलेक्षणा'.

'किं रुद्धः प्रियया कयाचिदथवा सख्या तयोद्वेजितः
किं वा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः।
इत्यालोच्य मृगीदृशा करतले संस्थाप्य वक्राम्बुजं
दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः॥'

**भवेद्वासकसज्जासौ सज्जिताङ्गरतालया।**
**निश्चित्यागमनं भर्तुर्द्वारेक्षणपरा यथा॥ ७६॥**

'दृष्ट्वा दर्पणमण्डले निजवपुर्भूषां मनोहारिणीं
दीपार्चिःकपिशं च मोहनगृहं त्रस्यत्कुरङ्गीदृशा।
एवं नौ सुरतं भविष्यति चिरादद्येति सानन्दया
कामं कान्तदिदृक्षयानिलचलिता द्वारि दृगारोपिता॥'

**निरस्तो मन्युना कान्तो नमन्नपि यया पुनः।**
**दुःस्थिता तं विना सानिसंधिर्नाभिमता यथा॥ ७७॥**

'यत्पादप्रणतः प्रियः परुषया वाचा स निर्वासितो
यत्सख्या न कृतं वचो जडतया यन्मन्युरेको धृतः।
पापस्यास्य फलं तदेतदधुना यच्चन्दनेन्दुद्युति-
प्रालेयाम्बुसरोरुपङ्कजविसैर्गात्रं मुहुर्दह्यते॥'

**प्रेष्य दूतीं स्वयं दत्त्वा संकेतं नागतः प्रियः।**
**यस्यास्तेन विना दुःस्था विप्रलब्धा तु सा यथा॥ ७८॥**

'यत्संकेतगृहं प्रियेण कथितं संप्रेष्य दूतीं स्वयं
तच्छून्यं सुचिरं निषेव्य सुदृशा पश्चाच्च भग्नाशया।
स्थानोपासनसूचनाय विगलत्सान्द्राञ्जनैर्लोचनै-
र्भूमावक्षरमालिकेव लिखिता दीर्घं रुदत्या शनैः॥'

**कुतश्चिन्नागतो यस्या उचिते वासके प्रियः।**
**तदनागमसंतप्ता खण्डिता सा मता यथा॥ ७९॥**

---

१. 'मम'. २. 'सज्जिताङ्गा रतालये'. ३. 'ऊचे'. ४. 'कथिता'. ५. 'कोपस्य'. ६. 'सख्या'. ७. 'ध्यातम्'.

'सोत्कण्ठं रुदितं सकम्पमसकृद्यातं सबाष्पं चिरं
चक्षुर्दिक्षु निवेशितं सकरुणं सख्या समं जल्पितम् ।
नागच्छत्युचितेऽपि वासकविधौ कान्ते समुद्विग्नया
तत्तत्किंचिदनुष्ठितं मृगदृशा नो यत्र वाचां गतिः ॥'

**या निर्लज्जीकृता बाढं मदने मदनेन च ।
अभियाति प्रियं साभिसारिकेति मता यथा ॥ ८० ॥**

'नो भीतं तडितो दृशा जलमुचा तद्दर्शनाकाङ्क्षया
नो गर्जिर्गणिता भृशं श्रुतिमुगं तद्वाचि संचिन्त्य च ।
धारापातसमुद्भवा न च मता पीडा तदालिङ्गनं
वाञ्छन्त्या दयिताभिसारणविधौ तन्व्या परं तत्परम् ॥'

**कुतश्चित्कारणाद्यस्याः पतिर्देशान्तरं गतः ।
दत्त्वावधिं भृशार्ता सा प्रोषितप्रेयसी यथा ॥ ८१ ॥**

'उत्क्षिप्यालकमालिकां विलुलितामापाण्डुगण्डस्थला-
द्विश्लिष्यद्वलयप्रपातभयतः प्रोद्यम्य किंचित्करौ ।
द्वारस्तम्भनिषण्णगात्रलतिका केनापि पुण्यात्मना
मार्गालोकनदत्तदृष्टिरबला तत्कालमालिङ्ग्यते ॥'

**निःश्वाससंतापसखीवचोभिश्चिन्ताश्रुपातादियुताः सखेदाः ।
वाच्या प्रलब्धागतभर्तृकान्याभिसंधिताः खण्डितया सहात्र ॥८२॥
विचित्रमण्डना हृष्टा भवेत्स्वाधीनभर्तृका ।
तथा वासकसज्जापि सा किं त्वागन्तुकप्रिया ॥ ८३ ॥
कुलजान्याङ्गना वेश्या त्रिधा स्यादभिसारिका ।
यथैवोक्तास्तथैवान्याः स्वाधीनपतिकादयः ॥ ८४ ॥
कुलजा संवृता त्रस्ता सव्रीडा च द्रुतं व्रजेत् ।
नायकं पुन्नागी च समन्तादनवेक्षिता ॥ ८५ ॥**

---

१. 'निर्लज्जा कृता'. २. 'स्वयम्'. ३. 'जलमुचा'; 'जडमुचाम्'. ४. 'मता'. ५. 'विश्लिष्यत्'. ६. 'वचोभिः'. ७. 'वाच्याः'. ८. 'अभिसंधिताः'. ९. 'च'. १०. 'सव्रीडं तद्गृहम्'. ११. 'सदान्यैरप्यवीक्षिता'.

सखीयुक्ता मदाधिक्यात्स्फारिताक्षी न शङ्किता।
सशब्दाभरणा कामं वेश्या सरति नायकम्॥ ८६॥
त्रयोदशविधा स्वीया द्विविधा च पराङ्गना।
एका वेश्या पुनश्चाष्टाववस्थाभेदतोऽत्र ताः॥ ८७॥
पुनश्च तास्त्रिधा सर्वा उत्तमा मध्यमाधमा।
इत्थं शतत्रयं तासामशीतिश्चतुरुत्तरा॥ ८८॥
दोषानुरूपकोपा यानुनीता च प्रसीदति।
रज्यते च भृशं नाथे गुणहार्योत्तमेति सा॥ ८९॥
'कान्ते किं कुपितासि कः परजने प्राणेश कोपो भवे-
त्कोऽयं सुभ्रु परस्त्वमेव दयिते दासोऽस्मि कस्ते परः।
इत्युक्त्वा प्रणतः प्रियः क्षितितलादुत्थाप्य सानन्दया
नेत्राम्भःकणिकाङ्कितं स्तनतटे तन्व्या समारोपितः॥'
दोषे स्वल्पेऽपि या कोपं धत्ते कष्टेन मुञ्चति।
प्रयाति कारणाद्रागं मध्यमा सा मता यथा॥ ९०॥
'विस्फारस्फुरिताधरापि विकसद्गण्डस्थलप्रस्खल-
द्घर्माम्भःकणिकापि भङ्गुरतरभ्रूभेदभूषाप्यलम्।
पादान्तप्रणते प्रिये प्रकटयत्यन्तः प्रसादं प्रिया
केशारमन्नपुण्डलीषु वलितानुन्मोचयन्ती शनैः॥
या कुप्यति विना दोषं प्रसीदत्यनुनयं विना।
निर्हेतुकमर्षाचैव चलचित्तापि साधमा॥ ९१॥
'यत्राधःकृतकामकार्मुककथो भ्राम्यद्भ्रुवोर्विभ्रमः
सद्यः प्रोद्गतचन्द्रकान्तिजयिनी यस्मिन्कपोलच्छविः।
यत्र स्वेदकणावलुप्तमहिमा हारोऽप्युरोजस्थले
कोऽयं मानिनि मत्प्रणामविमुखः प्रत्यग्रमानग्रहः॥'

१. 'यथा'. २. 'पुनस्तास्त्रिविधाः'. ३. 'तुष्यति'. ४. 'प्रस्फार-'. ५. 'सपलितान्'; 'वलयितान्'. ६. 'दोषैः'. ७. 'चलचित्तेति'. ८. 'यः कुद्ध:'. ९. 'कपोल्लासमनुमः'. १०. 'प्रोम्भितचन्द्रबिम्ब'. ११. 'कणावलिप्त-'.

जातिकालवयोवस्थाभावकंदर्पनायकैः ।
इतरा अप्यसंख्याः स्युर्नोक्ता विस्तरभीतितः ॥ ९२ ॥
इत्यादि सकलं ज्ञात्वा स्वयं चालोक्य तद्विदाम् ।
कवीनां च विशेषोक्त्या ज्ञातव्याः सकला इमाः ॥ ९३ ॥
रोमाञ्चवेपथुस्तम्भस्वेदनेत्राम्बुविभ्रमाः ।
वाच्याः संयोगशृङ्गारे कविना नायिकाश्रिताः ॥ ९४ ॥
संबन्धिमित्रद्विजराजतीक्ष्णवर्णाधिकानां प्रमदा न गम्याः ।
व्यङ्गास्तथा प्रव्राजिता विभिन्नमन्त्राश्च धर्मार्थमनोभवज्ञैः ॥ ९५ ॥
अनेन मार्गेण विशेषरम्यं संभोगशृङ्गारमिमं वितन्वन् ।
भवेत्कविर्भावरसानुरक्तो विदग्धगोष्ठीवनितामनोज्ञः ॥ ९६ ॥

इति श्रीरुद्रभट्टविरचिते शृङ्गारतिलकाभिधाने काव्यरसालंकारे
संभोगशृङ्गारो नाम प्रथमः परिच्छेदः ।

द्वितीयः परिच्छेदः ।

विप्रलम्भाभिधानोऽयं शृङ्गारः स्याच्चतुर्विधः ।
पूर्वानुरागो मानाख्यः प्रवासः करुणात्मकः ॥ १ ॥
दंपत्योर्दर्शनादेव समुत्पन्नानुरागयोः ।
ज्ञेयः पूर्वानुरागोऽयमप्राप्तौ च दशा यथा ॥ २ ॥

'किं चन्दनै रचयसे नु मृणालशय्यां
मा मा ममालि कुरु कोमलतालवृन्तम् ।
मुग्धाग्रहं विकचपङ्कजयोर्जनेषु
तत्संगमः परमपाकुरुते स्मराग्निम् ॥'

'यत्सारैरिव पङ्कजस्य घटितं यच्चन्द्रगर्भादिव
प्रोत्कीर्णं यदनङ्गसायकशिखाभासेव संवर्धितम् ।
यत्संसिच्य सुधारसैरिव रतेरास्थानभूमीकृतं
तद्भूयोऽपि कदा सरोरुहदृशः पश्यामि तस्या मुखम् ॥'

१. 'जातिरूपकला-'. २. 'संयोग'. ३. 'करुणा यथा'. ४. 'प्रकृष्टगुरुरागयोः'. ५. 'या'. ६. 'रचय मुख'. ७. 'धुनु'. ८. 'दर्शनेषु'.

मृणालकदलीचन्द्रचन्दनाम्बुरुहादिकम् ।
तत्रानयोः स्मरातङ्कशान्तये नैव सेवितम् ॥ ३ ॥
आलोकालापसंरूढरागाकुलितचेतसोः ।
तयोर्भवेदसंप्राप्तौ दशावस्थः स्मरो यथा ॥ ४ ॥
अभिलाषोऽथ चिन्ता स्यात्स्मृतिश्च गुणकीर्तनम् ।
उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिरेव च ॥ ५ ॥
जडता मरणं चैव दशमं जायते ध्रुवम् ।
असंप्राप्तौ भवन्त्येतास्तयोर्दश दशा यथा ॥ ६ ॥
व्यवसायो भवेद्यत्र वाढं तत्संगमाशया ।
संकल्पाकुलचित्तत्वात्सोऽभिलाषः स्मृतो यथा ॥ ७ ॥

'प्रविशति यथा गेहेऽकस्माद्बहिश्च विचेष्टते
वदति च यथा सख्या सार्धं महासमिहोत्सुका ।
दयितवदनालोके मन्दं यथा च चलत्यसौ
मृगदृशि तथैतस्यां मन्ये स्मरेण कृतं पदम् ॥'

कथं स वल्लभः प्राप्यः किं कुर्यामस्य सिद्धये ।
कथं भवेदसौ वश्य इति चिन्ता मता यथा ॥ ८ ॥

'सत्यं दुर्लभ एष वल्लभतमो रागो ममास्मिन्पुनः
कोऽप्यन्योऽस्ति गुरुर्न चातिनिपुणाः सख्योऽस्य संबोधने ।
संचिन्त्येति मृगीदृशा प्रियतमं दृष्ट्वा श्लथां मेखलां
बध्नन्त्या न गतं स्थितं न च गलद्धासो न वा संवृतम् ॥'

द्वेषो यत्रान्यकार्येषु तदेकाग्रं च मानसम् ।
श्वासैर्मनोरथैश्चापि चेष्टास्ताः स्मरणं यथा ॥ ९ ॥

'इन्दुं निन्दति पद्मकन्दलदलैस्तल्पं न वा मन्यते
कर्पूरं किरति प्रयाति न रतिं प्रालेयधारागृहे ।

---

१. 'कन्द'. २. 'संगमाशयः'. ३. 'यथाकस्माद्गेहम्'. ४. 'प्रचलति'. ५. 'ग्राह्ये'. ६. 'गुह्ये'. ७. 'भवेत्'. ८. 'एव'. ९. 'तथा'. १०. 'लसत्'. ११. 'कन्दलदली'; 'कन्दकदली'.

श्वासैः केवलमेव खेदिततनुर्ध्यायत्यसौ बालिका
यत्तत्कोऽपि युवा ध्रुवं स्मरसुहृच्चेतस्यमुष्याः स्थितः ॥
सौन्दर्यहसितालापैर्नास्त्यन्यस्तत्समो युवा ।
इति वाणी भवेद्यत्र तदित्थं गुणकीर्तनम् ॥ १० ॥
'तद्वक्त्रं हसितेन्दुमण्डलमिति स्फारं तदालोकितं
सा वाणी जितकामकार्मुकरवा सौन्दर्यमेतस्य तत् ।
इत्थं संततमालि वल्लभतमध्यानप्रसक्तात्मन-
श्चेतश्चुम्बितकालकूटमिव मे कस्मादिदं मुह्यति ॥'
यस्मिन्रम्यमरम्यं वा न च हर्षाय जायते ।
प्रद्वेषः प्राणितव्येऽपि स उद्वेगः स्मृतो यथा ॥ ११ ॥
'अभ्यागारं कलयसि पुरश्चक्रवाकीव चन्द्रं
बद्धोत्कम्पं शिशिरमरुता दह्यसे पद्मिनीव ।
प्राणान्धत्से कथमपि चिराद्गच्छतः शल्यतुल्यां-
स्तत्केनासौ सुतनु जनितो मान्मथस्ते विकारः ॥'
बम्भ्रमीति मनो यस्मिन्नन्यान्मुक्त्यादितस्ततः ।
वाचः प्रियाश्रिता एव स प्रलापः स्मृतो यथा ॥ १२ ॥
'इत्थं तेन निरीक्षितं न च मयाप्येवं समालोकितं
तेनोक्तं सुभगेन तत्र न मया दत्तं वचो मन्दया ।
तत्सत्यं कथयालि किं स सुभगः कुप्येत मय्युच्चकै-
रित्युक्त्वा सुदृशा कयापि वलितग्रीवं दृशौ स्फारिते ॥'
श्वासप्ररोदनोत्कम्पवसुधोल्लेखनैरपि ।
व्यापारो जायते यत्र स उन्मादः स्मृतो यथा ॥ १३ ॥
'देवीवानिमिषेक्षणा विलिखति क्षोणीं श्वसित्युच्चकैः
किंचिद्ध्यायति निश्चला च बलवद्रोमाञ्चिता कम्पते ।

---

१. 'खिद्यति तनुर्याता'. २. 'सखि'. ३. 'यद्वक्त्रम्'. ४. 'संचित'; 'चर्वित'. ५. 'यत्र'. ६. 'किंचन'. ७. 'प्राणानामिव संदेहः'. ८. 'कस्मान्मुग्धे मनसि विषम-स्तन्यते विप्रयोगः'. ९. 'समालोकितः.' १०. 'कुप्येत मय्यां गते'. ११. 'वसुधालेखनैः'. १२. 'दीपे वानिमिषेक्षणा'. १३. 'चलचलद्रोमाञ्चिता'.

रोदित्यङ्कगतां विलोक्य सुचिरं वीणामपि व्याप्टता
स्वल्पैरेव दिनैरियं वरतनुः केनापि संशिक्षिता ॥'

संतापवेदनामायो दीर्घश्वाससमाकुलः।
तनूकृततनुर्व्याधिरष्टमोऽयं स्मृतो यथा ॥ १४ ॥

'तापः शोषितचन्दनोदकरमः श्वासा विकीर्णोत्पलाः
कर्पूराभिभवप्रचण्डपटिमा गण्डस्थले पाण्डिमा।
म्लायद्बालमृणालनाललुलिता प्राप्ता तनुस्तानवं
तन्वङ्ग्याः कथितः स्मरेण गुरुणा कोऽप्येष कष्टक्रमः ॥'

अकाण्डे यत्र हुंकारो दृष्टिः स्तब्धा गता स्मृतिः।
श्वासाः समधिकाः कार्श्यं जडतेयं मता यथा ॥ १५ ॥

'दृष्टिर्निश्चलतारकाधरदलं श्वासैः कृतं धूसरं
प्राप्तं वामरचन्द्रबिम्बपदवीं वक्त्रं विनष्टा स्मृतिः।
हुंकारः परमेक एव वचनस्थाने स्थितः सांप्रतं
मन्येऽस्याः कुसुमायुधः सशिबिरः प्रत्यङ्गमावासितः ॥'

उपायैर्विविधैर्नार्या यदि न स्यात्समागमः।
कंदर्पशरभिन्नाया मरणं जायते ततः ॥ १६ ॥

पुंसोऽपि हि भवन्त्येता दशावस्था मनोभवात्।
मरणं किं त्वसौन्दर्यात्तयोः कैश्चिन्न वर्ण्यते ॥ १७ ॥

अन्ये तदपि बध्नन्ति प्रत्युज्जीवनकाङ्क्षया।
वृत्तानुवादे तच्छस्तमुत्पाद्ये प्रायशो नहि ॥ १८ ॥

एकस्मिंस्तु मृतेऽप्यन्यो यदि जीवेत्कथंचन।
का स्नेहगणना तत्र म्रियते चेन्न संगमः ॥ १९ ॥

पूर्वं नारी भवेद्रक्ता पुमान्पश्चात्तदिङ्गितैः।
ततः संभोगलीलेति स्वभावसुभगा स्थितिः ॥ २० ॥

---

१. 'वीणामति'. २. 'अष्टमो जायते'. ३. 'कुपितस्मरेण'. ४. 'स्मृता'. ५. 'तलम्'. ६. 'आवेशितः'. ७. 'अनितैः'. ८. 'मन्यते'. ९. 'वाञ्छया'. १०. 'न समन्ततः'.

अन्यथापि न दोषः स्याद्यदि प्रेम समं द्वयोः ।
रक्तापरक्ता वृत्तिश्चेच्छृङ्गाराभास एव सः ॥ २१ ॥

अयं च प्रायशस्तज्ज्ञैरित्थं हास्येषु बध्यते ।
निर्द्रव्येण मया सार्धं वेश्ये मानय यौवनम् ॥ २२ ॥

अनुरक्तो भवेद्यस्यां नायकस्तत्सखीजनम् ।
साम्ना मानेन दानेन बाढमावर्जयत्यसौ ॥ २३ ॥

तस्याग्रे तत्कथां कुर्वन्स्वाभिप्रायं प्रकाशयेत् ।
तदभावे प्रयुञ्जीत कांश्चित्प्रव्राजितादिकाः ॥ २४ ॥

तद्द्वारेण समाख्यातस्वभावो ज्ञाततन्मनाः ।
उपचारैः परैर्लेखैः साधयेत्तामतन्द्रितः ॥ २५ ॥

ततो दृष्ट्वा विविक्ते तामिन्द्रजालकलादिभिः ।
प्रयोगैर्ललितैः स्वैरं विस्मयं परमं नयेत् ॥ २६ ॥

धात्रीसखीवेश्मनि रात्रिचारे महोत्सवे तीव्रतमे भये च ।
निमन्त्रणे व्याधिमिषेण शून्ये गेहे तयोर्नूतनसंगमः स्यात् ॥ २७ ॥

यदा रागो गुरुः सा च लभ्यते नैव याचिता ।
क्षीणोपायस्तदा कन्यां नायकः साधयेद्बलात् ॥ २८ ॥

परस्त्रीगमनोपायः कविभिर्नोपदिश्यते ।
सुन्दरं किं तु काव्याङ्गमेतत्तेन निदेश्यते ॥ २९ ॥

वामता दुर्लभत्वं च स्त्रीणां या च निवारणा ।
तदेव पञ्चबाणस्य मन्ये परममायुधम् ॥ ३० ॥

बहुमानाद्भयाद्वापि नृणामन्यत्र योषिति ।
प्रच्छन्नकामितं रम्यं सतामपि भवेद्यथा ॥ ३१ ॥

---

१. 'तयोः'. २. 'अनुयुञ्जीत'. ३. 'किंचित्प्रव्राजितादिकम्'; 'कांचित्प्रव्रजितादिकाम्'. ४. 'समाख्याताः स्वभावज्ञातमन्मथः'. ५. 'दोषैः'. ६. 'तीव्रभये वने च'; 'तीव्रतमे वने च'. ७. 'मिषाच्च'. ८. 'नारीं साधयेत्तामतन्द्रितः'. ९. 'निर्दिश्यते'. १०. 'या दुर्निवारणम्'. ११. 'ता एव'. १२. 'तासामपि'.

'जीर्णं तार्णकुटीरकं निवसनं तल्पीकृतं स्थण्डिले
नीरन्ध्रं तिमिरं किरन्ति सलिलं गर्जन्त एते घनाः।
गच्छामीति वदत्यसावपि मुहुः शङ्काकुला केवलं
चेतश्चित्रमहो तथापि रमते संकेतके कामिनाम्॥'

स मानो नायिका यस्मिन्नीर्ष्यया नायकं प्रति।
धत्ते विकारमन्यस्त्रीसङ्गदोषवशाद्यथा॥ ३२॥

'किंचिद्बाष्पजलावलेपललिते नेत्रे समाकुञ्चिते
रागो विस्फुरणानुबन्धरुचिरः संदर्शितो गण्डयोः।
कम्पश्चाधरपल्लवे विरचितः कामं कुरङ्गीदृशा
नो जाने किमयं प्रिये प्रकटितः कोपोऽभिलाषोऽथवा॥'

स प्रायशो भवेत्रेधा कामिनीनां प्रियं प्रति।
अवेक्ष्य दोषमेतस्य गरीयान्मध्यमो लघुः॥ ३३॥

प्रतिनार्या गते कान्ते स्वयं दृष्टे नखाङ्किते।
तद्धामोद्दर्शने गोत्रस्खलिते च गुरुर्यथा॥ ३४॥

'बिम्बोष्ठः स्फुरति प्रयाति पटुतां गण्डस्थले शोणिमा
यातस्तिर्यगमू दृशौ च वलवद्भ्रूयुग्ममुद्भ्राम्यति।
इत्थं चण्डि तथा तवैष रुचिरः कोपक्रमो जृम्भते
जातोऽयं प्रणतीरपास्य सुतरामेतद्दिदृक्षुर्यथा॥'

दृष्टे प्रियतमे रागादन्यया सह जल्पति।
सख्याख्यातेऽथवा दोषे मानोऽयं मध्यमो यथा॥ ३५॥

'वाचो वाग्मिनि किं तवाद्य परुषाः सुभ्रु भ्रुवोर्विभ्रमो-
ऽप्युद्भ्रान्तः कुत एष लोलनयने किं लोहिते लोचने।
नास्त्यागो मयि किं मुधैव कुपितेत्युक्ते पुरः प्रेयसा
मानिन्या जलबिन्दुदन्तुरपुटा दृष्टिः सखीष्वाहिता॥'

१. 'अपि'. २. 'तथा'. ३. 'स्यात्'. ४. 'भ्रमो विभ्रमो भ्राम्यंति तव लोल एव नयने'.

सविलासं स्फुरच्चक्षु वीक्षमाणे परां प्रिये ।
किंचिदन्यमनस्केव जायते स लघुर्यथा ॥ ३६ ॥

'मामेव ताडय नितम्बिनि यद्यकस्मा-
त्कोपो भवेत्तव मुखं तु निजं किमेतत् ।
आनीयते शशधरानुकृतिं कपोल-
पालीलुठत्सलिलकज्जलनेत्रवारा ॥'

देशकालबलात्कोपः प्रायशः सर्वयोषिताम् ।
जायते सुखसाध्योऽयं कृच्छ्रसाध्यश्च कामिभिः ॥ ३७ ॥

प्रज्वलितोज्ज्वलदीपं रतिगृहमिन्दूज्ज्वलं च सौधतलम् ।
मधुरविधुरीकृतमधुकरमधुरध्वनिबोधितं च कमलवनम् ॥ ३८ ॥

इत्यादिषु प्रदेशेषु मानिनीनामसंशयम् ।
मन्युर्गुरुतरोऽप्याशु सुखसाध्यो भवेद्यथा ॥ ३९ ॥

'दृष्ट्वा चन्द्रमसं मनोभववधूकेलिक्रियाकन्दुकं
प्रोन्मीलन्नवमालतीपरिमलं चाघ्राय मानोपशम ।
दीपार्चिःकपिशां विविक्तवलभीमालोक्य लोलदृशा
मानिन्या चटुमात्रकेण रमणे मानो मनाक्खण्डितः ॥'

मधुसमयशशधरोदयकंदर्पमदाधिकेषु कालेषु ।
मानो मनस्विनीनामनिसुखसाध्यो भवेद्धन्या ॥ ४० ॥

'चन्द्रश्चन्द्रमुखीक्ष्यतां क्षणमियं संभाव्यतां मञ्जरी
चूतस्य स्मरविह्वलापि प्रियतमे कोपोऽपि कथं गतः ।
इत्युक्ते रुचिरेऽपि तत्करतलं पादाग्रसंवाहनं
धुन्वन्त्याः सुदृशो बलात्पुलकितं सद्म च दोर्वल्लरी ॥'

दूतीजनस्य पुरतो लघुरपि दोषो गुरुत्वमेति प्रायः ।
अभिनवदोषावसरे तथैव वनिताजनस्य यथा ॥ ४१ ॥

---

१. 'प्रायः सर्वोऽपि'. २. 'साध्यस्तु कामिनाम्'. ३. 'मधुरी–'. ४. 'मधुरध्वनिघोषितावचनम्'. ५.'च चित्रवलभी–'. ६. 'मात्रकेऽपि'. ७.'मदादिकेषु:'; 'मदादिकेषु'. ८. 'इत्युक्त्वा रुचितेन'. ९. 'संवाहनाधुन्वन्त्याः'.

'चरणपतनात्पत्युर्मन्यौ मनाक्शिथिलीकृते
त्यजति च किमप्युत्कम्पत्वं घनस्तनमण्डले।
तदपि विसरत्सारङ्गाक्ष्या चिरानुनयेच्छया
कथमपि पुरो दृष्ट्वा दूतीं पुनर्भ्रुकुटी कृता॥'

'चतुरवचनैर्गाढाश्लेषैर्हठात्परिचुम्बनै-
रलकवलनैर्वारं वारं गतोऽप्यतिमन्दताम्।
अपरवनितामङ्गाल्लग्नं विलोक्य विलेपनं
कुवलयदृशः कोपः कान्ते पुनर्नवतां गतः॥'

साम दानं च भेदः स्यादुपेक्षा प्रणतिस्तथा।
तथा प्रसङ्गविध्वंसो दण्डः शृङ्गारहानये॥ ४२॥
तस्याः प्रसादने सोद्रुपायाः षट् प्रकीर्तिताः।
सुन्दरास्ते निदर्श्यन्ते महोदाहृतिभिर्यथा॥ ४३॥
अविनीतोऽपि पाल्योऽहं त्वया सुभ्रु क्षमाभृता।
इति वाणी भवेद्यत्र तत्सामेति निगद्यते॥ ४४॥

'सत्यं भामिनि दुर्जनोऽस्मि दयिते पाल्यस्तथापि त्वया
यो दोषः स लघुर्मृगाक्षि नियतं दीनस्य मे क्षम्यताम्।
इत्थं जल्पति वल्लभे मृगदृशा चक्षुर्जलं संवृतं
रक्तत्वं विरलीकृतं न वदने दत्तं न किंचिद्वचः॥'

अलंकारादिकं दद्यान्नायको यत्र तुष्टये।
उद्दिश्य कारणं किंचिद्दानं लुब्धासु तद्यथा॥ ४५॥

'प्रणयिना निजहारलता स्वयं किल नवेति निवेश्य कुचस्थले।
पुलकभाजि पुरा कुपिताप्यसौ कृतकचग्रहणं परिचुम्बिता॥'

यस्मिन्परिजनं तस्याः समावर्ज्य प्रसादतः।
तेनैव लभते कान्तां कान्ताभेदः स उच्यते॥ ४६॥

---

१. 'किमप्युक्तं पत्रम्'. २. 'चतुरचतुरैः'. ३. 'चुम्बितैर्मधुरवचनैः'. ४. 'सततम्'. ५. 'मलम्'. ६. 'विमली–'. ७. 'कुर्यात्'. ८. 'कुच–'. ९. 'प्रसादितम्'.

'धुन्वाना करपल्लवं विदधती दृष्टिं रुषा रागिणीं
तन्वाना वचनानि निष्ठुरतरं मा गाः शठेत्थं मुहुः ।
दूरादायतिभीतिमत्यभिमते स्वैरं स्वमंज्ञाकृता
पूर्वावर्जितया चकोरनयना सख्यैव संबोधिता ॥'

प्रसादनविधिं त्यक्त्वा वाक्यैरन्यार्थसूचकैः ।
यस्मिन्प्रसाद्यते योषिदुपेक्षा सा मता यथा ॥ ४७ ॥

'एतत्किं ननु कर्णभूषणमयं हारः स काञ्ची नवा
बद्धा काचिदियं त्वयाद्य तिलकः श्लाघ्यः प्रिये कल्पितः ।
प्रत्यङ्गं स्पृशतीति तत्क्षणभवद्रोमाञ्चमालाञ्चिता
तन्वी मानमुपेक्षयैव शनकैर्धूर्तेन संमोचिता ॥'

केवलं दैन्यमालम्ब्य पादपातान्नतिर्मता ।
अभीष्टा सा भृशं स्त्रीणां लालना च भवेद्यथा ॥ ४८ ॥

'कुङ्कुमार्द्रकुचकुम्भलिङ्गितं वीक्ष्य पृष्ठमपराङ्गनाश्रयम् ।
संसदूनरससमाशु सा मुदं प्राप पादपतितस्य कामिनः ॥'

अकस्माज्जायते यत्र भयहर्षादिभावना ।
सोऽयं प्रसङ्गविध्वंसः कोपभ्रंशात्मको यथा ॥ ४९ ॥

'कथं ममोरसि कृतपक्षनिःस्वनः शिलीमुखोऽपतदिति जल्पति प्रिये।
निवृत्य किं किमिदमिति ब्रुवाणया ससाध्वसं कुपितमलोकि कान्तया ॥'

यथोत्तरं बलीयांस इत्युपायाः प्रसादने ।
आद्यास्त्रयो घनं कार्या विदग्धैः पश्चिमाः क्वचित् ॥ ५० ॥

नातिखेदयितव्योऽयं प्रियः प्रमदया क्वचित् ।
मानश्च विरलः कार्यः प्रणामोन्मर्वसिद्धये ॥ ५१ ॥

इत्युपायान्प्रयुञ्जीत नायिकापि प्रियं प्रति ।
कुलजा नेष्यते किं तु तत्रान्यत्कारणं भवेत् ॥ ५२ ॥

---

१. 'प्रसाधन–'. २, 'प्रसाध्यते'. ३. 'इयं हारं च'. ४. 'ललिताः श्लाघ्याः'. ५. 'बिम्बितम्'. ६. 'सङ्गभूतरसम्'. ७. 'वि[illegible]:'. ८. 'अगलत्'. ९. 'असोचि'. १०. 'प्रसाधने'. ११. 'प्रमदमानसः'. १२. 'कुलं नोपेक्षते'.

स्नेहं विना भयं न स्यान्मन्मथो नेर्ष्यया विना।
तस्मान्मानप्रकारोऽयं द्वयोः प्रीतिप्रवर्धनः॥ ५३॥
प्रियसुभगदयितवल्लभनाथस्वामीशकान्तचन्द्रमुखाः।
दयित मनोरम रमणीजीवित इत्यादि नाम स्यात्॥ ५४॥
प्रीतौ भर्तरि मुद्दशामप्रीतौ पुनरमून शठधृष्टौ।
निर्लज्जदुराचारौ निष्ठुरदुःशीलवानादि॥ ५५॥
गर्वाद्व्यमनन्यागाद्विप्रियकरणाच्च निष्ठुरालापात्।
लोभादतिप्रवासात्स्त्रीणां द्वेष्यः प्रियो भवति॥ ५६॥
परदेशं व्रजेर्यास्मिन्कुर्याश्चन्कारणात्प्रियः।
स प्रवास इति ख्यातः कष्टावस्था द्वयोरपि॥ ५७॥

'दृष्टं केसरधूलिधूसरमिदं व्योम क्रमाद्वीक्षिताः
कच्छान्ताश्च शिलीन्ध्रकन्दलभृतः सोढाः कदम्बानिलाः।
सख्यः संवृणुताश्रु मुञ्चत भयं कस्मान्मुधैवाकुला
एतानप्यधुनापि वज्रघटिता नूनं सहिष्ये घनान्॥'
'कामं कर्णकटुः कृतोऽतिमधुरः केकारवः केकिनां
मेघाश्चामृतधारिणोऽपि विहिताः प्रायो विषस्यन्दिनः।
उन्मीलन्नवकन्दलावलिरसौ सह्याप्यसह्यायते
तत्किं यद्विपरीतमत्र न कृतं तस्या वियोगेन मे॥'

कार्श्यजागरमालिन्यचिन्ताद्यं यत्र जायते।
अवस्था विविधाः स्त्रीणां मृत्युश्चेदवधेः परः॥ ५८॥

'अद्यैव यत्प्रतिपदुद्गतचन्द्ररेखा-
सख्यं त्वया तनुरियं गमिता वराक्याः।
कान्ते गते कुसुमसायक तत्प्रभाते
बाणावलीं कथय कुत्र विमोक्ष्यसि त्वम्॥'

---

१. 'प्रीतिप्रकाशकः'. २. 'रुचिर'. ३. 'विष्ठुरारवणात्'. ४. 'गतः कान्तः ! वितः'. ५. 'अधुनाति–'. ६. 'कामिनाम्'. ७. 'सह्याप्यसह्यायते'. ८. 'त्रिविधाः

'निःश्वासैः सह सांप्रतं सखि गता वृद्धिं ध्रुवं रात्रयः
सार्धं लोचनवारिणा विगलितं यत्प्राक्तनं मे मुखम् ।
प्राणाशा तनुतामुपैति च मुहुर्नूनं तनुस्पर्धया
कंदर्पः परमेक एव विजयी यातेऽपि कान्ते स्थितः ॥'

'नीरागोऽधरपल्लवोऽतिमलिना वेणी दृशौ नाञ्जिते
म्लायद्बालमृणालिकाधवलतामालम्बतेऽङ्गच्छविः ।
इत्थं सुभ्रु वियोगदुःखापि विरहव्यापाद्विमर्दादियं
मन्येव स्थिरशोभया दृढतरं प्रत्यङ्गमालिङ्गिता ॥'

'किं तत्र नास्ति रजनी किं वा चन्द्रो न सप्तरुचिः ।
येन सखि वल्लभामपि न स्मरति स मां विदग्धरुचिः ॥'

'भ्रमर शिशिरमोदं कौन्दं समीर समीरय
प्रकटय शशिन्नाशाः कामं मनोभव जृम्भताम् ।
अवधिदिवसः पूर्णः सख्यो विमुञ्चत तत्कथां
हृदयमधुना किंचित्कर्तुं ममान्यदिहेच्छति ॥'

इत्यादिर्विरहावस्थाः पुंसोऽपि हि भवन्ति ताः ।
कंदर्पशरपाताद्या सा भवन्त्यङ्गनामपि ॥ ५९ ॥
यत्रैकस्मिन्विपन्नेऽन्यो मृतकल्पोऽपि तद्गतम् ।
नायकः प्रलपेत्प्रेम्णा करुणोऽसौ स्मृतो यथा ॥ ६० ॥

'दग्धा स्निग्धवधूविलासकदली वाणी समुन्मूलिता
पीता पञ्चमकाकली कवलिता शीतद्युतेः कौमुदी ।
क्लिष्टः स्पष्टमनेकरत्ननिचयो नाहं गतिः केवलं
कंदर्प दहता हरेण भुवनं निःसारमेतत्कृतम् ॥'

'वक्त्रं चन्द्रमसा दृशौ मृगगणैः केशाः कलापिव्रजै-
र्मातङ्गैः स्तनमण्डलं भुजयुगोल्लासो मृणालैरपि ।

---

१. 'यत्प्राक्तनः कङ्कणः'. २. 'व्यालम्बा तु मृणालिकाधवलता'; 'व्यालम्बालक-मालिकाधवलता'. ३. 'सुष्टु'. ४. 'न किं च सोऽप्यरुचिः'. ५. 'घातात्'. ६. 'मृतेऽप्यन्यो'. ७. 'मीलिता'. ८. 'भुजलतोल्लासश्चलत्पल्लवैः'; 'भुजलतोल्लासो लतामण्डपैः'; 'भुजलतोल्लासैर्लतामण्डपैः'.

सौगन्ध्यं मलयानिलेन बलिना तन्वी विभज्येति सा
सर्वैर्निष्करुणैर्हृता ध्रुवमहो दैवेन किंचिन्न मे ॥'
'इयतीं सुभगावस्थां गतोऽस्मि यस्याः कृते स्मरातङ्कात् ।
मूर्छां हरामि सा तव गतपुण्या नयनसलिलेन ॥'
'पाशो विपाशित उपाहित एष मान्द्रः
कर्पूररेणुरुपगूढमृगो नताङ्गि ।
पापेन येन गमितासि दशाममुष्मि-
न्मूर्छाविरामललितं मयि धेहि चक्षुः ॥'
ग्लानो मुक्ताश्रुरुद्विग्नः स्रस्ताङ्गो मुक्तचेतनः ।
सचिन्तो दैन्यभाग्ग्लानिरेवंप्रायो जनो भवेत् ॥ ६१ ॥
केषांचित्करुणभ्रान्तिः कारुण्यादत्र जायते ।
एतस्य मिथुनावस्थां विस्मृत्य रतिमूलजाम् ॥ ६२ ॥
स्त्रीपुंसयोर्भवेदेष सापेक्षः संगमे पुनः ।
शृङ्गारवचनप्रायः करुणः स्यान्न चान्यथा ॥ ६३ ॥
तस्माच्छृङ्गार एवायं करुणेनानुमोदितः ।
सौन्दर्यं सुतरां धत्ते निबद्धो विरलं बुधैः ॥ ६४ ॥
कारुदासी नटी धात्री प्रातिवेश्या च शिल्पिनी ।
बाला प्रव्राजिता चेति स्त्रीणां ज्ञेयः सखीजनः ॥ ६५ ॥
कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ।
माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ॥ ६६ ॥
विनोदो मण्डनं शिक्षोपालम्भोऽथ प्रसादनम् ।
संगमो विरहाश्वासः सखीकर्मेति तद्यथा ॥ ६७ ॥
'मया कोऽयं मुग्धे कथय लिखितः सत्वरसखी-
वचः श्रुत्वेत्युच्चैर्विनिहितदृशा चित्रफलके ।

१. 'मृतम्'. २. 'उपासितः'. ३. 'इह'. ४. 'विस्मारयति गूढताम्'. ५. 'स्त्रीपुंसोश्च भवत्येव'. ६. 'साक्षेपः'. ७. 'शृङ्गारवचने'.

न वक्तुं तन्वङ्ग्या शकितमथ चोद्दामविदल-
त्कदम्बाकारेण प्रिय इति समाख्यायि वपुषा ॥'

'प्रत्यङ्गं प्रतिकर्म नर्मपरया कृत्वातिरूढस्मरा-
दौत्सुक्यं प्रविलोक्य मोहनविधौ चातुर्यमालोक्य च ।
सख्या यावकमण्डनं विरचितं पादे कुरङ्गीदृशा
सस्मेरं विशदच्छदे च शयने दृष्टिः समारोपिता ॥'

'नीरन्ध्रं परिरभ्यते प्रियतमो भूयस्तरां चुम्ब्यते
तद्गाढं क्रियते यदस्य रुचितं चाटूच्चकैस्तन्यते ।
सख्या मुग्धवधूरियं रतिविधौ यत्नेन संशिक्षिता
निर्भ्रान्तं गुरुणा पुनः शतगुणं पुष्पेषुणा कारिता ॥'

'सुभग भगवता हृद्येतस्या ज्वलत्स्मरपावके-
ऽप्यभिनिविशता प्रेमाधिक्यं चिरात्प्रकटीकृतम् ।
तव तु हृदये शीतेऽप्येवं सदैव सुखासये
मम सहचरी सा निःस्नेहा मनागपि न स्थिता ॥'

'कोपं विमुञ्च कुरु नाथ वचो मदीय-
माश्वासय स्मरकृशानुकृशां कृशाङ्गीम् ।
एकाकिनी कठिनतारकराजकान्त्या
पञ्चत्वमाशु ननु यास्यति सा वराकी ॥'

'अमुं दर्येऽशुकमहमत्र पादपे युवामलं निभृतमिहैव तिष्ठताम् ।
रहःस्थयोरिदमभिधाय कामिनोः स्वयं ययौ निपुणसखी लतान्तरम् ॥'

'स्फुरति यदिदमुच्चैर्लोचनं तन्वि वामं
स्तनतटमपि धत्ते चारुरोमाञ्चमालाम् ।
कलयति च यदन्तःकम्पतामूरुकाण्डं
ननु वदति तदद्य प्रेयसा संगमं ते ॥'

---

१. 'चातुर्यमस्याः पुनः'. २. 'कुरङ्गीदृशः'. ३. 'रुचिरं चाटुत्वमातन्यते'. ४. 'तारकनाथ-'. ५. 'रहस्तयोः'. ६. 'पुरः'. ७. 'अभिधत्ते'.

इत्यादि विविधं सख्यो व्यापारं कुर्वते सदा ।
योषितां मन्त्रसर्वस्वनिधानकलशोपमाः ॥ ६८ ॥
इत्थं विरचनीयोऽयं शृङ्गारः कविभिः सदा ।
अनेन रहितं काव्यं प्रायो नीरसमुच्यते[3] ॥ ६९ ॥
इत्थं विचार्य प्रचुरप्रयोगान्योऽमुं निबध्नाति रसं रसज्ञः ।
तत्काव्यमारोप्य पदं विदग्धवक्त्रेषु विश्वं परिबम्भ्रमीति ॥७०॥

इति श्रीरुद्रभट्टविरचिते शृङ्गारतिलकाभिधाने काव्यरसालंकारे
विप्रलम्भो नाम द्वितीयः परिच्छेदः ।

तृतीयः परिच्छेदः ।

विकृताङ्गवचःकृत्यवेषेभ्यो जायते रसः ।
हास्योऽयं हासमूलत्वात्पात्रत्रयगतो यथा ॥ १ ॥
किंचिद्विकासितगण्डैः किंचिद्विस्फारितेक्षणैः ।
किंचिल्लक्ष्यद्विजैः सोऽयमुत्तमानां भवेद्यथा ॥ २ ॥
'पाणौ कङ्कणमुत्फणः फणिपतिर्नेत्रं ज्वलत्पावकं
कण्ठः कुण्ठितकालकूटकुटिलो वस्त्रं गजेन्द्राजिनम् ।
गौरीलोचनलोभनाय सुभगो वेषो वरस्येति मे
गण्डोल्लासविभावितः पशुपतेर्हासोद्गमः पातु वः ॥'
मध्यमानां भवत्येष विवृताननपङ्कजः ।
नीचानां निपतद्बाष्पः श्रूयमाणध्वनिर्यथा ॥ ३ ॥
'मुग्धे त्वं सुभगे न वेत्सि मदनव्यापारमद्यापि तं
नूनं ते जलजैपिणायमधिना दष्टो न भर्त्राधरः ।
सख्यैवं हसितं वधूं प्रति तथा सानन्दमाविर्भव-
द्वक्त्रान्तर्गतसीधुताम्ररसिकैर्भृङ्गैर्यथा धावितम् ॥'

१. 'योषितामत्र सर्वस्व निधानकलशोपमम्'. २. 'कविना'. ३. केषुचित्पुस्तकेष्वस्माच्छ्लोकादग्रे 'तत्र नाथानुरागोऽथ सौन्दर्यं कथमुच्यते । येनकापि प्रिया नीता पचत्वं पुण्यकारिणा ॥' अयं श्लोको वर्तते. ४. 'हासः'. ५. 'ईक्षणः'. ६. 'द्विजः'. ७. 'पाण्योः'; 'बाहौ'. ८. 'घटितः'. ९. 'ते जलजेक्षणेयम्'; 'तेऽब्जदलैर्पिणायम्'. १०. 'सख्येत्थम्'. ११. 'वक्रान्तर्धन-'; 'वक्रान्तरेव-'.

'त्यक्त्वा गुञ्जफलानि मौक्तिकमयी भूषा स्तनेष्वाहिता
स्त्रीणां कष्टमिदं कृतं मरामिजं कर्णे न बर्हिच्छदम् ।
इत्थं नाथ तवारिधाम्नि शबरैरालोक्य चित्रस्थितिं
बाष्पार्द्रीकृतलोचनैः स्फुटरवं दारैः समं हस्यते ॥'

अस्मिन्सखीकराघातनेत्रोल्लासाङ्गवर्तनम् ।
नासाकपोलविस्पन्दो मुखरागश्च जायते ॥ ४ ॥
शोकात्मा करुणो ज्ञेयः प्रियभृत्यधनक्षयात् ।
तत्रेत्थं नायको दैवहतः स्याद्दुःखभाजनम् ॥ ५ ॥

'भर्ता संगर एव मृत्युवसतिं प्राप्तः समं बन्धुभि-
र्यूनां काममियं दुनोति च मनो वैधव्यभावाद्वपुः ।
बालो दुस्त्यज एक एव च शिशुः कष्टं कृतं वेधसा
जीवामीति महीपते प्रलपति त्वद्वैरिसीमन्तिनी ॥'

भूपातो दैवनिन्दा च रोदनं दीर्घनिःस्वन ।
शरीरताडनं मोहो वैवर्ण्यं चात्र जायते ॥ ६ ॥
क्रोधात्मको भवेद्रौद्रः प्रतिशत्रूनमर्पणः ।
रक्षःप्रायो भवेदत्र नायकोऽत्युग्रविग्रहः ॥ ७ ॥

'यैः प्राणापहृतिः कृता मम पितुः क्षुद्रैर्युधि क्षत्रियै
रामोऽहं रमणीर्विहाय बलवन्निःशेषमेषां हठात् ।
भास्वत्प्रौढकुठारकोटिघटनाकाण्डत्रुटत्कंधरा-
स्रोतोऽन्तःस्रुतविस्रशोणितभरैः कुर्यां क्रुधां निर्वृतिम् ॥'

मुखरागायुधोत्क्षेपस्वेदकम्पाधरग्रहाः ।
शक्तिशंसा कराघातो भ्रुकुटी चात्र जायते ॥ ८ ॥
उत्साहात्मा भवेद्वीरो दयादानादिपूर्वकः ।
त्रिविधो नायकस्तत्र जायते सत्त्वसंयुतः ॥ ९ ॥

---

१. 'बर्हिच्छदम्'. २. 'लोचनम्'. ३. 'सखि'. ४. 'निःस्पन्दः'. ५. 'प्रौढानाम-भिधम्'. ६. 'लाभात्'. ७. 'भाषणम्'. ८. 'अमर्षणः'. ९. 'क्रुद्धप्रायः'. १०. 'गुरोः'. ११. 'क्रुधः'.

गाम्भीर्यौदार्यसौन्दर्यशौर्यधैर्यादिभूषितः।
आवर्जितजनो जन्यनिर्व्यूढप्रौढविक्रमः॥ १० ॥

'अयि विहंग वराक कपोतकं विसृज धेहि धृतिं मम मेदसा।
शिबिरहं भवता विदितो न किं सकलसत्त्वसमुद्धरणक्षमः॥'

'सुखितोऽस्मि हरे नूनं भुवनत्रयमात्रलब्धितोषेण।
बलिरर्थितदोऽस्मि यतो न याचितः किंचिदप्यधिकम्॥'

'यैत्रैरावणदन्तनीव्रमुसलैरेरण्डकाण्डायितं
वज्रेणापि विकीर्णवह्निततिना माणालनालायितम्।
मद्वक्षस्यवलम्ब्य किंचिदधुना तद्विस्मृतं वज्रिणा
युद्धं यद्यवलम्बनं स तु पुनः सज्जोऽस्म्यहं रावणः॥'

धृतिगर्वौद्धत्यमतिस्मृतिरोमाञ्चा भवन्ति चामुष्मिन्।
विविधा वाक्यक्षेपाः सोत्साहामर्षवेगाश्च॥ ११ ॥

भयानको भयस्थायिभावोऽस्मा जायते रसः।
शब्दादेर्विकृताद्वाढं बालस्त्रीनीचनायकः॥ १२ ॥

'श्रुत्वा तूर्यनिनादं द्वारि भयचकितलुलितबाहुलतः।
धन्यस्य लगति कण्ठे मुग्धशिशुर्धूलिधूसरितः॥'

'प्रणयकलहसञ्जान्मन्युभाजा निरस्तः
प्रकटितचटुकोटिः पादपद्मानतोऽपि।
नवजलधरगर्जैर्भीतयासौ कयाचि-
त्त्रुटिततरलहारं सस्वजे प्राणनाथः॥'

'कम्पोपरुद्धसर्वाङ्गैर्गलत्स्वेदोदबिन्दुभिः।
त्वया रुद्धैर्महीपाल वैरिभिर्वनितायितम्॥'

वैवर्ण्यमश्रु संत्रासो हस्तपादादिकम्पनम्।
स्वेदास्यशोषदिक्प्रेक्षासंभ्रमाश्च प्रकीर्तिताः॥ १३ ॥

---

१. 'गाढम्'. २. 'बलिरर्थितोऽस्मि नियतम्'. ३. 'यत्रैरावतनोव्रदन्त'. ४. 'भी रसुक्षय–'. ५. 'गाढम्'. ६. 'चलित–'. ७. सर्वाङ्गगलत्–'. ८. 'त्वया लब्धैः'; 'त्व मारब्धैः'

जुगुप्साप्रकृतिर्ज्ञेयो बीभत्सोऽहृद्यदर्शनात् ।
श्रवणात्कीर्तनाद्वापि पूत्यादिविषयाद्यथा ॥ १४ ॥

'लुठत्क्रिमिकलेवरं स्रवदसृग्वसावासितं
विशीर्णशवसंततिप्रसरदुग्रगन्धान्वितम् ।
भ्रमत्प्रचुरपत्त्रिकं त्रिकविवर्तिनृत्यक्रिया-
प्रवीणगुणकोणपं पारिचभौ परेताजिरम् ॥'

नासाप्रच्छादनं वक्त्रकूणनं गात्रसंवृतिः ।
निष्ठीवनादि चात्र स्यादुद्वेगादुत्तमेष्वपि ॥ १५ ॥

विस्मयात्माद्भुतो ज्ञेयो रसो रसविचक्षणैः ।
मायेन्द्रजालदिव्यस्त्रीविपिनाद्युद्भवो यथा ॥ १६ ॥

'सत्यं हृता त्वया हंस वनितानामियं गतिः ।
भ्रमन्त्येतास्तथाप्येतदिन्द्रजालं तदद्भुतम् ॥'

गद्गदः साधुवादश्च स्वेदः पुलककंपथू ।
दृष्टेर्निश्चलतास्त्वं विकासश्चात्र जायते ॥ १७ ॥

सम्यग्ज्ञानोद्भवः शान्तः समत्वात्सर्वजन्तुषु ।
गतेच्छो नायकस्तत्र तमोरागपरिक्षयात् ॥ १८ ॥

'धनमहरहर्दत्तं स्वीयं यथार्थितमर्थिने
कृतमरिकुलं नारीशेषं स्वखड्गविजृम्भितैः ।
प्रणयिनि जने रागोद्रिक्ते रतिर्विहिता चिरं
किमपरमतः कर्तव्यं नस्तनावपि नादरः ॥'

निरालम्बं मनो यत्र बाढमात्मनि निर्वृति ।
सुखे नेच्छा तथा दुःखेऽप्युद्वेगो नात्र जायते ॥ १९ ॥

अष्टावमी रसाः पूर्वं ये प्रोक्तास्तत्र निश्चितम् ।
प्रत्यनीकौ रसौ द्वौ द्वौ तत्संपर्कं विवर्जयेत् ॥ २० ॥

---

१. 'गन्ध्यार्दितम्'. २. 'नृत्यक्रियाप्रवीणकुणपं परम्'. ३. 'गतेर्ष्यः'. ४. 'यथागतम्'. ५. 'स्वबाहु–'. ६. 'यत्र'. ७. 'प्रोक्तास्तत्र विनिश्चितम्'; 'यथोक्तास्तत्र निश्चितम्'.

शृङ्गारबीभत्सरसौ तथा वीरभयानकौ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः॥ २१॥
हास्यो भवति शृङ्गारात्करुणो रौद्रकर्मतः।
अद्भुतश्च तथा वीराद्बीभत्साच्च भयानकः॥ २२॥
यौ जन्यजनकावेतौ रसावुक्तौ मनीषिभिः।
युक्त्या कृतोऽपि संभेदस्तयोर्वादं न दुष्यति॥ २३॥
केचिद्रसविभागेषु भावाः पूर्वं प्रदर्शिताः।
स्वातन्त्र्येणेह कीर्त्यन्ते रम्यास्ते कृतिनां मताः॥ २४॥
रत्यादय इमे भावा रसाभिप्रायसूचकाः।
पञ्चाशत्स्थायिसंचारिसात्त्विकास्तान्निबोधत॥ २५॥
शृङ्गारादिरसेष्वेव भावा रत्यादयः स्मृताः।
प्रत्येकं स्थायिनोऽन्ये च त्रयस्त्रिंशच्चराः स्मृताः॥ २६॥
प्रायोऽनवस्थिते चित्ते भावाः संकीर्णसंभवाः।
बाहुल्येन निगद्यन्ते तथाप्येते यथा स्थिताः॥ २७॥
शङ्कासूया भयं ग्लानिर्व्याधिश्चिन्ता स्मृतिर्धृतिः।
औत्सुक्यं विस्मयो हर्षो व्रीडोन्मादौ मदस्तथा॥ २८॥
विषादो जडता निद्रावहित्थं चापलं स्मृतिः।
इति भावाः प्रयोक्तव्याः शृङ्गारे व्यभिचारिणः॥ २९॥
श्रमश्चपलता निद्रा स्वप्नो ग्लानिस्तथैव च।
शङ्कासूयावहित्थं च हास्ये भावा भवन्त्यमी॥ ३०॥
दैन्यं चिन्ता तथा ग्लानिर्निर्वेदो जडतास्मृतिः।
व्याधिश्च करुणे ज्ञेया भावा भावविशारदैः॥ ३१॥
हर्षोऽसूया तथा गर्व उत्साहो मद एव च।
चापल्यमुग्रता वेगो रौद्रे भावाः प्रकीर्तिताः॥ ३२॥

१. 'कर्मतः'. २. 'द्वौ'. ३. 'ये च'. ४. 'यथा'. ५. 'मतिः'. ६. 'श्रमः'. ७. 'त्रासो हर्षो ग्लानिः'. ८. 'जडतामृतिः'; 'जडता मृतिः'. ९. 'वाच्याः'.

अमर्षः प्रति[1]बोधश्च वितर्कोऽथ मतिर्धृतिः ।
क्रोधोऽसूयाश्च[2] संमोह आवेगो रोम[3]हर्षणम् ॥ ३३ ॥
गर्वो मदस्तथोग्रत्वं भावा वीरे भवन्त्यमी ।
संत्रासो मरणं चैव वचनीयं भयानके ॥ ३४ ॥
अपस्मारो विषादश्च भयं वेगो मतिर्मदः ।
उन्मादश्चेति विज्ञेया भावा बीभत्ससंभवाः ॥ ३५ ॥
आवेगो जडता मोहो विस्मयो हर्षणं मतिः ।
इति भावांश्चिवर्धन्ति रसेऽस्मिन्नद्भुते बुधाः ॥ ३६ ॥
एवं संचारिणो भावा ज्ञेयाः प्रतिरसं स्थिताः ।
सात्त्विकास्तु भवन्त्येते सर्वे सर्वरसाश्रयाः ॥ ३७ ॥
या नृत्यगीतप्रमदोपभोगवेषाङ्गसंकीर्तनचारुबन्धा ।
माधुर्ययुक्ताल्पसमासरम्या वाणी स्मृतासाविह कैशिकीति॥३८॥
शृङ्गारहास्यकरुणरसानां परिवृद्धये ।
एषा वृत्तिः प्रयोक्तव्या प्रयत्नेन बुधैर्यथा ॥ ३९ ॥

'सौन्दर्यं शशलाञ्छनस्य कविभिर्मिथ्यैव तद्वर्ण्यते
सौभाग्यं क्व नु पङ्कजस्य रजनीसंभोगसंप्राप्तिपः ।
इत्यालोच्य चिराय चारु रुचिमत्रस्यत्कुरङ्गीदृशो
वीक्षेते नवयौवनोन्नतमुखौ मन्ये स्तनावाननम् ॥'

'हस्तेषुः कुसुमायुधस्य ललितं रागश्रियो लोचनं
सौभाग्यैकगृहं विलासनिकषो वैदग्ध्यसिद्धिध्वजः ।
साक्षीदं मदबान्धवस्य निभृतं कस्यापि लीलानिधेः
कक्षान्तर्नखमण्डनं सखि नवं प्रच्छाद्यतां वाससा ॥'

---

१. 'प्रतिवेगश्च'. २. 'अथ सहर्षः'. ३. 'शोकमर्षणम्'; 'शोकहर्षणम्'. ४. 'इति'. ५. 'सर्वरसस्थिताः'; 'सर्वरसान्विताः'. ६. अस्माच्छ्लोकादग्रे 'कैशिक्यारभटी चैव' इत्यादि प्रथमपरिच्छेदागतः श्लोकः केषुचित्पुस्तकेषु दृश्यते. ७. 'भोगैर्देशाश्च'. ८. 'कारुण्यरसातिशयसिद्धये'. ९. 'प्रयत्नेन प्रयोज्या विबुधैर्यथा'. १०. 'मृग–'. ११. 'शोभैव'; 'शोभैदृक्'. १२. 'मिश्र–'. १३. 'भोगस्यैव प्रदम्'. १४. 'मधु–'. १५. 'लीलावधिः'. १६. 'संगच्छताम्'.

'समुल्लसत्काञ्चनकुण्डलोज्ज्वलप्रभापि तापाय बभूव ये[1]ऽलम्।
विलासिनीरम्यमुखाम्बुजन्मसु प्रजज्वलुस्तेष्वकृशाः कृशानवः॥'

या चित्रयुद्धभ्रमशस्त्रपातमायेन्द्रजालप्लुतिलङ्घिताढ्या।
ओजस्विगुर्वक्षरबन्धगाढा[2] ज्ञेया बुधैः सारभटीति वृत्तिः[3]॥४०॥

रौद्रे भयानके चैव बीभत्से च विचक्षणैः।
काव्यशोभाकरी वृत्तिरार्यासत्थं प्रयुज्यते॥ ४१॥

'शस्त्रोद्दारितकुम्भिकुम्भविगलद्रक्ताक्तमुक्ताफलं
स्फारस्फूर्जितकान्तिकल्पितबृहच्चञ्चच्चतुष्कायितम्[4]।
क्रोधोद्भावितधीरधोरणलसत्खड्गाग्रमुग्राग्रहं[5]
युद्धं सिद्धवधूगृहीतसुभटं जातं तदा दुर्धरम्॥'

'नायं गर्जितरवो गभीरपरुषं तूर्यं तदीयं त्विदं
नैते भीमभुजंगभोगरुचयो मेघा इमे तद्गजाः।
इत्थं नाथ नवाम्बुवाहसमये त्वत्सैन्यशङ्काकुला
म्लायद्वक्त्ररुचो विरोधिवनितास्त्रस्यन्ति नश्यन्ति च॥'

'पिबन्नसृक्स्वदन्मांसमा[6]कर्षन्नन्त्रमालिकाम्।
कबन्धसंकुले क्रोष्टा भ्रमत्येष[7] महारणे॥'

हर्षप्रधानाधिकसत्त्ववृत्त्या[8]त्यागोत्तरोदारवचोमनोज्ञा।
आश्चर्यसंपत्सुभगा च या स्यात्सा सात्वती नाम मतात्र वृत्तिः॥४२॥

नातिगूढार्थसंपत्तिः[9] श्रव्यशब्दमनोरमा[10]।
वीरे रौद्रेऽद्भुते शान्ते वृत्तिरेषा मता यथा॥ ४३॥

'लक्ष्म्यास्त्वं जनको निधिश्च पयसां निःशेषरत्नाकरो
मर्यादानिरतस्त्वमेव जलधे ब्रूतेऽत्र कोऽन्यादृशम्।
किं त्वेकस्य गृहं गतस्य वडवावह्नेः सदा तृष्णया
[11]क्लान्तस्योदरपूरणेऽपि न सहो यत्तन्मनाग्दूष्यमम्॥'

---

१. 'केवलम्'. २. 'वर्णाद्भुतदुर्विगाढा'; 'गुर्वक्षरदुर्विगाढा'. ३. 'रीतिः'. ४. 'चतुष्कार्चितम्'. ५. 'मुक्ताग्रहम्'. ६. 'अदन्मांसम्'. ७. 'नदति'. ८. 'वृत्त्या'. ९. 'सज्जाता'. १०. 'श्रव्यशब्दा'. ११. 'क्रान्तस्य'.

'[1]स्फारितोत्कटकठोरतारकाकीर्णवह्निकणसंततिः क्रुधा ।
दुर्निमित्ततडिदाकृतिर्बभौ दृष्टिरिष्टसमरांशुमालिनः ॥'
'अत्यद्भुतं नराधिप तव कीर्तिर्धवलयन्त्यपि जगन्ति ।
रक्तान्करोति सुहृदो मलिनयति च वैरिवदनानि ॥'
'निवृत्तविषयासङ्गम[2]धुना मुनिगय मे ।
आत्मन्येव समाधानं मनः केवलमिच्छति ॥'

**प्रधानपुरुषप्राया सद्वक्रोक्तिनिरन्तरा ।**
**भारतीयं भवेद्वृत्तिर्वीरहास्याद्भुताश्रया ॥ ४४ ॥**

'जन्मदेहवधबन्[3]धनादिकं तुल्यमेतदितरैः समं सताम् ।
यत्तथापि वि[4]पुलाचलाः श्रियः मोहमेकपरतात्र कारणम् ॥'
'[5]यशोदाकृतरक्षस्य शासितुर्भुवनद्रुहाम् ।
बाल्ये निभृतगम्भीरो हरिहासः पुनातु वः ॥'
'निर्भयोऽप्ययं भूपालस्तद्ददाति द्विषां युधि ।
असत्त्वेषु यशः शुभ्रमादत्ते चेदमद्भुतम् ॥'

**इत्यादि रम्याः प्रविलोक्य वृत्तीर्दृष्ट्वा निबन्धांश्च महाकवीनाम् ।**
**आलोक्य [6]वैचित्र्यमिदं विदध्यात्काव्यं कविः सज्जनचित्तचौरम् ४५**

**विरसं प्रत्यनीकं च दुःसंधानरसं तथा ।**
**नीरसं पात्रदुष्टं च काव्यं प्राज्ञैर्न शस्यते ॥ ४६ ॥**
**विहाय जननीमृत्युशोकं मुग्धे मया सह ।**
**[7]यौवनं मानय स्पष्टमित्यादि विरसं मतम् ॥ ४७ ॥**
**[8]प्रबन्धे नीयते यत्र रस एको निरन्तरम् ।**
**महतीं वृद्धिमिच्छन्ति नीरसं तच्च केचन ॥ ४८ ॥**
**नखक्षतो[9]च्छलत्पूतिप्लुतगण्डस्थलं रतौ ।**
**पि[10]बामि वदनं तस्याः [11]प्रत्यनीकं तदुच्यते ॥ ४९ ॥**

---

१. 'स्पष्टितोत्कट–'. २. 'मधुरम्'. ३. 'वेदनादिकम्'. ४. 'विपुलाश्चलाः श्रियः'; 'चटुला वरश्रियः'; 'विपुलाचलाश्रयः'. ५. 'यशोदाहित–'. ६. 'आलोच्य चौचित्य–'. ७. 'यथा'. ८. अयं श्लोकः केषुचित्पुस्तकेषु नास्ति. ९. 'उल्लसत्पूतिप्लुत्या'. १०. 'स्मरामि'. ११. 'प्रत्यनीकमिदं भवेत्'; 'प्रत्यनीकरसं यथा'.

तामेवानुचितां गच्छ ज्वलिता त्वत्कृते तु या ।
किं ते कृत्यं मया धूर्त दुःसंधानरसं त्विदम् ॥ ५० ॥
दुर्जनो दयितः कामं मनो म्लानं मनोभवः ।
कृशा वियोगतप्तायास्तस्या इत्यादि नीरसम् ॥ ५१ ॥
मुग्धा व्याजं विना वेश्या कन्येयं निपुणा रतौ ।
कुलस्त्री सर्वदा धृष्टा पात्रदुष्टं त्विदं मतम् ॥ ५२ ॥
अन्येष्वपि रसेष्वेवं दोषा वर्ज्या मनीषिभिः ।
यत्संपर्कान्न यात्येव काव्यं रसपरम्पराम् ॥ ५३ ॥
इति मया कथितेन पथामुना रसविशेषमशेषमुपेयुषा ।
ललितपादपदा सदलंकृतिः कृतधियामिह वाग्वनितायते ॥ ५४ ॥
शृङ्गारतिलको नाम ग्रन्थोऽयं ग्रथितो मया ।
व्युत्पत्तये निषेवन्तु कवयः कामिनश्च ये ॥ ५५ ॥
कान्या काव्यकथा कीदृग्वैदग्धी को रसागमः ।
किं गोष्ठीमण्डनं हन्त शृङ्गारतिलकं विना ॥ ५६ ॥
त्रिपुरवधादेव गतामुल्लासममुमां समस्तदेवनताम् ।
शृङ्गारतिलकविधिना पुनरपि रुद्रः प्रसादयति ॥ ५७ ॥

इति श्रीरुद्रभट्टविरचिते शृङ्गारतिलकाभिधाने काव्यालंकारे
हास्यादिरसनिरूपणं नाम तृतीयः परिच्छेदः ।

## भट्टश्रीमाधवकविप्रणीतं
## दानलीलाकाव्यम् ।

अस्ति स्वस्तिकरी समस्तजगतां निर्वाणगर्वापहा
क्षोणीमण्डलमध्यभूषणमणिः काचित्पुरी माधवी ।

---

१. 'अत्र'. २. 'मानम्लानः'; 'गतो ग्लानिम्'. ३. 'कविपरम्पराम्'. ४. 'स्वयम्'. ५. 'वैदग्ध्यम्'. ६. 'मण्डलम्'. ७. 'तिलकादेन'. ८. 'विबुधनुताम्'. ९. 'प्रसाधयति'. क्वचित्पुस्तकेषु 'त्रिपुरवधादेव' इत्यार्यान्तिमायां नास्ति. १०. कवेर्देशकालौ ग्रन्थान्ते स्फुटावेव. प्रणीयमाधवचम्पू-सुभद्राहरणादिग्रन्थकर्तुर्मण्डलेश्वरभट्टसूनोर्माधवभट्टादयं भिन्नो माधवभट्टः.

रम्या कृष्णतरङ्गिणीसहचरी कर्मद्रुमोन्मूलिनी
सत्यानन्दचिदात्मनोऽनवरतस्वेच्छाविहारस्थली ॥ १ ॥
स्निग्धच्छायतरुप्रसूनविलसन्माधुर्यलोभभ्रम-
त्कालिन्दीपुलिनोपवर्ति पवनप्रालेयितप्राङ्गणम् ।
ब्रह्मेन्द्रादिसुरेन्द्रमृग्यमहिम प्रेमैकलभ्यं परं
पूर्णब्रह्मरहोविहारभवनं तत्रास्ति वृन्दावनम् ॥ २ ॥
नित्यानेकफलप्रवालसुमनःशीतोष्णवर्षादिभि-
र्यस्मिन्कालगुणैस्त्रिकालविदुषां याता मतिर्मुग्धताम् ।
श्रीराधामुखकर्णभूषणलसन्माणिक्यचन्द्रांशुभ-
र्नित्योद्यत्किरणैः क एष समयो निर्णेतुमित्यक्षमा ॥ ३ ॥
ये राधारतिकान्तकोमललसत्पादारविन्दद्वय-
प्रस्यन्दन्मकरन्दपानमुदितस्वान्तेन्द्रियेन्दिन्दिराः ।
धर्मादित्रितयं चतुर्विधमपि श्रेयस्तृणीकुर्वते
तेषामेव परं मनः सुकृतिनां यस्मिन्नरीनृत्यते ॥ ४ ॥
क्रीडाकौतुकमीक्षितुं भगवतः सर्वे सुनन्दादयो
ब्रह्मामर्त्यमुनीन्द्रसिद्धविबुधा नन्दव्रजानन्दिनः ।
भूत्वा चन्द्रकिकीरकोकिलरुत्कादम्बमुख्या द्विजा
यस्मिन्कृष्णमृगादयो मृगवरा निर्वैरमध्यासते ॥ ५ ॥
तत्र श्रीरमणः कलिन्दतनयातीरोल्लसन्मालती-
वल्लीपल्लवमल्लिकावलयितद्योतान्निकुञ्जालिषु ।
वंशीवादविनोदनादितमनोजन्मोपनीतव्रज-
क्षामाङ्गीमिषवेदशाखगिरां वृन्दैरलं क्रीडति ॥ ६ ॥
तल्लीलेक्षणविस्मृतक्षणगणैरेणाङ्कयानादिव
भ्रश्यद्भिर्भगणैरनङ्गरभसादेणीदृगानन्दिनः ।
त्रुट्यन्मौक्तिकदामकाञ्चनरणत्काञ्चीक्वणन्नूपुरैः
स्रंसत्कुन्तलमल्लिकादिसुमनःसंघैर्बभौ केलिभूः ॥ ७ ॥
इत्थं मञ्जुतरस्थलीषु नलिनीगेहेषु कल्लोलिनी-
कूलान्तःपुलिनेषु च प्रमदयन्सोऽरीरमद्रात्रिषु ।

नानाकामकलाविनीतवनिताभावैरनेकैर्मुहु-
मुष्णन्तीर्हृदयंगमैरपि मनः कंदर्पदर्पापहः ॥ ८ ॥
आभीरार्भकमण्डलैः परिवृतो वृन्दं गवां चारय-
न्वृन्दारण्यपुरंदरोऽरुणभुवस्तीरे मनोहारिणि।
गुञ्जाबर्हदलप्रसूनविहितप्रत्यङ्गभूषोत्सवो
गायन्वेणुरवादिवापि कृतिनः संलालयन्क्रीडति ॥ ९ ॥
एकस्मिन्दिवसेऽव्रजद्व्रजपतिर्गोपात्मजैरन्वितः
प्रातर्नैव कृताशनो मुरलिकामापूर्य रम्यं वनम्।
तत्र स्मैत्य वनस्थलीषु विहरन्प्रत्यग्रनानाविध-
स्वेच्छाकल्पितकेलिभिर्विलसति प्रेमैकलभ्यो हरिः ॥१०॥
ऊचुर्गोकुलपालकाः क्वचिदमुं कृष्णं क्षुधासंक्षुताः
किंचिच्चिन्तय तत्र तान्व्रजपतिः प्रत्यब्रवीत्पश्यत।
विक्रेतुं व्रजसुन्दरीर्दधिपयो यान्तीः पुरं चेत्तदा
याचध्वं पुरतः करं यदि न ता दास्यन्त्यथो लुण्ठत ॥११॥
श्रुत्वैवं वचनानि गोकुलपतेरारुह्य केचिद्द्रुमा-
न्दूरादेव विलोक्य गोपयुवतीर्मन्द्रक्कणन्नूपुराः।
धम्मिल्लग्रथितप्रसूननिकरैर्वीथीरलंकुर्वती-
र्गोस्तन्यामृतपूर्णभाजनलसन्मौलीर्मुदावातरन् ॥ १२ ॥
वक्रोक्तिप्रखराः स्वभावचपला नन्दात्मजं संश्रिता-
स्तस्थुर्गोकुलयोषितां तत इतः संवृत्य केचित्पुरः।
पन्थानं प्रतिरुध्य कण्टकिलताकीर्णद्रुमैः संकुलं
बर्होत्तंसवनप्रसूनसुभगा वेत्रैकहस्तास्ततः ॥ १३ ॥
तावन्मुग्धवधूजनः कलरवं गायन्यशः श्रीपतेः
काञ्चीनादविभिन्ननूपुररणत्कारैर्मुनीनामपि।
अन्तः पञ्चशरानुगं विरचयन्नन्योन्यहासोक्तिभि-
र्हस्तान्दोलनतालिकाभिरभितः खेलञ्शनैरभ्यगात् ॥ १४ ॥

---

१. यमुनातटे. २. अन्तःकरणम्.

आयान्तीर्व्रजसुन्दरीः कलपदं स्वच्छन्दमुद्वीक्ष्य ता
गायन्तीः प्रतिवीथि गोपपृथुका वेत्रोल्लसत्पाणयः।
वल्गन्तश्च मुहुः महामशपथं संत्रासयन्तश्च ता
धावन्तश्च ततस्ततो रुरुधिरे प्रत्येकमत्युद्धताः॥ १५॥
काश्चित्क्वापि निलिल्यिरे तत इतो निर्गत्य काश्चिद्ययुः
काश्चित्संभ्रमवीक्षणाश्च चकिताः काश्चित्पुनः प्रत्ययुः।
सर्वास्ताः प्रतिपिध्य काश्चन पुनस्तानब्रुवन्निर्भया
रे रे ब्रूत निरुन्ध केन युवतीः के कस्य वान्तर्व्रजे॥ १६॥
किं प्रश्नैर्बहुभिर्वयं विधिकराः सूनोर्व्रजाधीशितु-
र्दानीनस्य विहारिणो वनभुवि स्वैरं रमन्त्यऽमुना।
आदातुं दधिदुग्धयोः करमितः सर्वे वयं प्रेषिता-
स्तद्गृह्णीत मुखेन गोपवनिता दत्त्वा स्वकीयान्पथः॥ १७॥
तच्छ्रुत्वा परिहस्य ता अपि मिथः संवीक्ष्य तानूचिरे
तिर्यक्कुञ्चितकंधरैः करतलैर्दत्त्वामकृत्तालिकाः।
एतैरेव मुखैरभीप्समथ पयः पातुं दधि स्वादुम-
त्तत्प्रक्षाल्य निजान्यमूनि न चिराद्गच्छतागच्छत॥ १८॥
काचिद्गोपनितम्बिनी निजकरेणाहृत्य किंचिद्दधि
स्वीयं पश्यत जक्षतेति वसनं व्याहृत्य वक्त्रान्तिकम्।
गत्वा गण्डतले विलिप्य झटिति प्रत्यागमत्स्वान्तरं
दृष्ट्वा तज्जहसुर्भृशं करतलैरुच्चैरदुस्तालिकाः॥ १९॥
काचित्पाणितलेन कंचिदपरं हत्वा कपोलस्थले
निर्भर्त्स्यैष करं ग्रहीष्यति मुखं शक्तिं च पश्यन्त्विति।
जल्पन्ती पुरतः कराङ्गुलिपतिं संदर्शयित्वा मुहुः
सर्वाभिः सममन्यतः प्रचलिता मार्गं परित्यज्य तम्॥ २०॥
गच्छन्तीरपथेन वीक्ष्य जहसुः संक्रुद्ध गत्वा पुरो
याता गृह्यमिति प्रजल्प्य शिरसः पात्राणि चापाहरन्।

१. दानिनां प्रभोः. २. अङ्गुष्ठम्.

मूढास्तिष्ठत दूरतः किमुत नो जानीथ दासीस्तदे-
त्यूचुस्तान्वृषभानुगोपजनुषः किं वा न तां पश्यत ॥ २१ ॥

कण्ठं श्रीमणिरत्नमौक्तिकमयैर्नानावतंसैरपि
प्रत्यङ्गं वलयैः सुवर्णरशनं रत्नाङ्गुलीयैरपि ।
हारैः काञ्चनचन्द्रकार्धविधुभिः सीमन्तसंदर्भित-
भ्राजच्चम्पककुड्मलैश्च तिलकैरुद्दीपयन्ती स्मरम् ॥ २२ ॥

नानारत्ननिबद्धकाञ्चनलसत्पर्णच्छदैर्मञ्जुलै-
र्मुक्ताभिः परितो लसत्तनुतरं चित्राञ्चलं बिभ्रती ।
अन्तः कृत्रिमपुत्रिकाविरचनैर्हैमैश्च रौप्यै रम्यै
राजन्नीलदुकूलमुत्कलयती नीवीं करेण क्वचित् ॥ २३ ॥

स्वलत्वञ्जनलोचना नसि लसन्मुक्ताग्ररत्नान्तर-
भ्राजिष्णु प्रसरत्सुवर्णकुसुमा बन्धूकरम्याधरा ।
संसर्पद्दशनांशुभिर्दश दिशोऽप्युद्भासयन्ती मिथः
क्रीडन्ती ललितादिभिः प्रियसखीवृन्दैः समं सस्मिता ॥ २४ ॥

केशग्रन्थिसरङ्गदोरकमिलत्सौवर्णपथ्यामणि-
द्योतन्मौक्तिकगुच्छवेल्लितगतद्योतन्नितम्बाम्बरा ।
अन्तः सेयमथाविराम शनकैर्मञ्जीरमञ्जुस्वनं
राधा माधवमाकुलं कलयती नेत्राञ्चलान्दोलनैः ॥ २५ ॥

(चतुर्भिः कलापकम्)

मौलौ चन्द्रकशेखरं श्रवणयोरर्कप्रभे कुण्डले
मुक्ता नस्यलिके ललामतिलकं कण्ठे मणिं कौस्तुभम् ।
पाण्योः कङ्कणमङ्गदं च हृदये हारं तथा मौक्तिकं
कौशेयं कनकप्रभं कटितटे बिभ्रत्क्वणत्काञ्चिकम् ॥ २६ ॥

दृष्ट्वा तां निजवल्लभामतिरसादागत्य धृत्वाञ्चलं
नीलेन्दीवरकान्तकोमलतनुः किंचिल्लसल्लोचनः ।
शिञ्जन्नूपुरमञ्जुलैर्निजपदैरुल्लासयन्भूतलं
सर्वाङ्गे वनमालया विलसितः सस्मेरमूचे हरिः ॥२७॥(युग्मम्)

---

१. नासिकायाम्.

मुग्धे त्वं बहुभिर्दिनैरसि मया प्राप्ताद्य चौर्येण य-
न्नित्यं यामि महालिभिर्दधिपयो विक्रीय विक्रीय वै ।
विज्ञेयं कमलाक्षि तत्परमतो मत्तेभकुम्भस्तनि
त्वां मुञ्चामि तदैव सुन्दरि यदा सर्वस्य दद्याः करम् ॥२८॥
इत्याकर्ण्य कृशोदरी कलपदं मन्दाक्षमन्दाक्षरं
प्रत्यूचे वचनानि साम्प्रतमसौ त्वं तस्करो वा वयम् ।
तज्जानामि न किं त्वमेव जननीबद्धो यदोलूखले
त्वां किञ्चिन्नवनीतचौरमजहात्तत्किं त्वया विस्मृतम् ॥ २९ ॥
रे रे चञ्चल मुञ्च मेऽञ्चलमलं किं लोचने नर्तयेः
सख्यः पश्यत धाष्टर्यमस्य महिनां यन्नात्मनो रक्षति ।
इत्युक्त्वा करतोऽपहृत्य वसनं वंशीं च गत्वा द्रुतं
पश्चाद्देहि गृहाण चेत्यभिदधे साङ्गुष्ठदर्शस्मितम् ॥ ३० ॥
किं कुर्मः सखि नन्दगोकुलपतिर्ज्ञात्याभिजात्यादिभि-
र्ज्यायांस्तत्तनयस्ततोऽप्यतितरां मान्यो ह्ययं मादृशाम् ।
इत्यालोच्य मयानयाश्रितमते रागोऽस्य संस्थीयते
नो चेदद्य तथा क्रियेत पुनरप्येवं न कुर्याद्यथा ॥ ३१ ॥
तत्तस्याः प्रसमीक्ष्य हेलनसमं लज्जानमत्कंधरं
गोविन्दं स्मितरागमन्दरमुखं तिर्यक्चलल्लोचनम् ।
दृष्ट्वा चोद्गतमन्यवः कृतधियस्तन्नोदिता लुण्ठितुं
धावन्तः परितः पुरंध्रिनिचयं संतर्जयांचक्रिरे ॥ ३२ ॥
जक्षुः केचन नव्यगव्यमितरेऽमत्राणि जह्रुस्ततः
श्रीदामाद्यनुगा व्रजेशतनुपा व्यातेनिरे बल्लवीः ।
इत्थं संभ्रमिता बृहत्कलकलैरूचेऽथ काचिद्वधू-
रायाता किमु लुण्ठितुं करमुतादातुं ममादत्त तत् ॥ ३३ ॥
वाचो नः शृणुतान्यतोऽस्त्यपि करो गव्यस्य जातु क्वचि-
द्रीतिः काचन कल्पिता नवनवा युष्माभिरत्रैव वा ।
कस्तूरीघनसारकं मलयजं चैलालवङ्गादयो
विद्यन्तेऽत्र करं ग्रहीष्यति पुनः कस्यात्र तत्कथ्यताम् ॥३४॥

अस्त्येतद्विपिनं वयं युवतयो द्रव्यं च गव्यं परं
कंसश्चोग्रनृपोऽनयं कुरुथ यत्तन्नैव युक्तं ततः ।
किंचान्यत्पथिकाः क्वचित्कलपदं गायन्ति लोलेक्षणा
वक्षोजेषु च बिभ्रति क्वचिदहो गत्वाञ्चलं योषिताम् ॥ ३५ ॥
श्रुत्वा तद्वचनानि गोकुलपतिः प्रत्यब्रवीत्सस्मितं
दत्त्वा यात करं मदीयमखिलं गत्वा नृपस्याग्रतः ।
ब्रूताहं न ततो बिभेमि दलिका तूर्णस्य चपास्ति व-
स्तस्यापि त्वरितं प्रयात कुरुत स्वस्वं मनोभावितम् ॥ ३६ ॥
ऊचेऽन्याथ तदा त्वमेव नृपतिः साधूच्यतां तत्करः
कस्यायं च कियान्व्रजेश वनिताहल्लोचनानन्दन ।
कर्णाभ्यां परिपीय तत्कलगिरः संजातरोमोद्गमा
तस्यापाङ्गतरङ्गभाङ्गजनितानङ्गातुराङ्गी वधूः ॥ ३७ ॥
मौलौ गुम्फितमल्लिकासुमनसां नेत्राञ्जनानां तथा
कर्णस्वर्णजपर्णयोश्च मधुनो बिम्बाधरस्यन्दिनः ।
हारस्यापि च मौक्तिकस्य लुठतः कण्ठे कटिप्रक्वण-
त्किङ्किण्याश्च करं प्रयच्छत रणन्मञ्जीरयोः कोटिशः ॥३८॥
तद्भावं मनसावगाह्य मदनेनाविद्धचित्ता भृशं
स्मेरास्या न च भाषितुं समशकल्लज्जानमत्कंधराः ।
ईषत्कुञ्चितलोचनाञ्चलशरैर्घ्नन्त्यो मुहुर्माधवं
धृत्वा धैर्यमथापरा कुचपटेनावृत्य किंचिन्मुखम् ॥ ३९ ॥
श्याम श्यामतमालमञ्जुलतनो दास्यस्तवाज्ञापय
स्वच्छन्दं तदशान गोरसमिमं साकं स्वकैः किंकरैः ।
अन्यच्चापि यदीप्सितं तव हि तद्दातुं न शक्ता वयं
गन्तुं चापि भवत्पदाम्बुजरजः काङ्क्षामहे केवलम् ॥ ४० ॥
नीलेन्दीवरलोचनः स भगवानाकर्ण्य तत्सादरं
ताभिर्दत्तमथाजक्ष सखिभिः साकं दधि स्वादुमत् ।
एतस्या मदमत्तवारणगतेः स्निग्धं निरम्बूज्ज्वलं
मृष्टं नैव तवेति संपरिहसन्नानाविनोदैर्विभुः ॥ ४१ ॥

भुक्त्वा तदवधि मञ्जुकुञ्जसदनं गत्वा रहः केलिभिः
कृत्वा तल्पमनल्पकल्पकुसुमैर्दत्त्वा सुधामाधुरीम् ।
पीत्वा च स्वरतोऽप्यरीरमदलं धृत्वा हृदा राधिकां
श्रित्वा मन्मथकोटिजित्वरवपुर्हृत्वा नितम्बाम्बरम् ॥ ४२ ॥

रसावेशादेषा धृतसुभगवेषा वरतनु-
र्वरं वारंवारं विततनयना बल्लववधूः ।
निरीक्ष्य प्रक्षुभ्यन्मदनकदनक्लान्तवदना
न रन्तुं गन्तुं वा गृहमलमभूद्विस्मृतगतिः ॥ ४३ ॥

इत्थं तन्महदद्भुतं व्रजभुवां भाग्योदयं वीक्ष्य ते
ब्रह्मेन्द्रप्रमुखाः सुराः सुमनसां वृन्दैर्मुदावाकिरन् ।
एतैः किं चरितं तपः श्रुतिशिरःसंगीततत्त्वेन य-
त्स्वच्छन्दं विहरन्ति जन्म सफलं कुर्वन्ति चेत्यस्तुवन् ॥४४॥

धन्येयं धरणी ततोऽपि मथुरा तत्रापि वृन्दावनं
तत्रापि व्रजवासिनो युवतयस्तत्रापि गोपाङ्गनाः ।
तत्राचिन्त्यगुणैकधामपरमानन्दात्मिका राधिका
लावण्याम्बुनिधिस्त्रिलोकरमणीचूडामणिः काचन ॥ ४५ ॥

सौभाग्यं भगवत्प्रियापि नियतं वक्षःस्थलस्थायिनी
मुक्तिश्चापि पदारविन्दमधुनः सौगन्ध्यमाकाङ्क्षति ।
यस्याश्चोपनिषद्रहस्यमपि तद्ब्रह्माद्वयं केवलं
विज्ञानात्मकृपावलोकनमतस्तां वर्णितुं कः क्षमः ॥ ४६ ॥

मदनरसिकमौलिर्बल्लवीभिः सहैवं
विविधललितलीलाकौतुकाल्यापितानि ।
भगवति रतिमन्तः शृण्वतामादरेण
व्रजविपिननिवासं संविदध्युर्जनानाम् ॥ ४७ ॥

तपनतनयातीरे गुञ्जन्मधुव्रतमञ्जुल-
प्रसवनिकरैर्भ्राजत्कुञ्जेऽम्बुजद्युतिरञ्जिते ।

निधुवनविधिश्रान्तां कान्तां मुहुः कुसुमाकरे
रमयति रमारामे श्यामे मनो रमतां सताम् ॥ ४८ ॥

---

कश्चित्कर्णाटविद्यावनवसतिरभूद्विष्णुशर्मा द्विजन्मा
सोमैर्नेष्ट्वा च येनोत्तरवयसि पुनर्मुक्तिदामेत्य काशीम् ।
शंभोर्निर्वाणमद्मन्यनुपमविधिभिः कीर्तिमास्थाप्य लोके
संन्यस्याशेषकर्माध्यगामि पदमहो नैति यस्मिन्मनोऽपि ॥ ४९ ॥

अजनिषत तनूजास्तस्य षड् यः कनीया-
नखिलगुणगरीयांस्तत्र यज्ञेश्वराख्यः ।
अजनि च तनयोऽस्माद्राघिदेवोऽस्य चास्ता-
मगणितगुणधामा लक्ष्मणो माधवश्च ॥ ५० ॥

आद्यो वंशावतंसः सुरगुरुसदृशः प्रज्ञया विष्णुदेवः
ख्यातो यश्चक्रवर्त्यनुपमकविताल्ब्धकीर्तिः कवीनाम् ।
वृन्दारण्येन्दुनन्दात्मजपदनलिनद्वन्द्वनित्यानुवृत्त्या
प्राप्तान्तःप्रेमभक्तिप्रमुदितहृदयो नन्दनो माधवस्य ॥ ५१ ॥

तस्यासंस्तनयास्त्रयोऽपि सुधियो रामः क्षमाचन्द्रमाः
श्रीमान्विश्वपतिश्च माधव इति ख्याता गुणाम्भोधयः ।
तत्राकारि कनीयसा सुकृतिना चेतश्चमत्कारकं
काव्यं कृष्णकृपाभिलापमनसा श्रीदानलीलाभिधम् ॥ ५२ ॥

वसुकररसेन्दु(१६२८)वर्षे पक्षे शुक्ले चतुर्दश्याम् ।
चन्द्रे तपसि कृतेयं वारीग्रामे सुराज्ञि शूरजने ॥ ५३ ॥

इति श्रीमद्वृन्दावनचन्द्रचरणारविन्दमकरन्दास्वादमुदितमनोमधुकरेण
भट्टश्रीमन्माधवेन कृतं दानलीलाभिधं काव्यं समाप्तम् ।

---

Krishnaswami

# KÂVYAMALA.



A collection of old rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhânas, Prahasanas, Chhandas, Alankâras &c.,

## PART IV.

EDITED BY

PANDITA DURGÂPRASÂDA

AND

KÂS'ÎNÂTHA PÂṆḌURANGA PARABA.



PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRNAYA-SÂGARA" PRESS.

BOMBAY.

1887.

*Price 1 Rupee.*

॥ श्रीः ॥

# काव्यमाला

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

## चतुर्थो गुच्छकः ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्न-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितः ।

स च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१८८७



मूल्यमेको रूप्यकः ।

# अनुक्रमणिका।

# काव्यमाला।

## महाकविश्रीबाणभट्टविरचितं

## चण्डीशतकम्।

टिप्पणसमेतम्।

मा भाङ्क्षीर्विभ्रमं भ्रूरधर विधुरता केयमास्यास्य रागं
पाणे प्राण्येव नायं कलयसि कलहश्रद्धया किं त्रिशूलम्।
इत्युद्यत्कोपकेतून्प्रकृतिमवयवान्प्रापयन्त्येव देव्या
न्यस्तो वो मूर्ध्नि मुष्यान्मरुदसुहृदसून्संहरन्नङ्घ्रिरंहः ॥ १ ॥

देव्या अङ्घ्रिश्चरणो वो युष्माकमंहः पापं मुष्याद्धरतु। किं कुर्वन्। मरुदसुहृदसू-

१. वात्स्यायनवंशोद्भवो महाकविः श्रीबाणभट्टः कान्यकुब्जाधिपतेर्हर्षवर्धनस्य सभायामासीदिति हर्षचरितात्प्रतीयते एव. ख्रिस्तसंवत्सरीयसप्तमशतकपूर्वार्धे 'हुएन् त्सङ्ग'-(Hiouen-Thsang) नामा कश्चन बौद्धश्चीनदेशाद्भारतवर्षं समागतः. बभ्राम च बहूनि वर्षाणि भारते वर्षे. स च प्रत्यहं स्ववृत्तं लिखितवान्. तस्मिन्समये हर्षवर्धनो राज्यं कुर्वन्नासीदिति तद्वृत्तान्तपुस्तकादाधुनिकैर्महापण्डितैरधिगतम्. तस्माद्बाणभट्टोऽपि सप्तमशतकपूर्वार्ध एवासीदिति निश्चितमेव. सांप्रतं बाणभट्टकृतिषु (१) कादम्बरीपूर्वभागः, (२) हर्षचरितम्, (३) चण्डीशतकम्, (४) पार्वतीपरिणयनाटकम्, एतच्चतुष्टयमुपलभ्यते. तत्र पार्वतीपरिणयकर्ता कश्चिदन्यो बाणकविरयमेव वेति संदेहः. विद्यारण्यशिष्योऽपि कश्चन शब्दचन्द्रिकाकर्ता बाण आसीत्. विस्तरेण बाणभट्टवर्णनं तु हर्षचरिते डॉक्टरपीटर्सनमुद्रितकादम्बर्युपोद्घाते च द्रष्टव्यम्. श्लोकबद्धा कादम्बरी मुकुटताडितकनाटकं च बाणभट्टेन प्रणीतमित्यपि ज्ञातम्, किं त्वेतद्ग्रन्थद्वयं नाद्याप्युपलब्धम्. २. अस्य शतकस्य सोमेश्वरसूनुधनेश्वरप्रणीतैका, कर्तृनामरहिता चापरा, एवं टीकाद्वयमुपलब्धमस्माभिः. किं तु टीकाद्वयमप्यतीव तुच्छं वृथा समासादिभिः पल्लवितमस्ति. अस्मल्लब्धं तत्पुस्तकद्वयं चातीवाशुद्धं मध्ये मध्ये त्रुटितं चेति संपूर्णटीकामुद्रणमुपेक्ष्य टीकाद्वयोद्धृतं स्वल्पं टिप्पणमेवात्र गृहीतम्. बाणभट्टस्य चण्डीशतकनिर्माणे कारणं मानतुङ्गप्रणीतभक्तामराख्यजिनस्तुतिटीकाकर्तृभिर्गुणाकररत्नचन्द्रादिभिः स्वस्वटीकारम्भे लिखितमस्ति, तच्च कपोलकल्पितमिति नात्रास्माभिरुद्धृतम्. शतकस्यास्य शार्ङ्गधरपद्धति-सरस्वतीकण्ठाभरण-वाग्भटप्रणीतकाव्यानुशासन-अर्जुनवर्मदेवप्रणीतामरुशतकटीकादिग्रन्थेषु श्लोकाः समुपलभ्यन्ते. ३. 'स्थापयन्त्येव'.

न्देववैरिप्राणान्संहरन् । कीदृशोऽङ्घ्रिः । मूर्ध्नि न्यस्तः । अर्थान्मरुदसुहृदो महिषासुरस्यैव । किंभूतया देव्या । इत्यमुना प्रकारेण उद्यत्कोपकेतुनाविर्भवत्क्रोधचिह्नानवयवान्निजाङ्गान्प्रकृतिं पूर्वावस्थां प्रापयन्त्या इव । इति कथम् । हे भ्रूः, विभ्रमं विलासं मा माङ्क्षीः मा आमर्दयः । हे अधर ओष्ठ, केयं विधुरता किमिदं वैकल्यम् । हे आस्य मुख, रागं लौहित्यमस्य क्षिप । 'असु क्षेपणे' । हे पाणे हस्त, अयं महिषः प्राण्येव चेतनावानेव न । कलहश्रद्धया सङ्ग्रामवाञ्छया त्रिशूलं किं कलयसि । यद्वायं ना पुरुषः प्राण्येव जन्तुमात्रोऽयमस्मत्पादतलाघातमात्रसाध्यः, नास्ति युष्माभिरसमय एव वृथा कोपाद्विकृतिरास्थीयते, स्वस्था भवन्तु भवन्तः ॥ उत्प्रेक्षालंकारः ॥

हुंकारे न्यक्कृतोदन्वति महति जिते शिञ्जितैर्नूपुरस्य
श्लिष्यच्छृङ्गक्षतेऽपि क्षरदसृजि निजालक्तकभ्रान्तिभाजि ।
स्कन्धे विन्ध्याद्रिबुद्ध्या निकषति महिषस्याहितोऽसूनहार्षी-
दज्ञानादिव यस्याश्चरण इति शिवं सा शिवा वः करोतु ॥ २ ॥

सा शिवा भगवती वः शिवं कल्याणं करोतु । सा का । इत्यज्ञानादिव यस्याश्चरणो महिषस्यासून्प्राणानहार्षीत् । किंभूतश्चरणः । विन्ध्याद्रिबुद्ध्या अस्मन्निवासोऽयं विन्ध्यपर्वत इति धिया स्कन्धे अर्थान्महिषस्य आहितो न्यस्तः । किंभूते च स्कन्धे । विन्ध्याद्रिबुद्ध्या निकषति कण्डूयापनयनाय निकषणं कुर्वाणे । श्यामत्वाद्देवीचरणस्य तस्मिन्महिषस्कन्धस्यापि विन्ध्याद्रिभ्रमो जातः । अत एव घर्षणं करोति । इति किम् । महति न्यक्कृतोदन्वति तिरस्कृतसमुद्रघोषे हुंकारे अर्थान्महिषस्य नूपुरस्य शिञ्जितैर्जिते सति । स्कन्धनिकषणेनैव नूपुरध्वनिः समुत्पन्नः । हुंकारेण महिषोऽयमिति ज्ञातुं न शक्यः । हुंकारस्य नूपुरशिञ्जितैस्तिरस्कृतत्वात् । अन्यच्च श्लिष्यच्छृङ्गक्षतेऽपि क्षरदसृजि गलद्रुधिरे [अर्थाद्देव्याश्चरणे] निजालक्तकभ्रान्तिभाजि स्वकीयचरणरागभ्रमयुक्ते सति । एवमुपन्यस्तहेतुत्रयाद्भ्रान्तिः समुत्पन्ना ॥

जाह्नव्या या न जातानुनयपरहरक्षिप्तया क्षालयन्त्या
नूनं नो नूपुरेण ग्लपितशशिरुचा ज्योत्स्नया वा नखानाम् ।
तां शोभामादधाना जयति नवमिवालक्तकं पीडयित्वा
पादेनैव क्षिपन्ती महिषमसुरमाद्दाननिष्कार्यमार्या ॥ ३ ॥

आर्या देवी जयत्युत्कर्षेण वर्तते । कथंभूता । नवमलक्तकमिव पादेनैव पीडयित्वा महिषं क्षिपन्ती । पादेनैवेति नियमेनान्ययोगव्यवच्छेदः । पुनः कथंभूता । तां शोभामादधाना धारयन्ती । [अर्थाच्चरणे ।] तां काम् । यानुनयपरहरक्षिप्तया प्रसादनतत्परमहादेवप्रेरितया अत एव क्षालयन्त्या । [अर्थाच्चरणम् ।] । जाह्नव्या गङ्गया न जाता । नूनं

1. 'अवनमपुरहर–.'

नूपुरेण या शोभा नो जाता। नखानां ज्योत्स्नया कान्त्या वा नो जाता। ग्लपितशशिरुचा इति जाह्नवीनूपुरज्योत्स्नानां विशेषणम्। कथंभूतं महिषम्। असुरसादाननिष्कार्यम्। असवः प्राणा एव रसस्तस्यादानं ग्रहणं तेन निष्कार्यं निष्प्रयोजनम्। यथालक्तकं पादेन निष्पीड्य तदीयं रसमादाय निःसारभागं क्षिपति कश्चित्, एवं देवी रसभूतान्प्राणानादाय महिषं क्षिपवतीति भावः। तां शोभामिति अलक्तकरसादाने या रक्तत्वलक्षणा भवति। किं त्वलक्तकेन कृत्रिमा शोभा, इयं तु स्वाभाविकी॥

मृत्योस्तुल्यं त्रिलोकीं ग्रसितुमतिरसान्निःसृताः किं नु जिह्वाः
किं वा कृष्णाङ्घ्रिपद्मद्युतिभिररुणिता विष्णुपद्याः पदव्यः।
प्रासाः संध्याः स्मरारेः स्वयमुत नुतिभिस्तिस्र इत्यूह्यमाना
देवैर्देवीत्रिशूलाहतमहिषजुषो रक्तधारा जयन्ति ॥ ४ ॥

देवीत्रिशूलाहतमहिषजुषो देवीत्रिशूलकृतच्छिद्रमहिषशरीरादुद्गतास्तिस्रो रक्तधारा जयन्ति। किंभूताः। देवैरनुमानप्रकारेणोह्यमाना उत्प्रेक्ष्यमाणाः। इतीति किम्। अतिरसादतिगार्ध्यात्तुल्यं युगपदेव त्रिलोकीं ग्रसितुं मृत्योः किं नु जिह्वा निःसृताः। अर्थान्मुखकुहरात्। किं वा कृष्णाङ्घ्रिपद्मद्युतिभिर्भगवच्चरणपङ्कजकान्तिभिररुणिता रक्ततां नीता विष्णुपद्या गङ्गायाः पदव्यः प्रवाहाः। उत अथवा स्मरारेः शिवस्य नुतिभिः प्रार्थनाभिस्तिस्रः संध्याः स्वयं प्राप्ताः। संध्या अपि रक्तवर्णा भवन्ति॥

दत्ते दर्पात्प्रहारे सपदि पदभरोत्पिष्टदेहावशिष्टां
श्लिष्टां शृङ्गस्य कोटिं महिषसुररिपोर्नूपुरग्रन्थिसीम्नि।
मुष्याद्वः कल्मषाणि व्यतिकरविरतावाददानः कुमारो
मातुः प्रभ्रष्टलीलाकुवलयकलिकाकर्णपूरादरेण ॥ ५ ॥

अस्मिञ्श्लोके कुमारो वः कल्मषाणि मुष्यादित्यन्वयो यदि विधीयते तदा कुमारस्याप्राकरणिकत्वादप्रस्तुतान्वयता स्यात्। तस्मादेवमध्याहृत्य व्याख्येयम्—सा माता वः कल्मषाणि मुष्यात्। यस्या मातुः कुमारो व्यतिकरविरतौ महिषेण सह युद्धसमाप्तौ प्रभ्रष्टलीलाकुवलयकलिकाकर्णपूरादरेण शृङ्गस्य कोटिमग्रमाददानो वर्तते। नेयं महिषशृङ्गकोटिः, किंतु मम मातुः कर्णाच्च्युतो नीलोत्पलकलिकारूपः कर्णपूर एवायमिति श्रद्धयेति भावः। कीदृशीम्। दर्पान्मदात्प्रहारे दत्ते सति सपदि तत्क्षणं पदभरेण चरणगुरुत्वेनोत्पिष्टश्चूर्णितः स चासौ देहश्च तस्मादवशिष्टाम्। अथ च नूपुरग्रन्थिसीम्नि श्लिष्टां लग्नाम्। कस्य देहावशिष्टाम्। महिषसुररिपोर्महिषरूपः सुररिपुस्तस्य। महिषशृङ्गाणि प्रायेण कठिनानि भवन्तीति शृङ्गकोटेरवशिष्टत्वकारणम्॥

---

१. 'याम्याः'. २. 'देव्यास्त्रिशूलक्षत–.' ३. 'किल्बिषाणि.'

शश्वद्विश्वोपकारप्रकृतिरविकृतिः सास्तु शान्त्यै शिवा वो
यस्याः पादोपशल्ये त्रिदशपतिरिपुर्दूरदुष्टाशयोऽपि।
नाके प्रापत्प्रतिष्ठामसकृदभिमुखो वादयञ्शृङ्गकोट्या
हत्वा कोणेन वीणामिव रणितमणिं मण्डलीं नूपुरस्य ॥ ६ ॥

सा शिवा वः शान्त्यै सुखायास्तु। किंभूता। विश्वोपकारप्रकृतिः सर्वोपकृतिस्वभावा जगदुपकारशीला वा। शश्वन्निरन्तरम्। पुनः कीदृशी। अविकृतिर्विकाररहिता। यस्याः पादोपशल्ये चरणप्रान्ते त्रिदशपतिरिपुरिन्द्रवैरी महिषो नाके स्वर्गे प्रतिष्ठां स्थितिं प्रापत्। चरणसंसर्गजनितपुण्यातिशयेन स्वर्गनिवासी जात इति भावः। कीदृशः। दूरदुष्टाशयोऽपि नितरां नीचस्वभावोऽपि। किं कुर्वन्। रणितमणिं नूपुरमण्डलीमसकृद्वारंवारमभिमुखः संमुखः सञ्शृङ्गाग्रकोट्या हत्वा कोणेन वादनदण्डेन वीणामिव वादयन्। यः किल देवीपादमूले वीणां वादयति स मृतः स्वर्गमाप्नोति ॥

निष्ठ्यूतोऽङ्गुष्ठकोट्या नखशिखरहतः पार्ष्णिनिर्यातसारो
गर्भे दर्भाग्रसूचीलघुरिव गणितो नोपसर्पन्समीपम्।
नाभौ वक्त्रं प्रविष्टाकृतिविकृति यया पादपातेन कृत्वा
दैत्याधीशो विनाशं रणभुवि गमितः सास्तु देवी श्रिये वः ॥ ७ ॥

सा देवी वः श्रियेऽस्तु। यया दैत्याधीशो महिषो रणभुवि विनाशं गमितः प्रापितः। कथंभूतः। अङ्गुष्ठकोट्या निष्ठ्यूतो निरस्तः। पुनः। नखशिखरेणाङ्गुष्ठनखाग्रेण हतस्ताडितः। पुनः। पार्ष्ण्या गुल्फाधोभागेन निर्यातः सारो यस्य सः। पादपश्चिमाधोभागनिष्पीडित इति यावत्। पुनः। गर्भे पादमध्ये दर्भाग्रसूचीलघुरिव न गणितः। अतितुच्छो दृष्टः। किं कृत्वा। प्रविष्टाकृतिविकृति यथा स्यात्तथा पादपातेन नाभौ वक्त्रं कृत्वा। आदौ पादघातेन तद्वक्त्रं तदीयनाभौ प्रवेशितम्, तदनन्तरं व्यापादितः। यद्वा प्रविष्टाकृतेः स्वरूपस्य विकृतिर्विकारो यस्मिंस्तादृशं महिषस्य वक्त्रं पादपातेन तदीयनाभौ प्रवेशयित्वा ॥

प्रस्ताश्वः शष्पलोभादिव हरितहरेरप्रमोदानलोष्मा
स्थाणौ कण्डूं विनीय प्रतिमहिषरुषेवान्तकोपान्तवर्ती।
कृष्णं पङ्कं यथेच्छन्वरुणमुपगतो मज्जनायेव यस्याः
स्वस्थोऽभूत्पादमाप्त्वा ह्रदमिव महिषः सास्तु दुर्गा श्रिये वः ॥ ८ ॥

सा दुर्गा वः श्रियेऽस्तु। यस्याः पादं ह्रदं सरोवरमिव प्राप्य महिषः स्वस्थो निर्वृतः

1. 'महिषसुररिपुः.' २. 'निष्पातसारः'. ३. 'प्रतिष्ठाकृति'. ४. 'शान्त्यै शिवा वः'. ५. 'श्रियेऽस्तु वः'.

स्वर्गस्थश्चाभूत् । किंभूतः । हरितहरेः सूर्यस्य शष्पलोभाद्बालतृणगार्ध्यादिव प्रस्ताश्वः । सूर्यस्याश्वा हरिद्वर्णाः सन्तीति महिषेण हरितकोमलतृणबुद्ध्या कवलीकृताः । पुनः । असोढानलोष्मा अमोढाग्नितेजाः । देवपक्षतयाग्निस्तस्य दर्पं न सहते । स्थाणौ महादेवे कण्डूं विनीय शिवेन सह समरं कृत्वा मदकण्डूतिमपनीय । महिषो हि स्थाणौ कीलके कण्डूत्यपनयनं करोति । पुनः । प्रतिमहिषरुषा महिषान्तरकोपेनेवान्तकोपान्तवर्ती यमसमीपगन्ता जातः । पुनः । कृष्णं विष्णु कृष्णवर्णत्वात्पङ्कमिवेच्छन्मज्जनाय जलावगाहायेव वरुणं जलाधीशमुपगतः । एव बहुष्वपि हरिदश्वप्रभृतिस्थानेषु भ्राम्यन्स्वस्थो यो न बभूव, स महिषश्चण्डीपादमूले स्वस्थतां प्राप । अन्योऽपि महिषो हरिततृणलोलुपो भवति, अनलोष्माणं न सहते, स्थाणौ कण्डूतिमपनयति, द्वितीयं महिषं विलोक्य कोपाविष्टो भवति, कृष्णवर्णकर्दमे लुठनेच्छया जलाशयं गच्छति, ह्रदं प्राप्य च स्वस्थो भवति ॥

त्रैलोक्यातङ्कशान्त्यै प्रविशति विवशे धातरि ध्यानतन्द्री-

मिन्द्राद्येषु द्रवत्सु द्रविणपतिपयःपालकालानलेषु ।

ये स्पर्शेनैव पिष्ट्वा महिषमतिरुषं त्रातवन्तस्त्रिलोकीं[1]

पान्तु त्वां पञ्च चण्ड्याश्चरणनखनिभेनापरे लोकपालाः ॥ ९ ॥

चण्ड्याश्चरणनखनिभेनापरे पञ्च लोकपालास्त्वां पान्तु । किंभूताः । स्पर्शेनैवातिरुषं महिषं पिष्ट्वा चूर्णयित्वा ये त्रिलोकीं त्रातवन्तो रक्षमाणाः । ननु ब्रह्मादयः क गताः, येन चण्डीपादनखा महिषं पिष्ट्वा लोकपाला सवृत्तास्तत्राह—विवशे विह्वले धातरि ब्रह्मणि त्रैलोक्यातङ्कशान्त्यै त्रैलोक्योपद्रवनिवृत्तये ध्यानतन्द्रीं चिन्तारूपां प्रमीलां प्रविशति सति । यो हि तन्द्रीग्रस्तो भवति स विवशो भवत्येव । कथं लोकरक्षा भविष्यतीति चिन्ताकारणम् । किं च इन्द्राद्येष्विन्द्रप्रधानेषु द्रविणपतिपयःपालकालानलेषु कुबेरवरुणयमाग्निषु द्रवत्सु सङ्ग्रामान्निवर्तमानेषु सत्सु । इन्द्राद्याः पञ्च पलायिता इति देवीपादनखा लोकपाला जाताः ॥

प्रालेयोत्पीडपीनां[3] नखरजनिकृतामातपेनातिपाण्डुः

पार्वत्याः पातु युष्मानिषुरिव तुलिताद्रीन्द्रसारः स पादः ।

यो धैर्योन्मुक्तलीलाममुचितपतनापातपीतासुरासी-

न्नो देव्या एव वामश्छलमहिषतनोर्नाकलोकद्विषोऽपि ॥ १० ॥

नखरजनिकृतां नखचन्द्राणामातपेन प्रकाशेनातिपाण्डुरतिशुभ्रः पार्वत्याः स पादो युष्मान्पातु । कथंभूतानां नखरजनिकृताम् । प्रालेयोत्पीडपीनाम् । प्रालेयं हिमं तस्य

---

१. 'त्रातवन्तो जगन्ति'. २. 'नखमिषेण'. ३. 'प्रालेयोत्पी[illegible]', '[illegible] दीप्यन्'.

सा देवी वः श्रियेऽस्तु । सा का । यया अग्रे महिषाख्ये शत्रौ पिष्टे चूर्णिते सति जया तत्प्रतीहारी नष्टं महिषभयात्पलायितं सुजनमिन्द्रादिकमिति जहास । इतीति किम् । हे हरे इन्द्र अथवा विष्णो, ते तव भीर्भयं किं जाता । अथ वा युक्तमेतत् । यतोऽवश्यमेव महिषतो हरीणां भीर्भवति । अत्र हरिशब्दोऽश्ववाचकः । किं चाद्य इन्दोश्चन्द्रस्य द्वौ कलङ्कौ जातौ । एकस्तावत्सहजः, द्वितीयस्तु महिषयुद्धे पलायनान्निन्दारूपः । अपां पतिर्वरुणश्चन्द्रं नष्टमालोक्य धैर्यं त्यजति कातरो भवति । उचितमेतत् । अपांपतिः समुद्रश्चन्द्रमालोक्य धैर्यं त्यजेद्वेलाभिमुखं प्रसरेत् । हे वायो, त्वयान्यः कम्प्यः कम्पनीयः, त्वं तु स्वयं कम्पसे इति भावः । अपि च हे यम, महिषादात्मयुग्यं स्ववाहनं नय अपसारय । महिषो महिषान्तरं दृष्ट्वा क्रुध्यतीति भावः ॥

शूलप्रोतादुपान्तप्लुतमहि महिषादुत्पतन्त्या स्रवन्त्या
वर्त्मन्यारज्यमाने सपदि मखभुजां जातसंध्याप्रमोहः ।
नृत्यन्हासेन मत्वा विजयमहमहं मानयामीति वादी
यामाश्लिष्य प्रनृत्तः पुनरपि पुरभित्पार्वती पातु सा वः ॥ १६ ॥

सा पार्वती वः पातु । यामाश्लिष्य पुरभित्त्रिपुरहरः पुनरपि प्रनृत्तो नर्तितुमारब्धवान् । किं कुर्वन् । नृत्यन् । कथंभूतः । सपदि तत्क्षणं मखभुजां वर्त्मनि देवमार्गे आकाशे उपान्ते समीपे प्लुता मही यस्मिन्नेवं यथा स्यात्तथा शूलप्रोतात्त्रिशूलविद्धादुत्पतन्त्योच्छलन्त्या स्रवन्त्या रुधिरनद्यारज्यमाने रक्तीक्रियमाणे सति जातसंध्याप्रमोहः समुत्पन्नसंध्याकालभ्रान्तिः । संध्यासमयं हरो नृत्यतीति भावः । पुनश्च मत्वा बुद्ध्वा । अस्मद्भार्याशूलप्रोतमहिषोत्पतद्रक्तनदीरक्तमेव व्योम नायं संध्याकाल इति ज्ञात्वेति भावः । ततो हासेन परितोषेण विजयमहं विजयोत्सवं मानयाम्यहमिति वादी । उपान्तप्लुतमहीति क्रियाविशेषणम् । समासान्तविधेरनित्यत्वान्न कप् ॥

नाकौकोनायकाद्यैर्द्युवसतिभिरसिश्यामधामा धरित्रीं
रुन्धन्वर्धिष्णुविन्ध्याचलचकितमनोवृत्तिभिर्वीक्षितो यः ।
पादोत्पिष्टः स यस्या महिषसुररिपुर्नूपुरान्तावलम्बी
लेभे लोलेन्द्रनीलोपलशकलतुलां स्तादुमा सा श्रिये वः ॥ १७ ॥

सा उमा वः श्रियै स्तात् । सा का । यस्याः पादोत्पिष्टो महिषाख्यः सुररिपुर्नूपुरान्तावलम्बी लोलेन्द्रनीलपाषाणखण्डसाम्यं लेभे । नूपुरसमीप इन्द्रनीलशकलेनावश्यमेव भाव्यम् । कथंभूतः । नाकौकोनायकाद्यैरिन्द्राद्यैर्द्युवसतिभिर्देवैर्धरित्रीं रुन्धन्पृथ्वीमावृण्वन्दृष्टः । कथंभूतैः । वर्धिष्णुविन्ध्याचलचकितमनोवृत्तिभिः । किमयं विन्ध्याचल एव पुनर्वृद्धिं गच्छतीति भीतैः । असिश्यामधामा । खड्गवन्मेचककान्तिः ॥

दुर्वारस्य द्युधाम्नां महिषितवपुषो विद्विषः पातु युष्मा-
न्पार्वत्या प्रेतपालस्वपुरुषपरुषः प्रेषितोऽसौ पृषत्कः ।
यः कृत्वा लक्ष्यभेदं हृतभुवनभयो गां विभिद्य प्रविष्टः
पातालं पक्षपालीपवनकृतपतत्ताक्ष्यंशङ्काकुलाहिः ॥ १८ ॥

महिषितवपुषो महिषीकृतकायस्य विद्विषः पार्वत्या प्रेषितः प्रहितोऽसौ पृषत्को बाणो युष्मान्पातु । कथंभूतः पृषत्कः । प्रेतपालस्य यमस्य ये स्वपुरुषाः स्वकीयदूतास्तद्वत्परुषः क्रूरः । कथंभूतस्य विद्विषः । द्युधाम्नां देवानां दुर्वारस्य दुःखेन वारयितुं शक्यस्य । यः पृषत्को लक्ष्यस्य महिषस्य भेदं कृत्वा हृतभुवनभयः सन् । महिषहिंसनाद्भुवनभयहरणम् । गां भूमिं विभिद्य पातालं प्रविष्टः । कथंभूतः । पक्षपाल्याः पत्रपङ्क्तेः पवनेन कृताः पततस्ताक्ष्यस्य गरुडस्य शङ्कया आकुला अहयः सर्पा येन सः । एवं गरुडेन पातालं प्रविशता पक्षपवनेन फणिनस्त्रासितास्तथा पार्वती शरेणापीति भावः ॥

वज्रं विन्यस्य हारे हरिकरगलितं कण्ठसूत्रे च चक्रं
केशान्बद्धाब्धिपाशैर्धृतधनदगदा प्राक्प्रलीनान्विहस्य ।
देवानुत्सारणोत्का किल महिषहतौ मीलतो हेपयन्ती
हीमत्या हैमवत्या विमतिविहतये तर्जिता स्ताज्जया वः ॥ १९ ॥

जया देव्याः प्रतीहारी वो विमतिविहतये स्ताद्दुर्बुद्धिविनाशाय भवतु । किंभूता । हीमत्या लज्जितया हैमवत्या पार्वत्या तर्जिता । कुतः प्राक्प्रलीनान्पूर्वं पलायितान्महिषहतौ महिषवधे जाते सति मीलत एकीभवतो देवान्हेपयन्ती लज्जितान्कुर्वाणा । किं कृत्वा हेपयन्ती । हरिकरगलितं महिषभीत्या इन्द्रहस्ताच्च्युतं वज्रं हारे विन्यस्य । एवं हरिकरगलितं विष्णुहस्तात्पतितं चक्रं कण्ठसूत्रे च विन्यस्य । केशानब्धिपाशैर्वरुणपाशैर्बद्ध्वा । धृतधनदगदा । तत्यक्तायुधधारणेन तेषां हास इति भावः । कथंभूता । उत्सारणोत्का उत्सारणे दूरीकरणे । देवानामित्यर्थः । उत्का उत्कण्ठिता ॥

खड्गे पानीयमाह्लादयति हि महिषं पक्षपाती पृषत्कः
शूलेनेशो यशोभाग्भवति परिलघुः स्याद्वधार्हेऽपि दण्डः ।
हित्वा हेतीरितीवाभिहतिबहलितप्राक्तनापाटलिम्ना
पार्ष्ण्यैव प्रोषितासुं सुररिपुमवतात्कुर्वती पार्वती वः ॥ २० ॥

पार्ष्ण्यैव पादपश्चाद्भागेनैव सुररिपुं महिषं प्रोषितासुं गतप्राणं कुर्वती पार्वती वोऽवतात् । किंभूतया पार्ष्ण्या । अभिहत्याभिघातेन बहलितः सान्द्रीकृतः प्राक्तन आपाटलिमा यस्याः । देवीचरणे नैसर्गिकमारक्तत्वं महिषघातनेन बहुलीभूतमिति भावः । कुतः । खड्गे पानीयं तिष्ठति तत्प्रत्युत महिषमाह्लादयति न घातयति । पृषत्को बाणः

पक्षपाती पक्षी: पत्रैः पतनशीलः, अथ च महिषस्य पक्षपाती सहायभूतः । शूलेन ईशः शिवो यशोभाक्शिव एव शूली नान्यः । यदि महिषं प्रति शूलं प्रेष्यते तदायमपि शूली स्यात्। वधार्हे दण्डोऽपि परिलघुः शीघ्रं भाव्यः स्यात्। उत्तिष्ठमानः परो नोपेक्ष्य इति। इतीव हेतीरायुधानि हित्वा पार्ष्ण्यैव महिषं व्यापादितवती॥

कृत्वेदङ्कर्म लज्जाजननमनशने शक्र मासून्विहासी-
र्वित्तेश स्थाणुकण्ठे जहि गदमगदस्यायमेवोपयोगः।
जातश्चक्रिन्विचक्रो दितिज इति मुरांस्त्यक्तहेतीन्ब्रुवन्त्या
व्रीडां व्यापादितारिर्जयति विजयया नीयमाना भवानी॥ २१॥

विजयया देव्याः सख्या व्यापादितारिर्भवानी व्रीडां नीयमाना जयति। किंभूतया। त्यक्तहेतीन्सुरानिति ब्रुवन्त्या। इतीति किम्। हे शक्र, ईदृग्लज्जाजननं कर्म युद्धात्पलायनं कृत्वा अनशनेऽभोजनविषयेऽसून्प्राणान्मा विहासीर्मा त्यज। अथ च अशनिवेज्ञ तद्रहितोऽनशनिस्तत्संबोधने हे अनशने त्यक्तवज्र। युद्धात्पलायनं लज्जाजननम्। यो हि लज्जाजननं कर्म करोति सोऽनशनेन प्राणांस्त्यजतीति भावः। हे वित्तेश कुबेर, स्थाणुकण्ठे गदं रोगं जहि। यतो भवानगदो गदारहित औषधरूपश्च। भवानौषधरूपः संवृत्तोऽतो भवान्मित्रस्य शिवस्य कण्ठरोगं दूरी कुर्विति भावः। हे चक्रिन् विष्णो, दितिजो महिषो विचक्रः सैन्यरहितो जातः। यथा भवांश्चक्रोभूत्वापि त्यक्तचक्रस्तथा महिषोऽपि विचक्र इति भावः॥

देयाद्वो वाञ्छितानि च्छलमयमहिषोत्पेषरोषानुषङ्गा-
न्नीतः पातालकुक्षिं हतभुवनभयो भद्रकाल्याः स पादः।
यः प्रादक्षिण्यकाङ्क्षावलयितवपुषा वन्द्यमानो मुहूर्तं
शेषेणेवेन्दुकान्तोपलरचितमहानूपुराभोगलक्ष्मीः॥ २२॥

छलमयस्य महिषस्योत्पेष उत्पेषणं तेन यो रोषानुषङ्गः क्रोधसंबन्धस्तस्मात्पातालकुक्षिं नीतो हतभुवनभयो भद्रकाल्याः स पादो वो वाञ्छितानि देयात्। यः पाद इन्दुकान्तोपलरचितमहानूपुराभोगलक्ष्मीश्चन्द्रकान्तमणिघटितनूपुरशोभमानो यः पादः प्रादक्षिण्यवाञ्छया वलयीकृतशरीरेण शेषेण मुहूर्तं वन्द्यमान इव भाति। देवीपादस्य क्षणं पाताले स्थितस्य चन्द्रकान्तनूपुरे शेषकायोत्प्रेक्षणम्॥

शूलं तूलं नु गाढं प्रहर हर हृषीकेश केशोऽपि वक्र-
श्चक्रेणाकारि किं मे पविरपतति नहि त्वाष्ट्रशत्रो धुराष्ट्रम्।

१. 'अर्धेन'. २. 'लज्जाम्'. ३. 'रोषा-'. ४. 'कृतपरमभयो'.

पाशाः केशाब्जनालान्यनल न लभसे भातुमित्यात्तदर्पं
जल्पन्देवान्दिवौकोरिपुरवधि यया सास्तु शान्त्यै शिवा वः ॥२३॥

आत्तदर्पं गृहीतमदं यथा स्यात्तथा इति देवाञ्जल्पन्दिवौकोरिपुर्देवशत्रुर्महिषो यया अवधि हतः सा शिवा वः शान्त्यै अस्तु । इतीति किम् । हे हर, शूलं अर्थात्तव तूलं नु कर्पासतुल्यं किमु, अतस्त्वं गाढं प्रहर । हे हृषीकेश, तव चक्रेण किं मम केशोऽपि वक्रीकृतः । अपि तु न । हे त्वाष्ट्रशत्रो इन्द्र, तव पविर्वज्रं सुराष्ट्रं स्वर्गदेशं नावति न रक्षति । हे केश जलेश वरुण, तव पाशा अब्जनालानि कमलनालवदतिमृदवः । हे अनल, भातुं न लभसे । मत्प्रभया हतस्त्वमित्यर्थः ॥

शार्ङ्गिन्बाणं विमुञ्च भ्रमसि बलिरमौ संयतः केन बाणो
गोत्रारे हन्म्यहं ते रिपुममररिपुस्त्वेष गोत्रस्य शत्रुः ।
दैत्या व्यापाद्यतां द्रागज इव महिषो हन्यते मन्महेऽद्ये-
त्युत्प्रास्योमा पुरस्तादनु दनुजतनुं मृद्नती त्रायतां वः ॥ २४ ॥

पुरस्तात्पूर्वमित्युत्प्रास्योपहस्य । अर्थाद्देवान् । अनु पश्चाद्दनुजतनुं महिषदेहं मृद्नती चूर्णयन्ती उमा वस्त्रायताम् । इतीति किम् । हे शार्ङ्गिन् विष्णो, बाणं विमुञ्च । बाणं तन्नामानं दैत्यं शरं च । असौ बलिरिति भ्रमसि भ्रान्तिं करोषि । बाणः केन संयतः । त्वं बलिबन्धनकर्ता अतस्तव बाणमोक्षो युक्त इति भावः । हे गोत्रारे इन्द्र, ते रिपुमहं हन्मि । एषोऽमररिपुर्महिषो गोत्रस्य स्वकुलस्य शत्रुः । यतो देवा दैत्याश्च काश्यपेयाः । अतोऽयमपि गोत्रारिः, तस्माद्गोत्रारिद्वयं नोचितमित्येनं तव रिपुं हन्मीति भावः । अत एव दैत्या अपि शास्यन्ते—हे दैत्याः, मन्महे मदीयोत्सवेऽज इव च्छाग इव महिषो हन्यते, अतोऽयं महिषो द्राक्शीघ्रं व्यापाद्यतामद्य । देवीपर्वणि च्छागो हन्यत एव ॥

स्पर्धावर्धितविन्ध्यदुर्भरभरव्यस्ताद्विहायस्तलं
हस्तादुत्पतिता प्रसादयतु वः कृत्यानि कात्यायनी ।
यां शूलामिव देवदारुघटितां स्कन्धेन मोहान्धधी-
र्वध्योद्देशमशेषबान्धवकुलध्वंसाय कंसोऽनयत् ॥ २५ ॥

स्पर्धया पराभवेच्छया वर्धितो यो विन्ध्यस्तद्दुर्भरो यो भरस्तेन व्यस्ताद्विकलाद्धस्तात् । अर्थात्कंसस्य । विहायस्तलं गगनतलमुत्पतिता कात्यायनी वः कृत्यानि कार्याणि प्रसादयतु प्रसन्नानि निर्विघ्नानि करोतु । यां कात्यायनीमशेषबान्धवकुलध्वंसाय मोहान्धधीः कंसो देवदारुघटितां शूलामिव स्कन्धेन वध्योद्देशं वध्यप्रदेशमनयत् ॥

---

१. 'पार्वती पातु सा वः'. २. 'असुररिपुः'.

तूर्णं तोषात्तुराषाट्प्रभृतिषु शमिते शात्रवे स्तोत्रकृत्सु
क्लान्तेवोपेत्य पत्युस्ततभुजयुगलस्यालमालम्बनाय ।
देहार्धे गेहबुद्धिं प्रतिविहितवती लज्जयालीय काली
कृच्छ्रं वोऽनिच्छयैवापातितघनतराश्लेषसौख्या विहन्तु ॥ २६ ॥

पत्युर्देहार्धे गेहबुद्धिं प्रतिविहितवती काली वः कृच्छ्रं विहन्तु । किं कृत्वा । शात्रवे महिषे शमिते तुराषाट्प्रभृतिषु इन्द्रादिषु तूर्णं तोषात्स्तोत्रकृत्सु सत्सु लज्जयालीय लीना भूत्वा । महान्तो हि प्रत्यक्षप्रशंसया सुतरां लज्जन्ते । कथंभूतस्य पत्युः । आलम्बनायालं ततभुजयुगलस्य । अत एवानिच्छयैव इच्छां विनैव आपातितघनतराश्लेषसौख्या प्राप्तदृढालिङ्गनसुखा । उत्प्रेक्षते—क्लान्तेवोपेत्य । यो हि क्लान्तो भवति स क्वाप्यालम्बनमिच्छति ॥

आस्तां मुग्धेऽर्धचन्द्रः क्षिप सुरसरितं या सपत्नी भवत्याः
क्रीडा द्वाभ्यां विमुञ्चापरमलममुनैकेन मे पाशकेन ।
शूलं प्रागेव लग्नं शिरसि यदबला युध्यसेऽव्याद्विदग्धं
सोत्प्रासालापपातैरिति दनुजमुमा निर्दहन्ती दृशा वः ॥ २७ ॥

इतीत्थं सोत्प्रासाः सनर्मस्मिता ये आलापास्तेषां पातैर्विदग्धं चतुरं दनुजं महिषं दृशा निर्दहन्ती उमा वोऽव्यात् । इतीति किम् । हे मुग्धे, अर्धचन्द्रो बाणविशेषश्चन्द्रार्धं च आस्तां तिष्ठतु । अनेन तव भर्तृमूर्धस्थितेनार्धचन्द्रेण किमपराद्धं वराकेणेति भावः । सुरसरितं गङ्गां क्षिप या भवत्याः सपत्नी वर्तते । अस्थानकोपवती त्वमत एव मुग्धापदेन संबोध्यसे । अमुनैकेन पाशकेनाल्पपाशेन द्यूतसाधनेनाक्षेण मे चालम् । अपरं द्वितीयमपि पाशकं मुञ्च । यतः क्रीडा द्वाभ्यां पाशकाभ्यां भवति । एकेन क्रीडितुं न शक्यते । शूलमायुधं व्याधिश्च । शूलं किमिति त्यजसि । मम शिरसि प्रागेव शूलं रोगविशेषो लग्नम् । यतो मया सहाबला योऽपि युध्यसे । इदमकीर्तिरूपं शूलम् । यद्वा अहं सबलः ससैन्यः, त्वं पुनरबला एकाकिनीति । इदमकीर्तिरूपं शूलं मम शिरसि लग्नमेव ॥

वक्त्राणां विक्लवः किं वहसि बत रुचं स्कन्द षण्णां विषण्णा-
मन्याः षण्मातरस्ते भव भव सकलस्त्वं शरीरार्धलब्ध्या ।
जिह्वां हन्म्यद्य कालीमिति सममसुभिः कण्ठतो निर्गता गी-
र्गीर्वाणारेर्यथेच्छामृदुपदमृदितस्याद्रिजा सावताद्वः ॥ २८ ॥

यथेच्छया मृदुपदमृदितस्य कोमलचरणन्यासचूर्णीकृतस्य गीर्वाणारेर्महिषस्य क-

१. 'रोषात्'. २. 'यथेच्छामृदु-'.

ष्ठतोऽसुभिः प्राणैः सममिति गीर्वाङ् निःसृता सा अद्रिजा पार्वती वोऽव्यात् । इतीति किम् । हे स्कन्द, त्वं विक्लवः सन् षण्णां वक्त्राणां रुचं कान्तिं विषण्णां बत खेदे किं वहसि यतोऽन्याः कृत्तिकारूपाः षट् मातरस्ते तव सन्ति । पार्वत्यां तव मातरि हतायां तास्वेव मातृस्नेहं बधान विषादं मा कृथा इति भावः । अन्यच्च हे भव शिव, त्वं शरीरार्धलब्ध्या सकलः समग्रो भव । पार्वत्या भवच्छरीरार्धं हृतमस्ति, अधुना तन्नाशात्पुनरपि भवतः संपूर्णशरीरलाभः स्यात् । अथाह जिह्मां दुष्टाशयां कालीं हन्मि । इयं कुटिला काली च, त्वं पुनः सरलो गौरश्चेति न युवयोर्योगः साधीयान्, अतो घातयाम्येतामिति भावः ॥

गाहस्व व्योममार्गं गतमहिषभयैर्ब्रध्न विश्रब्धमश्वैः
शृङ्गाभ्यां विश्वकर्मन्घटयामि न नवं शार्ङ्गिणः शार्ङ्गमन्यत् ।
ऐभी त्वाङ्क्निष्ठुरेयं बिभृहि मृदुमिमामीश्वरेत्यात्तहासा
गौरी वोऽव्यात्क्षतारिः स्वचरणगरिमग्रस्तगीर्वाणगर्वा ॥ २९ ॥

क्षतारिर्नाशितशत्रुः, स्वचरणगरिमग्रस्तगीर्वाणगर्वा स्वपादगौरवनाशितदेवाहंकारा । यत्कर्म देवैः शस्त्रास्त्रशक्तिमद्भिर्न कृतं तद्देव्या स्वचरणव्यापारमात्रेणैव कृतमिति भावः । अथ च इत्यात्तहासा इत्यमुना प्रकारेण कृतपरिहासा गौरी वोऽव्यात् । इतीति किम् । हे ब्रध्न सूर्य, त्वं गतमहिषभयैरश्वैर्विश्रब्धं यथा स्यात्तथा व्योममार्गमाकाशपथं गाहस्व । हे विश्वकर्मन् देवशिल्पिन्, एताभ्यां महिषस्य शृङ्गाभ्यां शार्ङ्गिणो विष्णोर्नवमन्यच्छार्ङ्गं धनुर्न घटयामि । किमनेन पुराणधनुषेति काकुः । हे ईश्वर, इयमैभी त्वग्गजचर्म निष्ठुरा कठोरा इमां अर्थान्माहिषीं त्वचं बिभृहि धारय ॥

क्षिप्तो बाणः कृतस्तैस्त्रिकविनतिततो निर्वलिर्मध्यदेशः
प्रह्लादो नूपुरस्य क्षतरिपुशिरसः पादपातैर्दिशोऽगात् ।
सङ्ग्रामे संनताङ्गि व्यथयसि महिषं नैकमन्यानपि त्वं
ये युध्यन्तेऽत्र नैवेत्यवतु पतिपरीहासमहृष्टा शिवा वः ॥ ३० ॥

इति पतिपरीहासहृष्टा शिवा वः पातु । इतीति किम् । हे संनताङ्गि, त्वं सङ्ग्रामे एकं महिषमेव व्यथयसीति न, अन्यानपि येऽत्र न युध्यन्ते तानपि व्यथयसि । कथम् । बाणः शरः क्षिप्तः कृतः, पक्षे बाणोऽसुरविशेषः क्षिप्तो गलहस्तितः । ते त्रिकविनतिततो मध्यदेशो निर्वलिस्त्रिवलिरहितः कृतः । बाणक्षेपणसमये हि शरीरस्योर्ध्वोत्तम्भनान्मध्यदेशो निर्वलिर्जात इति भावः । पक्षे बलिर्दानवविशेषः । क्षतरिपुशिरसो नूपुरस्य पादपातैः प्रह्लादो ध्वनिर्दिशोऽगात् । नूपुरशब्दो दिगन्तगामी जात इत्यर्थः । पक्षे प्रह्लादोऽसुरविशेषः । अत्र युद्धे बाणबलिप्रह्लादा न सन्ति भवती तानपि व्यथयतीति परीहासः ॥

---

१. 'संतता वो'. २. 'विद्यन्ते'. ३. 'तुष्य भवानी'.

मेरौ मे रौद्रशृङ्गक्षतवपुषि रुषो नैव नीता नदीना
भर्तारो रिक्ततां यत्तदपि हितमभून्निःसपत्नोऽत्र कोऽपि।
एतन्नो मृष्यते यन्महिष कलुषिता स्वर्धुनी मूर्ध्नि मान्या
शंभोर्भिन्द्याद्धमन्ती पतिमिति शमितारातिरीतीरुमा वः॥ ३१॥

शमितारातिः पार्वती पतिमिति हमन्ती वः ईतीरुपद्रवान्भिन्द्यात्। इतीति किम्। हे महिष, मेरौ रौद्रशृङ्गक्षतवपुषि सति मे रुषो नैव। त्वया शृङ्गाभ्यां मेरुपर्वते क्षते मम क्रोधो नास्ति। अन्यच्च यन्नदीनां भर्तारः समुद्रा रिक्ततां नीतास्तदपि हितमभूत्। तत्रापि मे रुषो नैव। अत्र कोऽपि निःसपत्नो जातः। समुद्रो महादेवश्च गङ्गापतिः। समुद्ररिक्तीकरणे तु महादेवस्य निःसपत्नं गङ्गापतित्वं जातमिति भावः। एतत्तु नो मृष्यते इदं न क्षम्यते यच्छंभोर्मूर्ध्नि मान्या अर्थाच्छंभोरेव स्वर्धुनी गङ्गा कलुषिता कलुषीकृता। सेयं परपुरुषसङ्गात्कलुषा जातेति भावः॥

सद्यः साधितसाध्यमुद्धृतवती शूलं शिवा पातु वः
पादप्रान्तविपक्त एव महिषाकारे सुरद्वेषिणि।
दिष्ट्या देव वृषध्वजो यदि भवानेषापि नः स्वामिनी
संजाता महिषध्वजेति जयया केलौ कृतेऽर्धस्मिता॥ ३२॥

पादप्रान्ते महिषाकारे सुरद्वेषिणि विपक्ते एव साधितसाध्यं कृतकार्यं शूलमुद्धृतवती, अथ च जयया इति केलौ परिहासे कृते सति अर्धस्मिता शिवा वः पातु। इतीति किम्। हे देव, यदि भवान्वृषध्वजः, एषापि नः स्वामिनी पार्वती महिषध्वजा दिष्ट्या संजाता। साधु युवयोर्योगो यद्द्वावपि पशुध्वजौ। त्वं वृषारूढः, इयं पुनर्महिषारूढेति हास्यम्॥

विद्राणेन्द्राणि किं त्वं द्रविणददयिते पश्य संख्यं स्वसख्याः
स्वाहे स्वस्था स्वभर्तर्यमृतभुजि मुधा रोहिणी रोदितीव।
लक्ष्मि श्रीवत्सलक्ष्मोरसि वससि पुरेत्यार्तमाश्वासयन्त्यां
स्वर्गस्त्रैणं जयायां जयति हतरिपोर्ह्रीपितं हैमवत्याः॥ ३३॥

स्वर्गस्त्रैणं स्वर्गस्त्रीसमूहं जयायामित्याश्वासयन्त्यां सत्यां हैमवत्या ह्रेपितं लज्जितं जयति। कथंभूतं स्वर्गस्त्रैणम्। आर्तम्। कथंभूतायाः हैमवत्याः। हतरिपोः। इतीति किम्। हे इन्द्राणि, त्वं किं विद्राणा। हे द्रविणददयिते कुबेरपत्नि, स्वसख्याः पार्वत्याः संख्यं युद्धं पश्य। हे स्वाहे अग्निदयिते, त्वं स्वभर्तर्यग्नौ अमृतभुजि सति स्वस्था भव। महिषे हतेऽधुना सुखेन ब्राह्मणैर्हूयते इति भावः। रोहिणी चन्द्रपत्नी मुधा वृथा रोदि-

१. 'प्रीतप्रान्त-'. २. 'अमृतभुजि'.

नीव । असंजातक्षतिरिति भावः । हे लक्ष्मि श्रीवत्सलक्ष्मोरसि विष्णुवक्षःस्थले पुरा व-मसि वत्स्यसि । इति सर्वे देवस्त्रीणामाश्वासनमाकर्ण्य देवी लज्जितेति भावः ॥

निर्वाणः किं त्वमेको रणशिरसि शिखिञ्शार्ङ्गधन्वापि विध्यं-
स्तत्ते धैर्यं क्व यातं जहिहि जलपते दीनतां त्वं नदीनः ।
शक्तो नो शत्रुभङ्गे भयपिशुन सुनासीर नासीरधूलि-
र्धिग्यामि क्वेति जल्पन्रिपुरवधि यया पार्वती पातु सा वः ॥३४॥

इति जल्पन्रिपुर्महिषो ययावधि हतः सा पार्वती वः पातु । इतीति किम् । हे शि-खिन् वह्ने, किं त्वमेको रणशिरसि निर्वाणः शान्तः किं तु शार्ङ्गधन्वा विष्णुरपि विध्य-न्शरान्मुञ्चन्निर्बाणो बाणरहितो जातः । श्लेषे बवयोरभेदः । हे जलपते वरुण, तत्ते धैर्यं क्व यातं क्व गतम् । दीनतां जहिहि त्यज, यतस्त्वं न दीनः दीनो न भवसि, अथ च नदीनामिनः प्रभुर्नदीनः । हे भयपिशुन भयसूचक सुनासीर इन्द्र, नासीरधूलिः सेना-मुखोत्थधूलिः शत्रुभङ्गे नो शक्तः, धिक् त्वं क्व यासि । यथा पूर्वं तव सेनामुखोत्थधूलि-मात्रमेव विलोक्य शत्रवः पलायन्ते स्म न तथाधुनेति भावः । यत्र यास्यसि तत्रैव हन्यसे ॥

नन्दिन्नानन्ददो मे तव मुरजमृदुः संप्रहारे प्रहारः
किं दन्ते रोम्णि रुग्णे व्रजसि गजमुख त्वं वशीभूत एव ।
निघ्नन्निघ्नन्निदानीं द्युजनमिह महाकाल एकोऽस्मि नान्यः
कन्याद्रेर्दैत्यमित्थं प्रमथपरिभवे मृद्नती त्रायतां वः ॥ ३५ ॥

इत्थं प्रमथानां पार्षदानां परिभवे सति दैत्यं मृद्नती मर्दयन्ती अद्रेः कन्या पार्वती वस्त्रायताम् । इत्थं कथम् । हे नन्दिन्, संप्रहारे युद्धे तव प्रहारो मे आनन्ददः सुख-प्रदः । यतो मुरजमृदुर्मृदङ्गध्वनिकोमलः । हे गजमुख गणेश, रोम्णि रोमतुल्ये दन्ते रुग्णे भग्ने सति किं व्रजसि । यतस्त्वं पलायितोऽपि वशीभूत एव । लम्बोदरत्वाद्दूरं पलायनं कर्तुमशक्त इति भावः । द्युजनमिन्द्रादिं निघ्नन्निघ्नन्निनरां मारयन्नहमेवैको महा-कालः । अन्यो नास्ति ॥

वज्रं मङ्क्षो मरुत्वानरि हरिरुरसः शूलमीशः शिरस्तो
दण्डं तुण्डात्कृतान्तस्त्वरितगतिगदामस्थितोऽर्थाधिनाथः ।
प्रापन्यत्पादपिष्टे द्विषि महिषवपुष्यक्लमानि भूयो-
ऽप्यायूंषीवायुधानि द्युवसतय इति स्तादुमा सा श्रिये वः ॥३६॥

महिषवपुषि द्विषि यत्पादपिष्टे सति द्युवसतय इन्द्रादयोऽक्लमान्यायुधान्यायूंषीव भूयोऽपीति प्रापन्प्राप्तवन्तः सा उमा वः श्रियेऽस्तु । पूर्वं महिषयुद्धे सर्वेषामायुधानि

तच्छरीरे मग्नान्यासन्, अधुना देव्या महिषे पिष्टे पुनरपि तैः स्वायुधानि प्राप्तानि तद्धन्महिषविनाशादायूंष्यपि लब्धानि, अन्यथा तु जीवनं संदिग्धमेवासीदिति भावः। इति कथम्। मघः मज्जधातोः सकाशादिन्द्रो वज्रं प्रापत्। अरि चक्रं हरिस्तस्योरसः प्रापत्। ईशः शिवः शिरस्तः शूलमापत्। कृतान्तो यमस्तुण्डान्मुखाद्दण्डं प्रापत्। अर्थाधिनाथः कुबेरोऽस्थितस्त्वरितनिर्गतिशालिनीं गदां प्रापत्॥

दृष्टावासक्तदृष्टिः प्रथममिव तथा संमुखीनाभिमुख्ये
स्मेरा हासप्रगल्भे प्रियवचसि कृतश्रोत्रपेयाधिकोक्तिः।
उद्युक्ता नर्मकर्मण्यवतु पशुपतौ पूर्ववत्पार्वती वः
कुर्वाणा सर्वमीपद्विनिहितचरणालक्तकेव क्षतारिः॥ ३७॥

पशुपतौ महिषे सर्वमीषदाभासमात्रं कुर्वाणा पार्वती वोऽवतु रक्षतु। कथंभूता। नर्मकर्मणि सङ्ग्रामाख्ये उद्युक्ता। यथा पशुपतौ शिवे सर्वं नर्मकर्माकरोत्तथा महिषे किंतु ईषत्। दृष्टौ अर्थान्महिषस्यासक्तदृष्टिः। तथा आभिमुख्ये प्रथममिव संमुखीना। हासप्रगल्भे स्मेरा। प्रियवचसि कृतश्रोत्रपेयाधिकोक्तिः। कथंभूता। क्षतारिः अत एव विनिहितचरणालक्तकेव। पूर्ववद्यथा शिवे नर्मकर्माकरोत्तद्वदित्यर्थः॥

दैत्यो दोर्दर्पशाली नहि महिषवपुः कल्पनीयाभ्युपायो
वायो वारीश विष्णो वृषगमन वृषन्किं विषादो वृथैव।
बध्नीत ब्रध्नमिश्राः कवचमचकिताश्चित्रभानो दहारी-
नेवं देवाञ्जयोक्ते जयति हृतरिपोर्दर्पितं हैमवत्याः॥ ३८॥

देवान्प्रति जयया एवमुक्ते सति हृतरिपोर्हैमवत्याः पार्वत्या दर्पितं लज्जितं जयति। एवं कथम्। हे वायो, हे वारीश वरुण, हे विष्णो, हे वृषगमन शिव, हे वृषन् इन्द्र, महिषवपुर्दैत्यो दोर्दर्पशाली अतो न कल्पनीयाभ्युपायः सामादिप्रयोगसाध्यः। किं वृथैव विषादः क्रियते। तस्माद्ब्रध्नमिश्राः सूर्यसहिता यूयमचकिताः सन्तः कवचं बध्नीत संनद्धा भवत। हे चित्रभानो वह्ने, अरीन्दह भस्मीकुरु॥

आ व्योमव्यापि सीम्नां वनमतिगहनं गाहमानो भुजाना-
मर्चिर्मोक्षेण मूर्छन्दवदहनरुचां लोचनानां त्रयस्य।
यस्या निर्मज्जमज्जच्चरणभरनतो गां विभिद्य प्रविष्टः
पातालं पङ्कपातोन्मुख इव माहिषः स्तादुमा सा श्रिये वः॥ ३९॥

यस्या निर्मज्जमज्जच्चरणभरनतो महिषो गां भुवं विभिद्य पङ्कपातोन्मुख इव पातालं

---

१. 'कृतमुखविकृतिः'. २. 'पशुपतेः'. ३. 'वृहत्'. ४. 'हृतरिपुर्दर्पितस्वर्निकाया'. ५. 'प्रवेश'. ६. 'सा शिवास्तु'.

प्रविष्टः सा उमा वः श्रिये स्तात् । निर्गता मज्जा यस्मादसौ निर्मज्जः स चासौ चरणभरनतश्चेति । कथंभूतः । आ व्योम व्यापिसीम्नां भुजानामर्थाद्देव्या अतिगहनं वनं गाहमानः । पुनः कथंभूतः । दवदहनरुचां लोचनानां त्रयस्यार्चिर्मोक्षेण मूर्छन् । यथा वने भ्राम्यन्दावाग्नितप्तोऽन्यो महिषः कर्दमपातोन्मुखो गर्ते प्रविशति तथायमपि देवीलोचनार्चिर्भिर्दन्दह्यमानः पातालं प्रविष्टः ॥

नीते निर्व्याजदीर्घामघवति मघवद्वज्रलज्जानिदाने
निद्रां द्रागेव देवद्विषि मुषितरुषः संस्मरन्त्याः स्वभावम् ।
देव्या दृग्भ्यस्तिसृभ्यस्त्रय इव गलिता राशयो रक्तताया-
स्त्रायन्तां वस्त्रिशूलक्षतकुहरभुवो लोहिताम्भःसमुद्राः ॥ ४० ॥

त्रिशूलक्षतकुहरभुवो लोहिताम्भःसमुद्रा रुधिररूपजलसमुद्रा वस्त्रायन्ताम् । उत्प्रेक्षते—मघवद्वज्रलज्जानिदाने अघवति पापिनि । देवद्विषि महिषे द्रागेव निर्व्याजदीर्घां निद्रां मरणं नीते सति मुषितरुषो निवृत्तकोपाया अत एव स्वभावं संस्मरन्त्या देव्यास्तिसृभ्यो दृग्भ्यो नेत्रेभ्यस्त्रयो रक्तताया आरुण्यस्य राशय इव गलिताः । क्रोधाभावाद्देव्या नेत्राणां रक्तत्वं निवृत्तं तदेव रुधिरसमुद्रत्वेन संभावितम् ॥

काली कल्पान्तकालाकुलमिव सकलं लोकमालोक्य पूर्वं
पश्चाच्छ्लिष्टे विषाणे विदितादितिसुता लोहिता मत्सरेण ।
पादोत्पिष्टे परासौ निपतति महिषे प्राक्स्वभावेन गौरी
गौरी वः पातु पत्युः प्रतिनयनमिवाविष्कृतान्योन्यरूपा ॥ ४१ ॥

पत्युः शिवस्य प्रतिनयनं लोचनान्तरमिव आविष्कृतान्योन्यरूपा गौरी वः पातु । आविष्कृतमन्योन्यस्य रूपं यया । स्वस्य रूपं भर्तृलोचनस्य, भर्तृलोचनरूपमात्मन इति भावः । किंभूता । महिषोपप्लवेन कल्पान्तकालाकुलमिव सकलं लोकमालोक्य पूर्वं काली कृष्णा जाता । पश्चादनन्तरं विदितादितिसुता ज्ञातदनुजा मत्सरेणामर्षेण लोहिता रक्ता जाता । क्व सति । विषाणे शृङ्गे अर्थान्महिषस्य श्लिष्टे लग्ने सति । पुनः । महिषे पादोत्पिष्टे अत एव परासौ गतप्राणे निपतति सति प्राक्स्वभावेन पूर्वप्रकृत्या गौरी अवदाता जाता । एवं त्रिरूपा देवी त्रिभिर्महादेवनयनैस्तुल्येति भावः ॥

गम्यं नाग्नेर्न चेन्दोः सपदि दिनकृतां द्वादशानामसह्यं
शक्रस्याक्ष्णां सहस्रं सह सुरसदसा सादयन्तं प्रसह्य ।

---

१. 'मुषितमिव:'. २. 'शोणितस्य'. ३. 'रक्षन्तु त्वाम्'. ४. 'प्रतिनयन इवाविष्कृतान्योन्यभावा'. ५. 'जितेन्दुम्'. ६. 'अशक्यम्'.

उत्पातोग्रान्धकारागममिव महिषं निघ्नती शर्म दिश्या-
देवी वो वामपादाम्बुरुहनखमयैः पञ्चभिश्चन्द्रमोभिः ॥ ४२ ॥

वामपादकमलनखरूपैः पञ्चभिश्चन्द्रैरुत्पातोग्रान्धकारागममिव महिषं निघ्नती देवी वः शर्म दिश्यात्। कथंभूतम्। अमने गम्यं न तिरस्करणीयम्। इन्दोश्चन्द्रस्य च न गम्यम्। सर्पादि द्वादशानां दिनकृतामादित्यानामसह्यम्। सुरसदसा देवसभया सह शक्रस्याक्ष्णां सहस्रं प्रसह्य सादयन्तं म्लानयन्तम्॥

दत्त्वा स्थूलान्त्रमालावलिविघसहमद्धस्मरप्रेतकान्तं
कात्यायन्यात्मनैव त्रिदशरिपुमहादैत्यदेहोपहारम्।
विश्रान्त्यै पातु युष्मान्क्षणमुपरि धृतं केसरिस्कन्धभित्ते-
र्बिभ्रत्तत्केसरालीमलिमुखररणन्नूपुरं पादपद्मम् ॥ ४३ ॥

कात्यायन्या केसरिस्कन्धभित्तेरुपरि विश्रान्त्यै क्षणं धृतं पादपद्मं युष्मान्पातु। कथंभूतं पादपद्मम्। तत्केसराली: सिंहस्कन्धसटा बिभ्रत्। पुनः। अलिवन्मुखरो वाचालो रणन्नूपुरो यत्र तत्। पद्मे हि केसराश्रेसराश्च भाव्यम्। किं कृत्वा। आत्मनैव त्रिदशरिपुमहादैत्यदेहोपहारं दत्त्वा। कथंभूतमुपहारम्। स्थूलान्त्रमालावलिः स एव विघसो भोजनशेषस्तेन हसन्त्यो घस्मराः प्रेतकान्ता यत्र। निःसारा आन्त्रावलिरेवास्मदर्थमवशेषिता देव्येति प्रेतकान्तानां हासकारणम्॥

कोपेनेवारुणत्वं दधदधिकतरालक्ष्यलाक्षारसश्रीः
श्लिष्यच्छृङ्गाग्रकोणक्वणितमणितुलाकोटिहुंकारगर्भः।
प्रत्यासन्नात्ममृत्युप्रतिभयममुरैरीक्षितो हन्त्वरीन्वः
पादो देव्याः कृतान्तोऽपर इव महिषस्योपरिष्टान्निविष्टः ॥४४॥

महिषस्योपरिष्टान्निविष्टोऽपरः कृतान्तो यम इव देव्याः पादो वोऽरीन्हन्तु। कथंभूतः पादः। कोपेनेवारुणत्वं दधत्। अत एवाधिकतरालक्ष्यलाक्षारसश्रीः। पुनः कीदृशः। श्लिष्यच्छृङ्गाग्रमेव कोणो वीणादिवादनकीलस्तेन क्वणिता या मणितुलाकोटिर्मणिनूपुरं स एव हुंकारो गर्भे यस्य। पुनः। प्रत्यासन्नात्ममृत्युप्रतिभयं यथा स्यादेवमसुरैर्वीक्षितः। यमोऽपि कोपारुणो हुंकारं कुर्वन्महिषोपरिस्थित आसन्नमृत्युभीतैः पुरुषैर्वीक्ष्यते॥

आहन्तुं नीयमाना भरविधुरभुजस्रंसमानोभयांसं
कंसेनैनांसि सा वो हरतु हरियशोरक्षणाय क्षमापि।
प्राक्प्राणानस्य नास्यद्गगनमुदपतद्गोचरं या शिलायाः
संप्राप्यागामिविन्ध्याचलशिखरशिलावासयोगोद्यतेव ॥ ४५ ॥

१. 'हृतम्'. २. 'भविकमलम्'. ३. 'आघातम्'.

मरविधुरभुजक्षंसमानोभयांसं यथा स्यादेवं कंसेनाहन्तुं नीयमाना क्षमापि समर्थापि हरियशोरक्षणायास्य कंसस्य प्राणान्प्राक्पूर्वं नास्यन्नाहरत्, किं तु शिलाया गोचरं विषयं प्राप्य आगामिविन्ध्याचलशिखरशिलावासयोगोद्यतेव गगनमुदपतत्, सा व एनांसि पापानि हरतु ॥

साम्ना नाम्नाययोनेर्धृतिमकृत हरेर्नापि चक्रेण भेदा-
त्सेन्द्रस्यैरावणस्याप्युपरि कलुषितः केवलं दानवृष्ट्या ।
दान्तो दण्डेन मृत्योर्न च विफलयथोक्ताभ्युपायो हतोऽरि-
र्येनोपायः स पादः सुखयतु भवतः पञ्चमश्चण्डिकायाः ॥ ४६ ॥

येन पादेनारिः शत्रुर्महिषो हतः स पञ्चम उपायश्चण्डिकायाः पादो वः सुखयतु । यो महिष आम्नाययोनेर्ब्रह्मणः साम्ना । वेदविशेषेण प्रथमोपायेन च धृतिं नाकृत न कृतवान् । हरेश्चक्रेण भेदाद्विदारणाद्द्वितीयोपायाच्चापि धृतिं परितोषं न कृतवान् । सेन्द्रस्यैरावतस्य दानवृष्ट्या मदवर्षणेन तृतीयोपायेन च केवलमुपरिकलुषितो मलिनत्वं गतः, अथवा क्रोधं गतो न तु तुष्टः । न च मृत्योर्यमस्य दण्डेनायुधेन चतुर्थोपायेन च दान्तो दमितः । अत एव विफलयथोक्ताभ्युपायः । निष्फलीकृतसामाद्युपायः ॥

भर्ता कर्ता त्रिलोक्यास्त्रिपुरवधकृती पश्यति त्र्यक्ष एष
क्व स्त्री क्वायोधनेच्छा न तु सदृशमिदं प्रस्तुतं किं मयेति ।
मत्वा सव्याजसव्येतरचरणचलाङ्गुष्ठकोणाभिमृष्टं
सद्यो या लज्जितेवासुरपतिमवधीत्पार्वती पातु सा वः ॥ ४७ ॥

सव्याजं यथा स्यादेवं सव्येतरचरणस्य वामपादस्य चलाङ्गुष्ठकोणेनाभिमृष्टमसुरपतिं सद्यो यावधीत्सा पार्वती वः पातु । या इति मत्वा लज्जितेव । इतीति किम् । त्रिलोक्याः कर्ता त्रिपुरवधकृती एष त्र्यक्षः शिवो मम भर्ता पश्यति । स्त्री क्व, आयोधनेच्छा क्व । न त्विदं सदृशमुचितम् । मया किं प्रस्तुतमारब्धम् ॥

वृद्धोक्षो न क्षमस्ते भवतु भव भवद्वाह एषोऽधुनेति
क्षिप्तः पादेन देवं प्रति झटिति यया केलिकान्तं विहस्य ।
दन्तज्योत्स्नावितानैरतनुभिरतनुर्न्यक्कृतार्धेन्दुभाभि-
र्गौरो गौरेव जातः क्षणमिव महिषः सावतादम्बिका वः ॥ ४८ ॥

हे भव शिव, ते वृद्धोक्षो वृद्धवृषो न क्षमः, अधुना एष महिषो भवद्वाहो भवत्विति केलिकान्तं यथा स्यादेवं विहस्य देवं शिवं प्रति झटिति यया महिषः पादेन

१. 'पुलकितः'. २. 'नुदतु भवदघम्'. ३. 'चरणनखाङ्गुष्ठकोणेन पिष्टम्'. ४. 'अलभत तनुभिः'.

श्रितः सा अम्बिका वोऽवतात्। कथंभूतो महिषः। अतनुभिर्न्यक्कृतार्धेन्दुभाभिर्दन्तज्योत्स्नावितानैर्गौरः शुभ्रः, अतः क्षणमिव क्षणमात्रं गौरेव वृष एव जातः॥

प्राक्कामं दहता कृतः परिभवो येन त्रिसंध्यानतैः
सेर्ष्या वोऽवतु चण्डिका चरणयोः स्वं पातयन्ती पतिम्।
कुर्वत्याभ्यधिकं कृते प्रतिकृतं मुक्तेन मौलौ मुहु-
र्बाष्पेणाहितकज्जलेन लिखितं स्वं नाम चन्द्रे यया॥ ४९॥

त्रिसंध्यानतैस्त्रिसंध्यानमनैः स्वं पतिं चरणयोः पातयन्ती चण्डिका वोऽवतु। येन पत्या प्राक्पूर्वं कामं दहता परिभवः कृतः। अत एव सेर्ष्या। यया चण्डिकया कृतेऽभ्यधिकं प्रतिकृतं कुर्वत्या आहितकज्जलेन मुहुर्मौलौ मुक्तेन बाष्पेण स्वं नाम चन्द्रे लिखितम्। हरेण गौरीसमक्षं कामो दग्धः, तया च काममुत्पादयन्त्या हरश्चरणयोः पातित इति कृताभ्यधिकं प्रतिकृतम्॥

तुङ्गां शृङ्गाग्रभूमिं श्रितवति मरुतां प्रेतकाये निकाये
कुञ्जौत्सुक्याद्विशत्सु श्रुतिकुहरपुटं द्राक्ककुप्कुञ्जरेषु।
स्मित्वा वः संहतासोर्दशनरुचिकृताकाण्डकैलासभासः
पायात्पृष्ठाधिरूढे स्मरमुपि महिपस्योच्चहासेव देवी॥ ५०॥

स्मित्वा संहतासोर्दशनरुचिकृताकाण्डकैलासभासो महिषस्य प्रेतकाये मरुतां निकाये देवसमूहे शृङ्गाग्रभूमिं श्रितवति सति। ककुप्कुञ्जरेषु दिग्गजेषु कुञ्जौत्सुक्याच्छ्रुतिकुहरपुटं द्राक् विशत्सु सत्सु। स्मरमुपि शिवे पृष्ठाधिरूढे सति उच्चहासेव देवी वः पायात्॥

कृत्वा पातालपङ्के क्षयरयमिलितैकार्णवेच्छावगाहं
दाहान्नेत्रत्रयाग्नेर्विलयनविगलच्छृङ्गशून्योत्तमाङ्गः।
क्रीडाक्रोडाभिशङ्कां विदधदपिहितव्योमसीमा महिम्ना
वीक्ष्य क्षुण्णो ययारिस्तृणमिव महिषः सावतादम्बिका वः॥५१॥

यया महिषोऽरिर्वीक्ष्य तृणमिव क्षुण्णश्चूर्णीकृतः साम्बिका वोऽवतात्। किं कृत्वा। क्षयरयेण प्रलयवेगेन मिलितः स चासावेकार्णवश्च तत्रेच्छयावगाहस्तं पातालपङ्के कृत्वा। यथादिवराहः प्रलयैकार्णवेऽवगाहं कृतवान्, तथानेन पातालपङ्के कृतमिति भावः। कथंभूतः। नेत्रत्रयाग्नेर्दाहाद्विलयनं तेन विगलन्ती ये शृङ्गे ताभ्यां शून्यमुत्तमाङ्गं शिरो यस्य। पुनः कथंभूतः। महिम्ना महत्त्वेनापिहितव्योमसीमाच्छादितगगनप्रान्तः। अत एव क्रीडाक्रोडाभिशङ्कां क्रीडावराहभ्रान्तिं विदधत्कुर्वाणः॥

---

१. 'त्रिसंध्यानतेः'. २. 'नामेव'. ३. 'तुङ्गाः शृङ्गाग्रभूमीः'. ४. 'प्रेतकाये'. ५. 'पातालपङ्कैः क्षयरयमिलितैरर्णवेच्छा–'. ६. 'विलसत्'. ७. 'कालिका वः'.

शूले शैलाविकम्पं न निमिषितमिषौ पट्टिशे साट्टहासं
प्रासे सोत्प्रासमव्याकुलमपि कुलिशे जातशङ्कं न शङ्कौ ।
चक्रेऽवक्रं कृपाणे न कृपणमसुरारातिभिः पात्यमाने
दैत्यं पादेन देवी महिषितवपुषं पिंषती वः पुनातु ॥ १२ ॥

महिषितवपुषं दैत्यं पादेन पिंषती चूर्णयन्ती देवी वः पुनातु । किंभूतम् । असुरारातिभिर्देवैः पात्यमाने शूले शैलवदविकम्पम् । इषौ शरे न निमिषितं निर्निमेषलोचनम् । पट्टिशे साट्टहासम् । प्रासे कुन्ते सोत्प्रासं समनाक्स्मितम् । कुलिशे वज्रेऽपि अव्याकुलम् । शङ्कौ आयुधविशेषे न जातशङ्कम् । चक्रेऽवक्रं सरलमेव स्थितम् । कृपाणे खड्गे न कृपणं न दीनम् । असुरारातिभिः पात्यमाने इति सर्वत्र योज्यम् ॥

चक्रे चक्रस्य नास्या न च खलु परशोर्न क्षुरप्रस्य नासे-
र्यद्वक्रं कैतवाविष्कृतमहिषतनौ विद्विषत्याजिभाजि ।
प्रोतात्प्रासेन मूर्ध्नः सघृणमभिमुखायातया कालरात्र्या
कल्याणान्याननाब्जं सृजतु तदसृजो धारया वक्रितं वः ॥ १३ ॥

यच्चक्रस्य । अर्थान्महिषक्षिप्तस्य । अस्या धारया वक्रं न चक्रे । न च खलु परशोः कुठारस्य, अस्या । न क्षुरप्रस्य बाणविशेषस्य । न चासेः खड्गस्य । कस्मिन्सति कैतवाविष्कृतमहिषतनौ कपटमहिषे विद्विषति शत्रौ आजिभाजि युद्धं कुर्वति सति । किं तु प्रासेन कुन्तेन प्रोतान्मूर्ध्नो महिषमस्तकादभिमुखायातया· संमुखागतया असृजो रुधिरस्य धारया सघृणं यथा स्यादेवं वक्रितं तत्कालरात्र्या भगवत्या आननाब्जं मुखकमलं वः कल्याणानि सृजतु करोतु । सङ्ग्रामे नानायुधपातेऽपि भगवत्या मुखं न कूणितम् । किं तु संमुखमापतन्त्या महिषमस्तकोद्भूतरुधिरधारया घृणया कूणितमिति भावः ॥

हस्तादुत्पत्य यान्त्या गगनमगणिताधैर्यवीर्यावलेपं
वैलक्ष्येणेव पाण्डुद्युतिमदितिसुतारातिमापादयन्त्याः ।
दर्पानल्पाट्टहासद्विगुणतरसिताः सप्तलोकीजनन्या-
स्तर्जन्या जन्यदूतो नखरुचिततयस्तर्जयन्त्या जयन्ति ॥ १४ ॥

तर्जयन्त्या भर्त्सयन्त्या । अर्थाद्दैत्यान् । सप्तलोकीजनन्या जगदम्बायास्तर्जन्याः प्रदेशिन्या नखरुचिततयो जयन्ति । कथंभूताः । जन्यस्य सङ्ग्रामस्य दूतः सङ्ग्रामसूचिकाः । कथंभूताः । दर्पणानल्पो योऽट्टहासस्तेन द्विगुणतरं सिता अधिकशुक्लीभूताः । कथंभूतायाः । हस्तात् । अर्थात्कंसस्य । उत्पत्य गगनं यान्त्याः । पुनः कथंभूतायाः ।

१. 'इव'. २. 'वक्रं कृपाणं'. ३. 'दर्पानल्पाट्टहासाद्विगुणितरसिताः'. ४. 'नखरुचिररुचः'.

अगणितोऽधैर्येण कातरत्वेन वीर्यावलेपो येन तमदितिसुतारातिं देवशत्रुं कंसं वैलक्ष्येणेव पाण्डुद्युतिं धवलमापादयन्त्याः ॥

प्रालेयाचलपल्वलैकबिसिनी सार्यास्तु वः श्रेयसे
यस्याः पादसरोजसीम्नि महिषक्षोभात्क्षणं विद्रुताः ।
निष्पिष्टे पतितास्त्रिविष्टपरिपौ गीत्युत्सवोल्लासिनो
लोकाः सप्त सपक्षपातमरुतो भान्ति स्म भृङ्गा इव ॥ ९५ ॥

प्रालेयाचलो हिमालयः स एव पल्वलं सरस्तत्रैका मुख्या बिसिनी पद्मिनी आर्या गौरी वः श्रेयसेऽस्तु । यस्याः पादसरोजसीम्नि चरणकमलपर्यन्ते सप्तलोका भृङ्गा इव भान्ति स्म । कथंभूताः । महिषक्षोभात्क्षणं विद्रुताः, त्रिविष्टपरिपौ महिषे निष्पिष्टे सति पतिताः पुनर्मिलिताः । पुनः कथंभूताः । गीत्युत्सवोल्लासिनः । पुनः । सपक्षपाताः पक्षपातसहिता मरुतो देवा येषां ते । पद्मस्थिता भ्रमरा अपि महिषादिक्षोभे सति क्षणं विद्रवन्ते क्षोभे निवृत्ते पुनरागच्छन्ति गीत्युत्सवोल्लासिनः पक्षपातसमुत्पन्नेन मरुता सहिताश्च भवन्ति ॥

अप्राप्येपुरुदासितासिरशनेरारात्कुतः शङ्कुत-
श्चक्रव्युत्क्रमकृत्परोक्षपरशुः शूलेन शून्यो यया ।
मृत्युर्दैत्यपतेः कृतः सुसदृशः पादाङ्गुलीपर्वतः
पार्वत्या प्रतिपाल्यतां त्रिभुवनं निःशल्यकल्यं तया ॥ ९६ ॥

तया पार्वत्या त्रिभुवनं परिपाल्यताम् । कथंभूतम् । निःशल्यकल्यं निर्गतेन महिषरूपशल्येन निरातुरम् । यया पार्वत्या दैत्यपतेर्महिषस्य पादाङ्गुलीपर्वतः सुसदृशो मृत्युः कृतः । कथंभूतो मृत्युः । अप्राप्येषुर्बाणागोचरः । उदासितासिर्निर्व्यापारः खड्गो यत्र तादृशः । अशनेर्वज्रस्यारादूरे वर्तमानः । कुतः । शङ्कुतः । यो वज्रादीनामप्यसाध्यः स शङ्कुतः कुतः साध्य इति भावः । चक्रव्युत्क्रमकृदतिक्रान्तचक्रः । परोक्षः परशुर्यत्र सः । शूलेन शून्यः ॥

नष्टानष्टौ गजेन्द्रानवत न वसवः किं दिशो द्राग्गृहीताः
शार्ङ्गिन्सङ्ग्रामयुक्त्या लघुरसि गमितः साधु तार्क्ष्येण तैक्ष्ण्यम् ।
उत्खाता नेत्रपङ्क्तिर्न तव स्मरतः पश्य नश्यद्बलं स्वं
स्वर्नाथेत्यात्तदर्पं व्यसुमसुरमुमा कुर्वती त्रायतां वः ॥ ९७ ॥

इत्यमुना प्रकारेणात्तदर्पं गृहीतगर्वमसुरं महिषं व्यसुं गतप्राणं कुर्वती उमा वस्त्रायताम् । इतीति कथम् । हे वसवः, नष्टान्पलायितानष्टौ गजेन्द्रान्दिग्गजान्न अवत, किं

१. 'अप्राप्येषुः'. २. 'पर्वणा'. ३. 'सुरपते'.

दिशौ द्राक् गृहीताः कुतो यूयमपि पलायिताः। हे शार्ङ्गिन् विष्णो, तार्क्ष्येण गरुडेन तैक्ष्ण्यं शीघ्रतां गमितः सङ्ग्रामयुक्त्या लघुरसि इति साधु युक्तम् । हे स्वर्नाथ इन्द्र, तव नेत्रपङ्क्तिर्नोत्खाता केनापि नोत्पाटिता, अतस्त्वं समरतः सङ्ग्रामान्नश्यस्त्वं बलं सेनां पश्य ॥

श्रुत्वा शत्रुं दुहित्रा निहतमतिजडोऽप्यागतोऽह्नाय हर्षा-
दाश्लिष्यञ्छैलकल्पं महिषमवनिभृद्बान्धवो विन्ध्यबुद्ध्या ।
यस्याः श्वेतीकृतेऽस्मिन्स्मितदशनरुचा तुल्यरूपो हिमाद्रि-
र्द्राग्द्राघीयानिवासीदवतमसनिरासाय सा स्तादुमा वः ॥ ९८ ॥

सा उमा वोऽवतमसनिरासाय अज्ञानान्धकारदूरीकरणाय स्ताद्भवतु । सा का । यस्याः स्मिते या दशनरुक् तया श्वेतीकृतेऽस्मिन्महिषे तुल्यरूपो हिमाद्रिर्द्राग्द्राघीयानिवासीत् । कथंभूतः । दुहित्रा पार्वत्या निहतं शत्रुं महिषं श्रुत्वातिजडोऽप्यह्नाय शीघ्रं हर्षादागतो विन्ध्यबुद्ध्या शैलकल्पं महिषमाश्लिष्यन् । कीदृशः । अवनिभृतः पर्वता बान्धवा यस्य तादृशः ॥

क्षिप्तोऽयं मन्दराद्रिः पुनरपि भवता वेष्ट्यतां वासुकेऽब्धौ
प्रीयस्वानेन किं ते बिसतनुतनुभिर्भक्षितैस्तार्क्ष्य नागैः ।
अष्टाभिर्दिग्गजेन्द्रैः सह न हरिकरी कर्षतीमं हते वो
ह्रीमत्या हैमवत्यास्त्रिदशरिपुपतौ पान्त्विति व्याहृतानि ॥ ९९ ॥

त्रिदशरिपुपतौ महिषे हते ह्रीमत्या लज्जितायाः हैमवत्याः पार्वत्या इति व्याहृतानि वः पान्तु । हे वासुके, अयं मन्दराद्रिर्मन्दराद्रितुल्यो महिषोऽब्धौ समुद्रे क्षिप्तो भवता पुनरपि वेष्ट्यताम् । हे तार्क्ष्य गरुत्मन्, अनेन महिषेण प्रीयस्व तृप्तो भव । बिसतनुतनुभिर्मृणालकोमलैर्नागैर्भक्षितैस्ते किम् । इमं महिषमष्टाभिर्दिग्गजेन्द्रैः सह हरिकरी ऐरावतो न कर्षति ॥

एष छोप्टा पुराणां त्रयमसुहृदुरःपाटनोऽयं नृसिंहो
हन्ता त्वाष्ट्रं द्युराष्ट्राधिप इति विविधान्युत्सवेच्छाहृतानाम् ।
विद्राणानां विमर्दे दितितनयमये नाकलोकेश्वराणा-
मश्रद्धेयानि कर्माण्यवतु विदधती पार्वती वो हतारिः ॥ १०० ॥

दितितनयमये विमर्दे दैत्यसङ्ग्रामे विद्राणानां पलायितानां पुनर्महिषवधानन्तरमुत्सवेच्छयाहृतानामेकीभूतानां नाकलोकेश्वराणामिन्द्रादीनामश्रद्धेयान्यसंभावनीयानि विविधानि कर्माणि विदधती कुर्वती हतारिः पार्वती वोऽवतु रक्षतु । एष पुराणां त्रयं छेत्ता । यदनेन त्रिपुरदाहः कृतः किमिति महिषसङ्ग्रामे पलायित इति भावः । एष-

१. 'अतनुजनुनिरासाय'. २. 'असौ'. ३. 'प्रीतोऽनेनैव'. ४. 'त्रिदिवरिपुहतौ'.

मग्नेऽपि योज्यम्। असुहृदुरःपाटनोऽयं नृसिंहः। अयं त्वाष्ट्रं वृत्रं हन्ता सुराष्ट्राधिप इन्द्रः॥

शत्रौ शातात्रिशूलक्षतवपुषि रुषा [1]प्रेषिते प्रेतकाष्ठां
काली कीलालकुल्यात्रयमधिकरयं वीक्ष्य विश्वासितद्यौः।
त्रिस्रोतास्त्र्यम्बकेयं वहति तव भृशं पश्य रक्ता विशेषा-
न्नो मूर्ध्ना धार्यते किं हसितपतिरिति प्रीतये कल्पतां वः॥ ६१॥

शातत्रिशूलक्षतवपुषि शत्रौ रुषा प्रेतकाष्ठां यमदिशं प्रेषिते सति अधिकरयमधिकवेगयुक्तं कीलालकुल्यात्रयं रुधिरधारात्रयं वीक्ष्य इतिहसितपतिः काली वः प्रीतये कल्पताम्। इतीति किम्। हे त्र्यम्बक, इयं विश्वासितद्यौः परिचितद्यौः रक्ता रक्तवर्णानुरक्ता च त्रिस्रोता वहति पश्य। इयं तव मूर्ध्ना भृशं किं नो धार्यते॥

शृङ्गे [2]पश्योर्ध्वदृष्ट्याधिकतरमतनुः सन्न पुष्पायुधोऽस्मि
व्यालासङ्गेऽपि नित्यं न भवति भवतो भीर्न यज्ञोऽस्मि येन।
त्वं मुञ्चोच्चैः पिनाकिन्पुनरपि विशिखं दानवानां पुरोऽहं
पायात्सोत्प्रासमेवं हसितहरमुमा मृद्नती दानवं वः॥ ६२॥

एवं सोत्प्रासं समनाक्स्मितं यथा स्यात्तथा हसितहरं दानवं महिषं मृद्नती उमा वः पायात्। एवं कथम्। हे पिनाकिन्, ऊर्ध्वदृष्ट्या तृतीयलोचनेन मम शृङ्गे विषाणद्वयमधिकतरं पश्य। किं त्वहमतनुः सन्न पुष्पायुधः कामोऽस्मि। कामोऽप्यतनुरनङ्गः; अहं चातनुरकृशः। यथा त्वयोर्ध्वदृष्ट्या कामो दग्धस्तथाहं दग्धुं न शक्यः। अथ च व्यालस्य बाणस्यासङ्गेऽपि भवतो नित्यं भीर्न भवति। यतोऽहं यज्ञो नास्मि। यथा तव बाणपातभीत्या यज्ञः पलायितस्तथा नाहम्। व्यालाः सर्पाश्च तेषामासङ्गेऽपि मम भीर्न, यतोऽहं नयज्ञो गारुडशास्त्रज्ञोऽस्मि। अहं दानवानां पुरः पुरत्रयमस्मि त्वं पुनरपि विशिखं बाणमुच्चैर्मुञ्च। पक्षे दानवानां पुरोऽग्रे अस्मि। दानवाग्रेसरोऽहमिति भावः। 'व्यालः स्याद्बाणसर्पयोः'॥

नन्दीशोत्सार्यमाणापसृतिसमनम[3][4]न्नाकिलोकं नुवत्या
नम्रैर्हस्तेन हस्तं तदनुगतगतेः षण्मुखस्यावलम्ब्य।
जामातुर्मातृमध्योपगमपरिहृते दर्शने शर्म दिश्या-
[5]द्देदैयिश्चुम्ब्यमाना महिषवधमहे मेनया मूर्ध्न्युमा वः॥ ६३॥

महिषवधमहे मेनया हिमवद्भार्यया मूर्ध्नि चुम्ब्यमाना उमा वः शर्म दिश्यात्। किंभूतया मेनया। नन्दीशेन उत्सार्यमाणं अपसृतिसमं अपसरणकालतुल्यं नाकिलोकं नुवत्या स्तुवत्या। किं कृत्वा। तदनुगतगतेः षण्मुखस्य हस्तं हस्तेनालम्ब्य। कस्मिन्सति।

१. 'प्रोषिते'. २. 'अधिकतरम्'. ३. 'मस्त'. ४. 'नाकिनृलम्'. ५ 'देवी संचुम्बमाना'.

जामातुर्दर्शने मातृमध्योपगमपरिहृते सति । नेदीयः समीपम्, अर्थाज्जामातुः, गौरी मेनया चुम्बिता ॥

भक्त्या भृग्वत्रिमुख्यैर्मुनिभिरभिनुता बिभ्रती नैव गर्वं
शर्वाणी शर्मणे वः प्रशमितसकलोपप्लवा सा सदास्तु ।
या पार्ष्णिक्षुण्णशत्रुर्विगलितकुलिशप्रासपाशत्रिशूलं
नाकौकोलोकमेवं स्वमपि भुजवनं संयुगेऽवस्त्वमंस्त ॥ ६४ ॥

भक्त्या भृग्वत्रिमुख्यैर्मुनिभिरभिनुता, तथा गर्वं नैव बिभ्रती प्रशमितसकलोपप्लवा सा शर्वाणी वः शर्मणे सदास्तु । या पार्ष्णिक्षुण्णशत्रुर्नाकौकोलोकं देवलोकं स्वं भुजवनमप्यवस्त्वपदार्थममंस्त । कथंभूतम । संयुगे विगलितकुलिशप्रासपाशत्रिशूलम् । देवहस्तेभ्यो भयेन भवानीभुजेभ्यश्च प्रहारार्थं कुलिशादीनि गलितानि ॥

चक्रं शौरेः प्रतीपं प्रतिहतमगमत्प्राग्युधाम्नां तु पश्चा-
दापच्चापं बलारेर्न परमगुणतां पुत्त्रयप्लोपिणोऽपि ।
शक्त्यालं मां विजेतुं न जगदपि शिशौ षण्मुखे का कथेति
न्यक्कुर्वन्नाकिलोकं रिपुरवधि यया सावतात्पार्वती वः ॥ ६५ ॥

इत्यमुना प्रकारेण नाकिलोकं न्यक्कुर्वन्यया रिपुरवधि शत्रुर्हतः सा पार्वती वोऽवतात् । इतीति किम् । शौरेर्विष्णोश्चक्रं सुदर्शनं प्रतिहतं सत्प्राक्प्रथमं प्रतीपमगमत्, युधाम्नां देवानां तु चक्रं सैन्यं पश्चात् । बलारेरिन्द्रस्य चापं परं केवलमगुणतां नापत्, पुत्त्रयप्लोपिणः शिवस्यापि । शक्त्या सामर्थ्येन मां जेतुं जगदपि नालं न समर्थम्, शिशौ बाले षण्मुखे का कथा । षण्मुखः शक्त्यायुधविशेषेण मां जेष्यतीति दूरापास्तमिति भावः ॥

विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे
जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे ।
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नं
निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा भवानी ॥ ६६ ॥

रुद्रवृन्दे विद्राणे पलायिते सति, सवितरि सूर्ये तरले सति, वज्रिणीन्द्रे ध्वस्तवज्रे सति, शशाङ्के जाताशङ्के सति, मरुति वायौ विरमति सति, कुबेरे त्यक्तवैरे सति, वैकुण्ठे

१. 'विगलितकुलिशापास्तशक्तीपिनाकम्'; 'नगणितकुलिशप्रासशक्तीपिनाकम्'. २. 'एवं स्वमपि भुजवनं संयुगे'; 'आर्तं द्रुतमिति रभसा संयुगे'. ३. 'अपतत्'. ४. अयं श्लोकः सरस्वतीकण्ठाभरणे शार्ङ्गधरपद्धतौ च वर्तते.

विष्णौ कुण्ठितास्त्रे सति, अतिरुषं पौरुषोपघ्ननिघ्नं पौरुषाश्रयाधीनं महिषं निर्विघ्नं यथा स्यादेवं निघ्नती भूरिभासा भवानी वो दुरितं शमयतु ॥

भूषां भूयस्तवाद्य द्विगुणतरमहं दातुमत्रैष लग्नो
भग्ने दैत्येन दर्पान्महिषितवपुषा किं विषाणे विषण्णः ।
इत्युक्त्वा पातु मातुर्महिषवधमहे कुञ्जरेन्द्राननस्य
न्यस्यन्नास्ये गुहो वः स्मितसितरुचिनी द्वेषिणो द्वे विषाणे ॥६७॥

मातुर्महिषवधमहे महिषवधोत्सवे इत्युक्त्वा द्वेषिणो महिषस्य द्वे विषाणे शृङ्गद्वयं कुञ्जरेन्द्राननस्य गणपतेरास्ये मुखे न्यस्यन्निक्षिपन्गुहो वः पातु । कथंभूते विषाणे । स्मितसितरुचिनी स्मितेन धवलकान्ती । इतीति किम् । हे गजानन, महिषितवपुषा दैत्येन विषाणे दन्ते भग्ने सति त्वं किं विषण्णः खिन्नः, अहमेष द्विगुणतरं यथा स्यादेवं भूयः पुनरपि तवाद्य भूषां दातुं लग्न एव ॥

विश्राम्यन्ति श्रमार्ता इव तपनभृतः सप्तयः सप्त यस्मि-
न्सुप्ताः सप्तापि लोकाः स्थितिमुषि महिषे यामिनीधाम्नि यत्र ।
धाराणां रौधिरीणामरुणिमनि नभःसान्द्रसंध्यां दधान-
स्तस्य ध्वंसात्सुताद्रेरपरदिनपतिः पातु वः पादपातैः ॥ ६८ ॥

अपरदिनपतिर्द्वितीयः सूर्योऽद्रेः सुता पार्वती वः पातु । कथंभूतोऽपरदिनपतिः । यामिनीधाम्नि रात्रितुल्यवर्णे । कृष्णवर्ण इति यावत् । स्थितिमुषि लोकव्यवहारनाशके महिषे सति यस्मिञ्श्रमार्ता इव तपनभृतः सूर्यस्य सप्त सप्तयोऽश्वा विश्राम्यन्ती । किं च यत्र सप्तापि लोकाः सुप्ता इव सन्ति, तस्य महिषस्य पादपातैश्चरणप्रहारैर्ध्वंसाद्नाशान्रौधिरीणां रुधिरसर्वान्धनानां धाराणामरुणिमनि रक्तत्वे नभःसान्द्रसंध्यां नभसि या सान्द्रा निबिडा संध्या तां दधानः । सूर्योऽपि निखिललोकस्थितिहारिणीं विश्रामकारिणीं रात्रिं पादपातैः किरणपतनैर्नाशयति । रक्तवर्णां संध्यां च धारयति ॥

देवारेर्दानवारेर्द्रुतमिह महिषच्छद्मनः पद्मसद्मा
विद्रातीत्यत्र चित्रं तव किमिति भवन्नाभिजातो यतः सः ।
नाभीतोऽभूत्स्वयंभूरिव समरभुवि त्वं तु यद्विस्मितास्मी-
त्युक्त्वा तद्विस्मितं वः स्मरारिपुमहिषीविक्रमेऽव्याज्जयायाः ॥६९॥

स्मररिपोः शिवस्य महिष्याः पार्वत्या विक्रमे जयाया इत्युक्त्वा तद्विस्मितं विस्मयो वः पातु । इतीति किम् । महिषच्छद्मनो देवारेः सकाशात्पद्मसद्मा ब्रह्मा द्रुतं विद्राति पलायत इत्यत्र तव किं चित्रम् । यतः स दानवारेर्विष्णोर्नाभिजातो विष्णुनाभिसमुत्पन्नो

1. 'विस्मितास्मीत्युक्त्वा'; 'विस्मितासीत्युक्त्वा'. 2. 'अवा वः'.

भवन्वर्तते। अथ च अभिजातः कुलीनो न। कुलीनस्य पलायनमनुचितम्। अत्र हे शिव इति संबोधनपदमध्याहार्यम्। यत्समरभुवि त्वं तु त्वमपि स्वयंभूरिव ब्रह्मेव नाभीतो नाभिसकाशात्, अथ च अभीतो निर्भयो नाभूत्, तद्विस्मितास्मि॥

निस्त्रिंशेनोचितं ते विशसनमुरसश्चण्डि कर्मास्य घोरं
व्रीडामस्योपरि त्वं कुरु दृढहृदये मुञ्च शस्त्राण्यमूनि।
इत्थं दैत्यैः सदैन्यं समदमपि सुरैस्तुल्यमेवोच्यमाना
रुद्राणी दारुणं वो द्रवयतु दुरितं दानवं दारयन्ती॥ ७०॥

इत्थममुना प्रकारेण सदैन्यं दैत्यैः समदं सहर्षं च सुरैस्तुल्यमेवोच्यमाना दानवं महिषं दारयन्ती रुद्राणी वो दारुणं दुरितं द्रवयतु। इत्थं कथम्। हे निस्त्रिंशे निर्दये, उरसः, अर्थान्महिषस्य, विशसनं ते नोचितम्। हे चण्डि, घोरं कर्म महिषवधरूपमस्य क्षिप। 'असु क्षेपणे'। अस्योपरि त्वं व्रीडां कुरु। पशुवधेन लज्जा भवति। हे दृढहृदये। दृढमपराधसहिष्णु हृदयं यस्यास्तत्संबुद्धौ। अमूनि शस्त्राणि मुञ्च दूरे परिहर। इत्थं दैत्यैरुच्यमाना। देवैस्तु—हे चण्डि, निस्त्रिंशेन खड्गेनास्यः, अर्थान्महिषस्य वक्षसः, ते विशसनमुचितम्। यतोऽस्य कर्म घोरं वर्तते। व्रीडामस्योपरि त्वं कुरु। यदि महिषवधो न क्रियते तदा महती व्रीडा तव भविष्यतीति भावः। हे दृढहृदये कठिनहृदये, अमूनि शस्त्राण्यस्योपरि मुञ्च। सर्वैः शस्त्रैर्युगपदेव प्रहर॥

चक्षुर्दिक्षु क्षिपन्त्याश्चलितकमलिनीचारुकोपाभिताम्रं
मन्द्रध्वानानुयातं झटिति वलयिनो मुक्तबाणस्य पाणेः।
चण्ड्याः सव्यापसव्यं सुररिपुषु शरान्प्रेरयन्त्या जयन्ति
त्रुट्यन्तः पीनभागे स्तनवलनभरात्संधयः कञ्चुकस्य॥ ७१॥

स्तनवलनभरात्पीनभागे उपचितप्रदेशे त्रुट्यन्तश्चण्ड्याः कञ्चुकस्य संधयो जयन्ति। कथंभूतायाः। चलितकमलिनीचारुकोपाभिताम्रम्, अथ च वलयिनो झटिति मुक्तबाणस्य पाणेर्हस्तस्य मन्द्रध्वानेनानुयातं चक्षुर्दिक्षु क्षिपन्त्याः। पुनः कथंभूतायाः। सव्यापसव्यं सुररिपुषु शरान्प्रेरयन्त्याः॥

बाहूत्क्षेपसमुल्लसत्कुचतटं प्रान्तस्फुटत्कञ्चुकं
गम्भीरोदरनाभिमण्डलगलत्काञ्चीभृतार्धांशुकम्।
पार्वत्या महिषासुरव्यतिकरे व्यायामरम्यं वपुः
पर्यस्तावधिबन्धबन्धुरलसत्केशोच्चयं पातु वः॥ ७२॥

महिषासुरव्यतिकरे बाहूत्क्षेपसमुल्लसत्कुचतटम्, प्रान्तस्फुटत्कञ्चुकम्, गम्भीरोदरना-

---

१. 'दृढहृदयम्'. २. 'रुद्राण्याः'. ३. 'शृङ्गाररम्यम्'.

भिमण्डलगलत्काञ्चीधृतार्धांशुकम्, व्यायामरम्यम्, पर्यस्तावधिबन्धबन्धुरलसत्केशोच्चयं पार्वत्या वपुर्वः पातु ॥

चक्रं चक्रायुधस्य क्वणति निपतितं रोमणि ग्रावणीव
स्थाणोर्बाणश्च लेभे प्रतिहतिमुरुणा चर्मणा वर्मणेव।
यस्येति क्रोधगर्भं हसितहरिहरा तस्य गीर्वाणशत्रोः
पायात्पादेन मृत्युं महिषतनुभृतः कुर्वती पार्वती वः॥ ७३॥

क्रोधगर्भं हसितहरिहरा महिषतनुभृतस्तस्य गीर्वाणशत्रोर्मृत्युं पादेन कुर्वती पार्वती वः पायात्। इतीति किम्। ग्रावणि पाषाणे इव यस्य रोमणि, अर्थान्महिषस्य निपतितं चक्रायुधस्य चक्रं क्वणति। स्थाणोः शिवस्य बाणश्च उरुणा चर्मणा वर्मणा कवचेनेव प्रतिहतिं प्रतिघातं लेभे। विष्णोश्चक्रमस्य रोमममपि नाच्छिनत्। शिवस्य बाणश्चास्य चर्ममात्रमपि नाभिनदिति भावः॥

कृत्वा वक्रेन्दुबिम्बं चलदलकलसद्भ्रूलताचापभङ्गं
क्षोभव्यालोलतारं स्फुरदरुणरुचिस्फारपर्यन्तचक्षुः।
संध्यामेवापराद्धं भवमिव पुरतो वामपादाम्बुजेन
क्षिप्तं दैत्यं क्षिपन्ती महिषितवपुषं पार्वती वः पुनातु॥ ७४॥

संध्यायाः सेवा तयापराद्धं कृतापराधं भवं शिवमिव वामपादाम्बुजेन महिषितवपुषं दैत्यं पुरतः क्षिप्रं क्षिपन्ती पार्वती वः पुनातु। किं कृत्वा। चलदलकलसद्भ्रूलताचापभङ्गं क्षोभव्यालोलतारं स्फुरदरुणरुचिस्फारपर्यन्तचक्षुर्वक्रेन्दुबिम्बं कृत्वा॥

गङ्गासंपर्कदुष्यत्कमलवनसमुद्भूतधूलीविचित्रो
वाञ्छासंपूर्णभावादधिकतररसं तूर्णमायान्समीपम्।
क्षिप्तः पादेन दूरं वृषग इव यया वामपादाभिलाषी
देवारिः कैतवाविष्कृतमहिषवपुः सावतादम्बिका वः॥ ७५॥

कैतवाविष्कृतमहिषवपुर्देवारिर्यया वृषगः शिव इव पादेन दूरं क्षिप्तः साम्बिका वो-ऽवतात्। कथंभूतो देवारिर्वृषगश्च। गङ्गासंपर्कदुष्यत्कमलवनसमुद्भूतधूलीविचित्रः। पुनः कथंभूतः। वाञ्छासंपूर्णभावादधिकतररसं यथा स्यादेवं तूर्णं समीपमायानागच्छन्। कथंभूतः। वामपादाभिलाषी। प्रसादयितुमपकर्तुं च वामपादे लगितुकामः॥

भद्रे भ्रूचापमेतन्नमयसि नु वृथा विस्फुरन्नेत्रबाणं
नाहं केलौ रहस्ये प्रतियुवतिकृतख्यातिदोषः पिनाकी।

१. 'क्रोधात्'. २. 'नमय मम वृथा'; 'नमयसि तु वृथा'.

देवी सोत्प्रासमेवं धृतमहिषतनुं द्दप्तमन्तःसकोपं

देवारिं पातु युष्मानतिपरुषपदा निघ्नती भद्रकाली ॥ ७६ ॥

एवं सोत्प्रासं दृप्तमन्तःसकोपं धृतमहिषतनुं देवारिमतिपरुषपदात्यन्तकठोरचरणेन निघ्नती भद्रकाली देवी युष्मान्पातु । एवं कथम् । हे भद्रे, विस्फुरन्नेत्रबाणमेतत्क्रूचापं वृथा नमयसि नु । रहस्ये केलौ प्रतियुवत्याः सपत्न्याः कृतः ख्यातिदोषो येन तादृशः पिनाकी नाहम् । नाहं कृतगोत्रस्खलनः शिव इति भावः ॥

अन्योन्यासङ्गगाढव्यतिकरदलितभ्रष्टकापालमालां

स्वां भोः संत्यज्य शंभौ खुरपुटदलितप्रोल्लसद्धूलिपाण्डुः ।

भद्रे क्रीडाभिमर्दी तव मविधमहं कामतः प्राप्त ईशो-

ऽत्रैवं सोत्प्रासमव्यान्महिषमुररिपुं निघ्नती पार्वती वः ॥ ७७ ॥

एवं सोत्प्रासं महिषसुररिपुं निघ्नती पार्वती वोऽव्यात् । एवं कथम् । भो भद्रे, अन्योन्यासङ्गेन यो गाढव्यतिकरस्तस्मिन्दलिता अत एव भ्रष्टा या कपालसंबन्धिनी माला तां स्वां मालां शंभौ संत्यज्य खुरपुटदलितप्रोल्लसद्धूलिपाण्डुः क्रीडयाभिमर्दी गाढालिङ्गनम्, पक्षे सङ्ग्रामः स यस्य सोऽहमीशस्तव सविधं कामतोऽत्र प्राप्तः ॥

ज्वालाधाराकरालं ध्वनितकृतभयं यं प्रभेत्तुं न शक्तं

चक्रं विष्णोर्दृढास्थि प्रतिविहतरयं दैत्यमालाविनाशि ।

क्षुण्णस्तस्यास्थिसारो विबुधरिपुपतेः पादपातेन यस्या

रुद्राणी पातु सा वः प्रशमितसकलोपप्लवा निर्विघातम् ॥ ७८ ॥

सा प्रशमितसकलोपप्लवा रुद्राणी निर्विघातं वः पातु । सा का । यस्याः पादपातेन तस्य विबुधरिपुपतेर्महिषस्यास्थिसारः क्षुण्णः पिष्टः । तस्य कस्य । ज्वालाधाराकरालं ध्वनितकृतभयं दृढास्थि दैत्यमालाविनाशि विष्णोश्चक्रं प्रतिविहतरयं सत् यं प्रभेत्तुं न शक्तम् ॥

गाढावष्टम्भपादप्रबलभरनमत्पूर्वकायोर्ध्वभागं

दैत्यं संजीतशिक्षं जनमहिषमिव न्यक्कृताज्याङ्गभागम् ।

---

१. 'महिषितवपुषम्'. २. 'कापालमालं स्वाहं विन्यस्य'. ३. 'शंभो', ४. 'क्रोधाभिमर्दी'. ५. 'अत्र' इति पुस्तकान्तरे नास्ति. ६. 'स्वनित'. ७. 'यत्र कर्तुम्'. ८. 'दृढाग्नि'. ९. 'प्रतिविहतरयम्'. १०. 'दैत्यमायाविलावि'. ११. 'रिपुविभोः'. १२. 'मुक्तोपद्रवा'. १३. 'प्रचुर'. १४. 'निज्ञातशिक्षम्'; 'निर्णीतशिष्यम्'; 'निर्यातसारम्'; 'निर्यातशिक्षम्'. १५. 'प्राकृताघ्याङ्गभागम्'.

आरूढा शूलपाणिः कृतविबुधभयं हन्तुकामं सगर्वं

देयाद्वश्चिन्तितानि द्रुतमहिषवधावाप्ततुष्टिर्भवानी ॥ ७९ ॥

गाढावष्टम्भपादस्य प्रबलभरेण नमत्पूर्वकायोर्ध्वभागं न्यक्कृताग्र्याङ्गभागम्, अत एव संजातशिक्षं शिक्षितं जनमहिषमिव लौकिकं महिषमिव आरूढा, शूलपाणिः, द्रुतमहिषवधावाप्ततुष्टिर्भवानी वश्चिन्तितानि देयात् । कथंभूतम् । कृतविबुधभयम्, हन्तुकामम्, सगर्वम् ॥

ब्रह्मा योगैकतानो विरहभवभयाद्धूर्जटिः स्त्रीकृतात्मा

वक्षः शौरेर्विशालं प्रणयकृतपदा पद्मवामाधिशेते ।

युद्धक्ष्मामेवमेते विजहतु धिगिमं यस्त्यजत्येष शक्रो

दृप्तं दैत्येन्द्रमेवं सुखयतु समदा निघ्नती पार्वती वः ॥ ८० ॥

ब्रह्मा योगैकतानो योगनिष्ठः । विरहभवभयाद्धूर्जटिः शिवः स्त्रीकृतात्मा । शौरेर्विष्णोर्विशालं वक्षः पद्मवामा लक्ष्मीरधिशेते । एवमेते युद्धक्ष्मां सङ्ग्रामभूमिं विजहतु नाम । किं तु य एष शक्रो युद्धभूमिं त्यजति इमं धिक् । एवं दृप्तं सगर्वं दैत्येन्द्रं निघ्नती समदा पार्वती वः सुखयतु ॥

एवं मुग्धे किलासीः करकमलरुचा मा मुहुः केशपाशं

सोऽन्यस्त्रीणां रतादौ कलहममुचितो यः प्रिये दोपलब्धे ।

वैदग्ध्यादेवमन्तःकलुषितवचनं दुष्टदेवारिनाथं

देवी वः पातु पार्ष्ण्या दलिततनुमसुभिर्मोचयन्ती भवानी ॥ ८१ ॥

हे मुग्धे, एवं करकमलरुचा किल केशपाशं मुहुः मा आसीः मा क्षिप । यः दोपलब्धे प्रिये अन्यस्त्रीणां रतादौ कलहममोचितः । एवं वैदग्ध्यादन्तःकलुषितवचनं दुष्टाश्च ते देवारयो दैत्यास्तेषां नाथं महिषं दलितं पार्ष्ण्या असुभिर्मोचयन्ती भवानी देवी वः पातु ॥

बालोऽद्यापीशजन्मा समरमुद्भपभृत्पांसुलीलाविलासी

नागास्यः शातदन्तः स्वतनुकरमदाद्विह्वलः सोऽपि शान्तः ।

धिग्यासि केति दुष्टं मुदिततनुमुदं दानवं संस्फुरोक्तं

पायाद्वः शैलपुत्री महिषतनुभृतं निघ्नती वामपार्ष्ण्या ॥ ८२ ॥

---

१. 'विबुधदयम्'. २. 'ब्रह्मन्'. ३. 'भवविरह'. ४. 'स्त्रीकृतात्मा'. ५. 'धिगिमान्यस्त्यजत्येष शत्रुः'; 'विदिशं प्राक्त्यजत्येष शक्रः'. ६. 'दृष्टम्'. ७. 'करकमलतया'. ८. 'कोपलब्धे'. ९. 'समरसुरपतिभस्मलीलाविलासी'. १०. 'लीलाभियोग्यः'. ११. 'दृष्टम्'. १२. 'मुदिततनुमुदम्'. १३. 'संस्फुटोक्तम्'.

इति सस्फुरोक्तं मुदिततनुमुदं महिषतनुभृतं दानवं वामपार्ष्ण्या निघ्नती शैलपुत्री वः पायात् । सस्फुरं स्फुरणयुक्तमुक्तं यस्य तम् । मुदितायां रोमाञ्चितायां तनौ मुद् यस्य तम् । इति किम् । समरं सङ्ग्रामं प्रति ईशजन्मा कार्तिकेयोऽद्यापि बालः । उडुपभृच्चन्द्रशेखरः शिवः पांसुलीलाविलासी भस्मोद्धूलनासक्तः । नागास्यो गणपतिः शातदन्तः, अथ च स्वतनुकरमदाद्विह्वलः अत एव सोऽपि शान्तः । अधुना त्वं क्व यासि धिक् ॥

मूर्ध्नः शूलं ममैतद्विफलमभिमुखं शंकरोत्खातशूलं
सङ्ग्रामाद्दूरमेतद्धृतमरि हरिणा मन्मनः कर्षतीव ।
गर्वादेवं क्षिपन्तं विबुधजनविभून्दैत्यसेनाधिनाथं
शर्वाणी पातु युष्मान्पदभरदलनात्प्राणतो दूरयन्ती ॥ ८३ ॥

विबुधजनविभून्देवाधिनाथाञ्छिवादीन्, एवं गर्वात्क्षिपन्तं तिरस्कुर्वाणं दैत्यसेनाधिनाथं महिषं पदभरदलनात्प्राणतो दूरयन्ती गतप्राणं कुर्वाणा शर्वाणी युष्मान्पातु । एवं कथम् । शंकरेणोत्खातं प्रहारार्थमुत्तम्भितं शूलमभिमुखं सद्विफलं जातम्, एतन्मम मूर्ध्नः शूलं शिरोपीडाजनकम् । अतीव दुःखमिति यावत् । हरिणा एतत् अरि सुदर्शनं चक्रं सङ्ग्रामाद्दूरं धृतं सत् मन्मनः कर्षतीव ॥

भ्राम्यद्भामोर्वदाहक्षुभितजलचरव्यस्तवीचीन्मकम्पा-
न्कृत्वैवाशु प्रसन्नान्पुनरपि जलधीन्मन्दरक्षोभभाजः ।
दर्पादायान्तमेव श्रुतिपुटपरुषं नादमभ्युद्गिरन्तं
कन्याद्रेः पातु युष्मांश्चरणभरनतं पिंषती दैत्यनाथम् ॥ ८४ ॥

भ्राम्यद्भामोर्वदाहेन क्षुभितैर्जलचरैर्व्यस्ता वीचयो येषां तान्प्रसन्नानिर्मलाञ्जलधीन्पुनरपि मन्दरक्षोभभाजः, अर्थादाविलान्, आशु कृत्वा दर्पादायान्तमेव, अथ च श्रुतिपुटपरुषं कर्णकठोरं नादमभ्युद्गिरन्तं दैत्यनाथं चरणभरेण नतं पिंषती अद्रेः कन्या युष्मान्पातु ॥

मैनामिन्दोऽभिनैषीः श्रितपृथुशिखरां शृङ्गयुग्मस्य पार्श्वं
युद्धक्ष्मायां तनुं स्वां रतिमदविलसत्स्त्रीकटाक्षक्षमेयम् ।
भानो किं वीक्षितेन क्षितिमहिषतनौ त्वं हि संन्यस्तपादो
दर्पादेवं हसन्तं व्यसुमसुरमुमा कुर्वती त्रायतां वः ॥ ८५ ॥

**हे इन्दो, श्रितपृथुशिखरां पर्वतशिखराश्रयां स्वां तनुं शृङ्गयुग्मस्य, अर्थान्मम, पार्श्वं माभिनैषीः अभिमुखं मा नय । यतस्तवेयं तनुः रतिमदविलसत्स्त्रीकटाक्षक्षमा । हे भानो,**

---

**१. 'दूरमस्मत्स्थितमरि'. २. 'भ्राम्यद्भीमोरुदेहक्षुभितचलजल–'. ३. 'कृत्वा प्रागप्रसन्नान्'. ४. 'मैनां मुग्धे'. ५. 'पार्श्वम्'.**

वीक्षितेन किम् । त्वं क्षितिमहिषेषु प्राकृतमहिषेषु संन्यस्तपादः । अहं तादृशो महिषो न भवामि । यत्र त्वं पादन्यासं कर्तुमिच्छसीति भावः । एवं दर्पोद्धसन्तमसुरं व्यसुं गतप्राणं कुर्वती उमा वस्त्रायताम् ॥

सङ्ग्रामात्रस्तमेतं त्यज निजमहिषं लोकजीवेश मृत्यो
स्थातुं शूलाग्रभूमौ गतभयमजयं मत्तमेतं गृहाण ।
दैत्ये पादेन यस्याश्छलमहिषतनौ शायिते दीर्घनिद्रां
भावोत्पत्तौ जयैवं हसति पितृपतिं साम्बिका वः पुनातु ॥ ८६ ॥

यस्याः पादेन च्छलमहिषतनौ दैत्ये दीर्घनिद्रां शायिते सति जया भावोत्पत्तौ सत्यां पितृपतिं यममेवं हसति साम्बिका वः पुनातु । एवं कथम् । हे लोकजीवेश मृत्यो, सङ्ग्रामात्रस्तं भीतमेतं निजमहिषं त्यज शूलाग्रभूमौ स्थातुं गतभयमजयमेतं मत्तं गृहाण ॥

श्रुत्वैतत्कर्म भावादनिभृतरभसं स्थाणुनाभ्येत्य दूरा-
च्छ्लिष्टा बाहुप्रसारं भ्रमितभरचलत्तारका धूतहस्ता ।
दैत्ये गीर्वाणशत्रौ भुवनसुखमुपि प्रापिते प्रेतकाष्ठां
गौरी वोऽव्यान्मिलत्सु त्रिदिविषु तमलं लज्जया वारयन्ती ॥८७॥

भुवनसुखमुपि गीर्वाणशत्रौ दैत्ये प्रेतकाष्ठां प्रापिते सति एतत्कर्म महिषवधरूपं श्रुत्वा भावादनिभृतरभसं यथा स्यादेवं स्थाणुना दूरादभ्येत्य बाहुप्रसारं बाहू प्रसार्य श्लिष्टा आलिङ्गिता, अतएव धूतहस्ता भ्रमितभरचलत्तारका गौरी त्रिदिविषु देवेषु मिलत्सु सत्सु तं स्थाणुं लज्जया वारयन्ती सती वोऽव्यात् ॥

भद्रे स्थाणुस्तवाङ्गः क्षतमहिषरणव्याजकण्डूतिरेषं
त्रैलोक्यक्षेमदाता भुवनभयहरः शंकरोऽतो हरोऽपि ।
देवानां नायिके त्वद्गुणकृतवचनोऽतो महादेव एष
केलावेवं स्मरारिर्हसति रिपुवधे यां शिवा पातु सा वः ॥ ८८ ॥

रिपुवधे स्मरारिः शिवो यां केलौ क्रीडायामेवं हसति सा शिवा वः पातु। एवं कथम् । क्षता महिषस्य रणव्याजेन कण्डूतिर्येन एतादृशस्तवाङ्गः स्थाणुः, अर्थादहं स्थाणुः । स्थाणौ महिषस्य कण्डूतिशमनं प्रसिद्धम् । त्रैलोक्यक्षेमदाता तवाङ्गः, अतः शंकरः ।

---

१. 'शल्लाग्रभूमौ'. २. 'प्रापिते'. ३. 'द्रागदुर्भेदे'. ४. 'हासतापितृपतिम्'. ५. 'ई॰ हकर्म'. ६. 'शंभुनागत्य'. ७. 'बाहूपसादम्'. ८. 'उद्धूतहस्ता'. ९. 'संतापितारौ'. १०. 'प्रोषिते'. ११. 'गौरी वोऽव्यात्स्वरूपं त्रिदशपतिपुरो लज्जया धारयन्ती'. १२. 'एव'. १३. 'क्षेमदानात्'. १४. 'देवानां नायकत्वाद्गुण–'; देवैर्ब्रह्मादिभिस्त्वद्गुण–' १५. 'स्मरारौ वदति रिपुवधे पार्वती वः पुनातु'.

भुवनभयहरः, अतो हरोऽपि तवाङ्घ्रिः । हे देवानां नायिके, त्वद्गुणेन कृतं वचनं शब्दो यस्य । महत्त्वं त्वगुणस्तेन जातवचनो महादेवः, अत एव तवाङ्घ्रिर्महादेवोऽपि । महिषवधेनान्वर्थत्वात्स्थावरादयः संज्ञास्तव चरणस्यैव युज्यन्ते, नास्माकमिति भावः ॥

खड्गः कृष्णस्य नूनं रहितगुणगतिर्नन्दकाख्यां प्रयातः
शत्रोर्भङ्गेन वामस्तव मुदितसुरो नन्दकस्त्वेष पादः ।
भावादेवं जयायां नुतिकृति नितरां संनिधौ देवतानां
सव्रीडा भद्रकाली हतरिपुरवताद्वीक्षिता शंभुना वः ॥ ८९ ॥

देवतानां संनिधौ जयायां भावाद्भक्तिविशेषादेवं नितरां नुतिकृति सत्यां हतरिपुः सव्रीडा शंभुना वीक्षिता भद्रकाली वोऽवतात् । एवं कथम् । रहितगुणगतिर्नन्दकत्वगुणरहितः कृष्णस्य खड्गो नन्दकाख्यां प्रयातः । शत्रोर्भङ्गेन मुदितसुरस्तवैष वामः पादो नन्दकः ॥

एकेनैवोद्गमेन प्रविलयमसुरं प्रापयामीति पादो
यस्याः कान्त्या नखानां हसति सुररिपुं हन्तुमुद्यन्सगर्वम् ।
विष्णोस्त्रिः पादपद्मं बलिनियमविधावुद्धृतं कैतवेन
क्षिप्रं सा वो रिपूणां वितरतु विपदं पार्वती क्षुण्णशत्रुः ॥ ९० ॥

सुररिपुं हन्तुं सगर्वमुद्यन्यस्याः पादो नखानां कान्त्या इति हसति सा क्षुण्णशत्रुः पार्वती वो रिपूणां क्षिप्रं विपदं वितरतु । इतीति किम् । अहमेकेनैवोद्गमेनासुरं प्रविलयं प्रापयामि, विष्णोः पादपद्मं बलिनियमविधौ कैतवेन त्रिरुद्धृतम् ॥

खड्गं खट्वाङ्गयुक्तं युवतिरपि विभो ते शरीरार्धलीना
हास्यं प्रागेव लब्धं सुरजनसमितौ दुष्कृतेन त्वयैवम् ।
जाता भूयोऽपि लज्जा रणत इयमलं हास्यता शूलभर्त-
र्दर्पादेवं हसन्तं भवमसुरमुमा निघ्नती त्रायतां वः ॥ ९१ ॥

दर्पादहंकाराद्भवं शिवमेवं हसन्तमसुरं निघ्नती उमा वस्त्रायताम् । एवं कथम् । हे शूलभर्तः, तव खड्गं खट्वाङ्गयुक्तम् । हे विभो, युवतिर्भार्यापि ते शरीरार्धे लीना । एवं दुष्कृतेन दुष्टाचरणेन त्वया सुरजनसमितौ देवसभायां प्रागेव हास्यं लब्धम् । भूयोऽपि रणतो युद्धादियं लज्जा पलायनरूपा जाता । इयमलं परिपूर्णरूपेण हास्यता ॥

---

१. 'मतानाम्'. २. 'उद्गतेन प्रविजयमपरम्'. ३. 'सह विबुधरिपुम्'; 'हसितसुररिपुम्'. ४. 'उद्गतम्'. ५. 'क्षिप्तम्'. ६. 'गङ्गा मौलौ विलग्ना युवतिरिति'; 'खट्वाङ्गं खड्गयुक्तं युवतिरपि'. ७. 'लब्धम्'. ८. 'याता'. ९. 'हरम्'.

स्थाणौ कण्डूविनोदो नुदति दिनकृतस्तेजसा तापितं नो
तोयस्थाने न चाप्तं सुखमधिकतरं गाहनेनाङ्गजातम्।
शून्यायां युद्धभूमौ वदति हि धिगिदं माहिषं रूपमेकं
रुद्राण्यारोपितो वः सुखयतु महिषे प्राणहृत्पादपद्मः॥ ९२॥

सर्वदेवपलायनाच्छून्यायां युद्धभूमौ इति वदति महिषे रुद्राण्या आरोपितः प्राणहृत्पादपद्मो वः सुखयतु। इतीति किम्। स्थाणौ शिवे कीलके च यदि कण्डूविनोदः क्रियते तदा तं नुदति। यतोऽयं स्थाणुः स्थिरो नास्तीति भावः। नोऽस्माकमङ्गजातमङ्गसमूहो दिनकृतः सूर्यस्य तेजसा तापितम्, किंतु तोयस्थाने वरुणालये च गाहनेनाधिकतरं सुखं नाप्तम्। वरुणोऽपि पलाय्य गत इति भावः। तस्मादिमं माहिषं रूपं धिक्॥

पिंषञ्छैलेन्द्रकल्पं महिषमतिगुरुर्भग्नगीर्वाणगर्वं
शंभोर्जातो लघीयाञ्छ्रमरहितवपुर्दूरमभ्यूह्यपातः।
वामो देवारिपृष्ठे कनकगिरिमदां क्षेमकारोऽङ्घ्रिपद्मो
यस्या दुर्वार एवं विविधगुणगतिः मावतादम्बिका वः॥ ९३॥

यस्या अङ्घ्रिपद्म एवं विविधगुणगतिरस्ति साम्बिका वोऽवतात्। कथंभूतः। भग्नगीर्वाणगर्वं शैलेन्द्रकल्पं महिषं पिंषन्, अतिगुरुरपि शंभोर्लघीयाञ्जातः। पुनः कथंभूतः। श्रमरहितवपुः। दूरमभ्यूह्योऽभ्यूहनीयः पातो गतिर्यस्य। यो हि गुरुर्भवति स श्राम्यति, दूरं च न याति। अयं तु श्रमरहितवपुर्दूरपाती च। देवारेर्महिषस्य पृष्ठे वामः प्रतिकूलः। कनकगिरिमदां देवानां क्षेमकारः कल्याणजनकः॥

मार्गं शीतांशुभाजां सरभसमलघुं हन्तुमुद्यन्सुरारिं
नेत्रैरुद्वृत्ततारैः सचकितममरैरुन्मुखैर्वीक्ष्यमाणः।
यस्या वामो महीयान्मुदितसुरमनाः प्राणहृत्पादपद्मः
प्राप्तस्तन्मूर्धसीमां सुखयतु भवतः सा भवानी हतारिः॥ ९४॥

यस्या वामः पादपद्मस्तस्य महिषस्य मूर्धसीमां प्राप्तः सा मुदितसुरमना हतारिर्भवानी वः सुखयतु। कथंभूतः पादपद्मः। सरभसं यथा स्यादेवमलघुं सुरारिं हन्तुं शीतांशुभाजां नक्षत्राणां मार्गमाकाशमुद्यन्नुत्पतन्। अतएव सचकितं यथा स्यादेवमुद्वृत्ततारैर्नेत्रैरुन्मुखैरमरैर्वीक्ष्यमाणः। पुनः कथंभूतः। प्राणहृत्। अर्थान्महिषस्य॥

---

१. 'कण्डूविनोदात्'. २. 'नः'; 'वः'. ३. 'एवम्'. ४. 'शीर्णगीर्वाणगर्वम्'; 'शीर्णगीर्वाणगर्वः'. ५. 'जातो गरीयान्'. ६. 'वपुर्ध्वस्त उत्पात्य कोपात्'. ७. 'क्षेमकारो हि यस्याः पादोऽतुल्यप्रभावः'. ८. 'असुरैः'.

मूर्धन्यापातभग्ने मिषमहिषतनुः सन्ननिःशब्दकण्ठः
शोणाब्जाताम्रकान्तिप्रततघनबृहन्मण्डले पादपद्मे ।
यस्या लेभे सुरारिर्मधुरसनिभृतद्वादशार्धाङ्घ्रिलीलां
शर्वाणी पातु सा वस्त्रिभुवनभयहृत्स्वर्गिभिः स्तूयमाना ॥ ९५ ॥

यस्याः पादपद्मे मिषमहिषतनुः कपटमहिषः सुरारिर्मधुरसे निभृतस्य निश्चलस्य द्वादशार्धाङ्घ्रेः षट्पदस्य भ्रमरस्य लीलां लेभे सा त्रिभुवनभयहृत्स्वर्गिभिर्देवैः स्तूयमाना शर्वाणी वः पातु । कथंभूते पादपद्मे । शोणाब्जवदाताम्रा कान्तिर्यस्य, प्रततं प्रकर्षेण विस्तीर्णं घनं निबिडं बृहन्मण्डलमाभोगो यस्य तयोः समाहारस्तस्मिन् । कथंभूतः सुरारिः । मूर्धनि मस्तके आपातेन प्रहारेण भग्ने सति सन्ननिःशब्दकण्ठः । अत एव निश्चलभ्रमरतुल्यतां गतः ॥

पादोत्क्षेपाद्व्रजद्भिर्नखकिरणशतैर्भूषितश्चन्द्रगौरै-
र्मूर्धाग्रे चापतद्भिश्चरणतलगतैरंशुभिः शोणशोभः ।
संन्यस्तालीनरत्नप्रविरचितकरैरर्चितः क्षिप्तकायै-
र्यस्या देवैः प्रणीतो हविरिव महिषः सावतादम्बिका वः ॥९६॥

यस्याः क्षिप्तकायैर्दण्डवत्प्रणमद्भिर्देवैर्हविरिव संस्कृतं हव्यमिव महिषः प्रणीत उपनीतः साम्बिका वोऽवतात् । कथंभूतो महिषः । पादोत्क्षेपाद्व्रजद्भिश्चन्द्रगौरैर्नखकिरणशतैर्भूषितः । पुनः कथंभूतः । मूर्धाग्रे आपतद्भिश्चरणतलगतैरंशुभिः शोणशोभः । पुनः कथंभूतः । संन्यस्तान्यालीनानि च यानि रत्नानि । अर्थाद्देवमुकुटेषु । तेषां प्रविरचितैः करैः किरणैश्चार्चितः । यो हि देवतायै हविरुपनयति स दण्डवत्प्रणतो भवति । अत्र हविर्मांसपिण्डम् । तच्च शुक्लं रक्तं च भवति ॥

क्वायं तीक्ष्णोग्रधाराशतनिशितवपुर्वज्ररूपः सुरारिः
पादश्चायं सरोजद्युतिरनतिगुरुर्योषितः क्वेति देव्याः ।
ध्यायं ध्यायं स्तुतो यः सुररिपुमथने विस्मयाबद्धचित्तैः
पार्वत्याः सोऽवताद्वस्त्रिभुवनगुरुभिः सादरं वन्द्यमानः ॥ ९७ ॥

त्रिभुवनगुरुभिर्ब्रह्माद्यैः सुररिपुमथने विस्मयाबद्धचित्तैरिति ध्यायं ध्यायं ध्यात्वा ध्यात्वा यः स्तुतः सादरं वन्द्यमानश्च स पार्वत्याः पादो वोऽवतात् । इति कथम् । तीक्ष्णोग्रधारा-

---

१. 'सुरमहिषतनुः'; 'मिषतनुमहिषः'. २. 'कान्तिः'. ३. 'लसन्मण्डले'. ४. 'मधुपस्तुनिभृत–'. ५. 'सर्वत्रिभुवन–'. ६. 'पद्मशोभः'. ७. 'अमरगुरोर्योषितः'. ८. 'ध्यात्वा ध्यात्वा'. ९. 'सावतात्'. १०. 'वीक्ष्यमाणः'; 'वन्दितार्कः'.

शतनिशितवपुरयं वज्ररूपः सुरारिः क्व। अयं सरोजद्युतिर्योषितो देव्या अनतिगुरुः पादश्च क्व। महदन्तरमिति भावः॥

वज्रित्वं वज्रपाणेर्दितितनयभिदश्चक्रिणश्चक्रकृत्यं
शूलित्वं शूलभर्तुः सुरकटकविभोः शक्तिता षण्मुखस्य।
यस्याः पादेन सर्वं कृतममररिपोर्बाधयैतत्सुराणां
रुद्राणी पातु सा वो दनुविफलयुधां स्वर्गिणां क्षेमकारी॥ ९८॥

यस्याः पादेनामररिपोर्महिषस्य बाधया सुराणामेतत्सर्वं कृतं सा रुद्राणी वः पातु। कथंभूतानां सुराणाम्। दनुषु दनुजेषु विफलं युद्धं येषां तेषाम्। कथंभूता रुद्राणी। स्वर्गिणां क्षेमकारी। देवकल्याणकर्त्री। एतत्किम्। वज्रपाणेरिन्द्रस्य वज्रित्वं वज्रकार्यम्। दितितनयभिदश्चक्रिणो विष्णोश्चक्रित्वम्। शूलभर्तुः शिवस्य शूलित्वम्। सुरकटकविभोर्देवसेनापतेः षण्मुखस्य कार्तिकेयस्य शक्तिता। वज्रादीनां कृत्यं देव्याश्चरणेनैव साधितमिति भावः॥

पङ्गुर्नेता हरीणामसमहरियुतः स्यन्दनश्चैकचक्रो
भानोः सामभ्यपेतः कृत इति विधिना त्यक्तवैरः पतङ्गे।
दर्पाद्भ्राम्यन्रणक्ष्मां प्रतिभटसमराश्लेषलुब्धः सुरारि-
र्यस्याः पादेन नीतः पितृपतिसदनं सावतादम्बिका वः॥ ९९॥

पतङ्गे सूर्ये इति त्यक्तवैरः प्रतिभटसमराश्लेषलुब्धः अत एव दर्पाद्रणक्ष्मां युद्धभूमिं भ्राम्यन्सुरारिर्यस्याः पादेन पितृपतिसदनं यमलोकं नीतः साम्बिका वोऽवतात्। इति किम्। हरीणामश्वानां नेता सारथिः पङ्गुः। स्यन्दनो रथोऽसमहरियुतो विषमाश्व एकचक्रश्च। एवं भानो रथो विधिना सामभ्यपेतः सामग्रीविकलः कृतः। इतिहेतोः सूर्ये त्यक्तवैरः॥

युक्तं तावद्गजानां प्रतिदिशमयनं युद्धभूमेर्दिगीशां
हीयेताशागजत्वं सुभटरणकृतां कर्मणा दारुणेन।
यद्येष स्थाणुसंज्ञो भयचकितदृशा नश्यतीत्यद्भुतं त-
द्दर्पादेवं हसन्तं सुररिपुमवतान्निघ्नती पार्वती वः॥ १००॥

दर्पादेवं हसन्तं सुररिपुं निघ्नती पार्वती वोऽवतात्। एवं कथम्। दिगीशां गजानां दिग्गजानां युद्धभूमेः सकाशात्प्रतिदिशमयनं स्वस्वदिग्गमनं तावद्युक्तम्। यतः सुभटैः सह रणकृतामेषां दारुणेन कर्मणा मरणरूपेणाशागजत्वं दिग्गजत्वं हीयेत। यद्येष

१. 'दितिदनुजभिदः'. २. 'सुरसमितिविभोः.' ३. 'दितितनयहृतः'. ४. 'प्रतिदिशमयनम्'. ५. 'रणभुवाम्'. ६. 'या चैवं स्थाणुसंज्ञा भयचकितदृशाम्'.

स्थाणुसंज्ञः शिवो भयचकितदशोपलक्षितो नश्यति इत्यद्भुतम् । स्थाणोः पलायनमाश्चर्यमिति भावः ॥

त्रस्ताङ्गः सन्नचेष्टो भयहतवचनः सन्नदोर्दण्डशाखः
स्थाणुर्दृष्ट्वा यमाजौ क्षणमिह सरुषं स्थाणुरेवोपजातः ।
तस्य ध्वंसात्सुरारेर्महिषितवपुषो लभ्यमानावकाशः
पार्वत्या वामपादः शमयतु दुरितं दारुणं वः सदैव ॥ १०१ ॥

यं सुरारिं सरुषं सक्रोधमाजौ युद्धे क्षणं दृष्ट्वा त्रस्ताङ्गः सन्नचेष्टो भयहतवचनः सन्नदोर्दण्डशाखः स्थाणुः शिवः स्थाणुः कीलक एव जातः । जडीभूत इति यावत् । तस्य महिषितवपुषः सुरारेर्ध्वंसाल्लभ्यमानावकाशः पार्वत्या वामपादो वो दारुणं दुरितं सदैव शमयतु ॥

कुन्ते दन्तैर्निरुद्धे धनुषि विमुखितज्ये विषाणेन मूला-
ल्लाङ्गूलेन प्रकोष्ठे वलयिनि पतिते तत्कृपाणे स्वपाणेः ।
शूले लोलाङ्घ्रिपातैर्ललितकरतलात्प्रच्युते दूरमुर्व्यां
सर्वाङ्गीणं लुलायं जयति चरणतश्चण्डिका चूर्णयन्ती ॥ १०२ ॥

देव्याः कुन्ते दन्तैर्महिषेण निरुद्धे सति, विषाणेन धनुषि मूलाद्विमुखितज्ये विमुखीभूतमौर्वीके सति, लाङ्गूलेन देव्याः प्रकोष्ठे वलयिनि वेष्टिते सति, अत एव तत्कृपाणे तदीये खड्गे स्वपाणेः स्वहस्तात्पतिते सति, लोलाङ्घ्रिपातैर्ललितकरतलाच्छूले दूरमुर्व्यां भूमौ प्रच्युते सति, चण्डिका चरणतः सर्वाङ्गीणं लुलायं महिषं चूर्णयन्ती जयति ॥

इति महाकविश्रीबाणभट्टविरचितं चण्डीशतकं सटिप्पणं समाप्तम् ।

---

## श्रीनागराजकविप्रणीतं

# भावशतकम् ।

शुभ्रं क्वचित्क्वचिदतीव सितेतराभं
क्वापि प्रफुल्लनवपङ्कजसंनिकाशम् ।
तप्तं क्वचित्क्वचन शीतलमस्तु वस्तु
कैवल्यसंसृतिपथानुगतं मुदे वः ॥ १ ॥

---

१. 'यं दृष्ट्वा त्रस्तचेष्टः'. २. 'स्थाणुर्दैत्यं तमाजौ'; 'स्थाणुर्दैत्यं यमाजौ'; 'स्थाणुर्दृष्ट्वा सुरारिम्'. ३. 'इव सभयम्'. ४. 'भवतां ध्वान्तमन्तर्हितार्कः'. ५. 'मूलात्'. ६. नागराजनामा धारानगराधिपः कश्चिन्महीपतिरासीत्, तन्नाम्ना तदाश्रितेन केनचित्कविना शतकमेतन्निर्मितमिति शतकविलोकनाज्ज्ञायते.

नागराजशतं ग्रन्थं नागराजेन तन्वता ।
अकारि गतवक्त्रश्रीर्नागराजो गिरां गुरुः ॥ २ ॥

वसन्तकाले चकिता नताङ्गी विज्ञाय चक्रीकृतचापदण्डम् ।
मनोभवं सौरभशोभमानैरपूरयत्पाणियुगं प्रसूनैः ॥ ३ ॥

मधुकरालिर्मौर्वीभङ्गो [न] भवत्विति ॥

काचिद्वसन्तसमये गत्वा पुष्पद्रुमावलीम् ।
नामुञ्चन्निजनिःश्वासवायुं वारिजलोचना ॥ ४ ॥

भृङ्गागमनभीत्या ॥

काचित्तृषार्ता वनिता निदाघे गङ्गां समभ्येत्य सुधासवर्णाम् ।
आदाय तद्वारि करद्वयेन विलोकयन्ती न पपौ किमेतत् ॥ ५ ॥

करकिसलयकान्तिभ्रान्त्या शोणितशङ्कयेति ॥

प्राचीनस्मृतविरहव्यथातिभीतः
काकुत्स्थः कृतकुतुकाक्षिमीललीलः ।
संपूर्णे शशिनि चिराय लग्नदृष्टेः
प्रेयस्याः स्थगयति लोचने कराभ्याम् ॥ ६ ॥

कनकमृगवन्मृगाङ्कमृगमपीयं याचिष्यतीति भीत्या ॥

मदनातुरापि लक्ष्मीरालिङ्गनलोलुपापि ललिताङ्गी ।
मा पश्य पश्य नाथेत्यवदन्मुरवैरिणं तत्किम् ॥ ७ ॥

हरौ पश्यति नेत्रीभूतः सहोदरश्चन्द्रो द्रक्ष्यत इति । तथा चण्डकरकिरणाः कोमले वपुषि दुःसहा भवन्ति ॥

यद्यस्मासु कृपापरोऽसि वनितावर्ण्याकृते कौतुका-
दाशु प्रोल्लसदुत्सवासु बहुशो रथ्यासु मा संचर ।
वाचस्ते सुभगोद्गिरन्ति च सुधामुच्चावचाः कर्णयोः
प्रोत्तुङ्गा गृहभित्तयः समदनोल्लासा च नः स्वामिनी ॥ ८ ॥

उत्सवालोकनव्याजेनास्मत्स्कन्धमधिरुह्य त्वां पश्यतीति ॥

मणिमयमण्डपमध्ये क्रीडन्ती कापि कामिनी विदुषी ।
अपराधेन विना तं निजचरणैस्ताडयामास ॥ ९ ॥

स्वप्रतिबिम्बं वीक्ष्य कामिन्यन्तरप्रतीतेः ॥

शिरसि देवनदीं पुरवैरिणः सपदि वीक्ष्य धराधरकन्यका ।
निबिडमानवती रमणाङ्कके क्वचन चुम्बनमारभते स्म सा ॥ १० ॥

क्रोधातिशयेन सविषो गलश्चुम्बितः ॥

सकलं स पुरा पीत्वा मुमोच मकरालयम् ।
मुनीन्द्रः किं न जानाति योषितां विरहव्यथाम् ॥ ११ ॥

पीतश्चन्द्रो मुक्त इति ॥

सौधस्थले विरहिणी विमले शयाना
निर्मुक्तसर्वजलदासु शरन्निशासु ।
देवाननिन्ददधिकं दनुजोत्तमांश्च
दुग्धार्णवं च भुजगेश्वरमन्दरौ च ॥ १२ ॥

एभिश्चन्द्र उत्पादित इति ॥

अपारं दुःखमापन्ना मदनार्ता वियोगिनी ।
कोकिलालिशशाङ्काद्या वर्धन्तामित्यभाषत ॥ १३ ॥

एतद्बाहुल्येनाचिरेण वियोगिनीनां मरणं संभाव्यते ॥

ज्याबन्धः शिथिलीभवत्वयममी शाम्यन्तु कोलाहलाः
स्वामिंस्त्वन्मृगयाविहारकुतुकासक्तिः क्षणं तिष्ठतु ।
इन्दौ स्प्रष्टुमुपागतेऽपि सहसा निःशङ्कमन्याङ्गनां
मा मा मा स्पृश मा स्पृशेति चकिता यद्रोहिणी जल्पति ॥ १४ ॥

मृगयाचकितमृगापगमाद्विमृगे चन्द्रे रोहिण्याः परपुरुषशङ्केति ॥

तीक्ष्णाग्रं कठिनं कुचद्वयमिदं तन्वङ्गि यच्चोन्नतं
तद्वक्षः परिहाय किं प्रियतमः पृष्ठे समालिङ्ग्यते ।
किं कुर्मः सखि नर्मकेलिषु मया दष्टे रसेनाधरे
रुष्टोऽयं गमनोद्यतस्तदधुना पन्थानमानीयते ॥ १५ ॥

धवलो हि प्रतोदेन प्रेरितः पन्थानमायाति ॥

प्राप्ते वसन्तसमये पथिकस्य कान्ता
श्रान्तान्तरा पिकगणा निनदन्ति यत्र ।

उत्थाय तत्परिसरं सहसैव गत्वा
गातुं मतिं कृतवती कमनीयकण्ठम् ॥ १६ ॥

मत्स्वराकर्णनेनेतः सत्रपा यास्यन्ति, मूका वा भविष्यन्ति ॥

जलदानवलोक्य निर्गता नगरोद्यानसुकेलयेऽङ्गनाः।
पुनरागमनेषु ताः कथं घनवृष्ट्यापि भजन्ति न त्वराम् ॥ १७ ॥

शीघ्रगमनेन श्रमश्वासादिना गुरुजनस्यासतीत्वप्रतीतिर्मा भूत्। अथवा व्यभिचारपरामृष्टचन्दनलेपादिभूषागोपनाय जलवृष्टयेत्यसतीपक्षः ॥

पत्त्रावलीचित्रकपोलपालिं प्रातः सपत्नीमवलोक्य काचित्।
तुतोष लाक्षाक्रमनाप्तनिद्रं पुनः प्रियं वीक्ष्य विषादमाप ॥ १८ ॥

पत्त्रावलेरविनाशादनया संयोगो नाभूदिति तुतोष। सर्वस्यामपि निशायां प्रीतिवाहुल्यादतिपादपतनैः संमानितापि मानमियं न मुमोचेति विषादमाप ॥

स्मरातुराङ्गी प्रियविप्रयोगे शीतोपचारं परिहृत्य सर्वम्।
सुखेप्सया सर्वगतान्निमेषे काचित्करानेव सुधाकरस्य ॥ १९ ॥

यस्मादेते मत्प्रियसंगताः सन्तीति ॥

अन्यास्ताः प्रिय योषितः प्रियतमं कण्ठे समालिङ्ग्य या
याचन्ते हृदयस्थितं बहुरूपं तूर्णं पुनः संगमम्।
याचे त्वामहमेतदेव न परं त्वन्मङ्गलाकाङ्क्षिणी
प्रस्थाने मम जीवितेश्वर वृथा कण्ठग्रहं मा कृथाः ॥ २० ॥

तव प्रस्थानालिङ्गनेन क्षणेनापि मत्प्राणा यास्यन्तीति ॥

क्रीडां प्रीतसखीजनैः पितृगृहे संस्मृत्य रेवातटे
मा खिद्यस्व मनोहराङ्गि सरलः कान्तोऽस्ति चित्तानुगः।
सन्त्येवात्र जलाशयाः सुगहनाः सख्यश्च ताः पण्डिताः
क्रीडन्त्यास्तव तेषु ताभिरनिशं विस्मृत्य तद्यास्यति ॥ २१ ॥

सुगमम् ॥

कान्तः क्वापि गतोऽस्ति कोपकलितः श्वश्रूजनैः संकुलं
वेश्म स्तोकमिदं महोत्सववशात्सख्या गृहे याम्यहम्।
मध्याह्नो विषमः सुपान्थ भवता तस्मान्निकुञ्जोल्लस-
द्ग्रामस्योत्तरतः सरोऽस्ति ललितं किं तत्र न स्थीयते ॥ २२ ॥

सुगमम् ॥

काचित्सरोजनयना रमणे स्वकीये
दूरं गते सति मनोभवबाणखिन्ना ।
त्यक्तुं शरीरमचिरान्मलयाद्रिवायुं
सौरभ्यशालिनमहो पिबति स्म चित्रम् ॥ २३ ॥

मलयपवनानां भुजंगभुक्तावशिष्टत्वात् ॥

मच्छास्त्रवाक्यकथिते शुभकर्ममूले
न्याय्ये पथि प्रतिदिनं किल वर्तमानः ।
सद्यः पुमान्सकललोकहितानुयायी
शून्यं करोति सकलं दनुजारिवक्षः ॥ २४ ॥

न्याय्यमार्गस्थितो हरिवक्षःस्थलस्थितामपि लक्ष्मीमपहर्तुं शक्तः ॥

सा क्षामेति किमुच्यते ननु यया भद्रेतराशङ्कया
त्वत्प्रत्यागमशंसिने बलिभुजे भूमौ बलिर्नार्प्यते ।
कुड्याग्रेषु पुनः प्रसारितकरं निःशङ्कया दीयते
प्रत्यग्रेन्दुकलामिव प्रणयिनीं तन्मङ्क्षु संभावय ॥ २५ ॥

भूमौ बलिदाने मङ्गलवलयविनिपातः संभावितः । अथवा सशब्दवलयनिपातेन च-कितः काको बलिं न स्पृशतीति ॥

शोणाङ्कः शशलाञ्छनः किमलयं शोभां विधत्तेऽलिना
कम्बुः क्वापि भुजंगितः कुवलये बन्धूकपुष्पाश्रिते ।
एवं धूर्तसखीजने वदति तां मुग्धां गृहीत्वा शठः
किं दृश्यं नयनेषु नेति कथयन्वापीं ययौ क्रीडितुम् ॥ २६ ॥

जलक्रीडाव्याजेन व्यभिचारचिह्नप्रक्षालनं स्यादिति ॥

दूरं गतं प्रियतमं परिचिन्त्य चित्ते
रुद्धेषु वारिदगणैर्हरितां मुखेषु ।
रुद्धास्यमेव सुदृशा शनकै रुदन्त्या
नेत्राम्बुना तिलकमाशु विशीर्णमासीत् ॥ २७ ॥

तप्तस्तनपतितनेत्राम्बुसेकाविर्भूतबाष्पजनितस्वेदादिभिः ॥

लीलासरोरुहि कयाचन वीक्षमाणे
केनाप्यहो मधुकरेण विवर्जितेऽपि ।

आगत्य कश्चन सलीलमलिः पपात
भङ्गीमनङ्गीविवशः परिशङ्क्य चात्र ॥ २८ ॥

कमले दृक्प्रभालोकनात् ॥

सत्यैकोद्यम नागराज भवति प्रत्यर्थिविध्वंसन-
व्यापारे कृतनिश्चये सति मतां दारिद्र्यविध्वंसके ।
तत्कान्ताः क्षितिभृत्तटीषु मणिभिर्नीलैः सुरम्यास्त्वहो
कोकान्षट्पदमालिकाश्च कमलान्यालोकयन्त्यद्भुतम् ॥ २९ ॥

स्वस्तनालकमुखप्रतिबिम्बालोकनात् । अथवा नीलमणिजनितान्धकारे दिनज्ञानाय कोकसंयोगं षट्पदनिर्द्वन्द्वप्रचारं कमलविकासं च ॥

उत्तार्य काञ्चीं शयने विमुच्य यत्किंचिदाच्छादयितुं कयाचित् ।
ऊचे तदेवोषसि मालिवर्गे पदच्युतो हि क ह ते तुरङ्गः ॥ ३० ॥

शब्दभयादुपरि सुरते चेयमुत्तारितेति ॥

काचित्साश्रुमुखी वियोगविधुरा धृत्वा करे लेखनीं
सर्वस्यां निशि कामलेखमखिलं शून्या लिखित्वा पुनः ।
कान्ते प्रेषयति स्म सोऽपि चतुरो निर्वर्णमालोक्य तं
साकं दुःखमुदा चकार महता पक्षित्वमाकाङ्क्षते ॥ ३१ ॥

ईदृशीमवस्थां मा प्राप्नोति दुःखम् । मयि सुतरां प्रीतिं मा धत्त इति हर्षः । अन्यच्चात्र पदे पदे भावः ॥

तत्कालयोग्याभरणा व्रजन्ती काचित्समीपे हृदयेश्वरस्य ।
विलोचने नाञ्जयति स्म तारं न चापि हारं हृदये न्यधत्त ॥ ३२ ॥

सती अन्तरभयात् । असती व्यभिचारप्रकटनभयात् । अथवा विशालयोरक्ष्णोरञ्जनेन महती वेला स्यात् । हारः कामाग्निना दग्धो भविष्यतीति ॥

ईषदुल्लसितामिन्दुमण्डलं पश्य चूतनवपल्लवप्रभम् ।
अङ्गतां हरिदिगङ्गनामुखे भूषणत्वमुपयाति चाद्भुतम् ॥ ३३ ॥

ललाटत्वं तिलकत्वं च ॥

पुष्पेषोरिषुभिर्विभिन्नहृदयः कान्तां मुहुश्चिन्तय-
न्नान्धः कोऽपि निदाघभास्वति नभोभागं गते मध्यमम् ।

श्रान्तोऽप्येष पिपासितोऽपि पयसे धावन्नपीतस्ततः
शुष्कं वीक्ष्य सरश्चिराय महतीं धत्ते मुदं चेतसा ॥ ३४ ॥

अत्र सरोजाभावेन पुष्पेषोरिषुसंकोचाद्विरहिणः प्रमोदोदयः ॥

परिपाकसमयपाण्डोः परिणतपत्रालिपरिहृतार्करुचेः ।
त्वय्यनुरागातिशयादिक्षोः फलमीक्षते तन्वी ॥ ३५ ॥

फलितामिक्षुवाटीमुत्पाततया परिहरन्तीति संकेतभङ्गायेत्यसतीपक्षः । सतीपक्षे तु तादृश्या वाटिकाया दाहस्यापि संभावितत्वेनेक्षुधन्वनो धनुरुच्छेदो विरहिणीप्रीतिकृत् ॥

उदितः शनकैर्निशाधिनाथो वनितानां वदनानि वीक्षमाणः ।
शुचिमौक्तिकभूषणातिभीतो गणनायां निरतो नु तारकाणाम् ॥३६॥

मुखेन निर्जित्य बन्दीकृततारकाभ्रान्तिर्मौक्तिकेषु ॥

आलोकयन्ती शशिपूर्णबिम्बमाशामुखे दैवतनायकस्य ।
संचिन्त्य किंचिन्मनसैव भीता धत्ते रतिं चम्पकमालिकासु ॥ ३७ ॥

चन्द्रोदये मुकुलितपद्मत्यागिनो मधुपा मन्मुखे पतिष्यन्तीति ॥

किं मौग्ध्यादनुतप्यसे किमधिकं नेत्रे क्रुधेवाश्रुभि-
र्व्याप्नोषि त्यज वीक्षणं प्रतिदिशं प्रेम्णो हि नानागतिः ।
आलि निन्दसि किं वृथा स्वपदयोरालक्तकं नेक्षसे
सर्वत्रातिनिषिद्धमेव हृदयं किं भाषसे निष्ठुरम् ॥ ३८ ॥

सुगमम् । पदे पदे भावाः ॥

कान्तः कान्तकरः परः प्रकृतिमप्यङ्गीकरोत्येव य-
स्त्वच्चित्तानुगया तया सरलया युक्ते पदे स्थापितः ।
सोऽयं संप्रति नाथ किं प्रणतिभिर्नीतस्त्वया नीचतां
तेनायुक्तविधायिता हि भवतः स्पष्टैव दुष्टाशय ॥ ३९ ॥

तस्यास्तिलकस्त्वल्ललाटं गतो मत्पदमानीत इति ॥

पश्यैनं पुरतः स्थितं प्रियतमं मान्याः सखीनां गिरः
किं जातासि पराङ्मुखी मणिगृहे मुग्धेऽत्र को वा जनः ।
इत्यालीवचनेन कोपकलुषा काचिच्चिरं मानिनी
दीर्घोष्णं निपुणा मुहुर्मुहुरसौ निःश्वासमेव व्यधात् ॥ ४० ॥

प्रियप्रतिबिम्बाच्छादनायात्र निःश्वासाः ॥

हारे संदर्शिते यूना कम्पयन्त्या शिरो मुहुः।
प्रसारितः करेणोच्चैः कचभारो मृगीदृशा ॥ ४१ ॥

मन्मनस्त्वयि स्वच्छमिति तरुणेन ज्ञापिते तया मलिनमिति ज्ञापितम् ॥

उद्यानवाटीषु कदापि बाले मा गास्त्वमेकैव यथा गतेऽह्नि।
क्वचित्क्वचित्कण्टकिनां तरूणां मङ्गेन दुःखी स्तनभार एषः ॥ ४२ ॥

उद्यानगमननिषेधव्याजेन पत्युः पुरः स्तननखाङ्कगोपनम् ॥

अक्ष्णोरञ्जनमोष्ठयोश्चरणयोस्ताम्बूललाक्षाकृतो
रागः पत्रलता कपोलविषये देहे घनं चन्दनम्।
आस्तां तिष्ठति सर्वदा मम पुनर्दृष्ट्वा कदाचित्क्षणं
श्वश्रूः किं विदधे वृथैव दहते दुःखं सपत्न्यो यदि ॥ ४३ ॥

सपत्नीश्रृङ्गारवर्णनव्याजेन स्वसौभाग्यप्रकटनम्। अत्र पदे पदे भावाः ॥

पीनोत्तुङ्गघनस्तनी व्रज मुहुर्लीलागृहाभ्यन्तरं
त्वामुद्वीक्ष्य चिराय हन्त कलिताशङ्कः शशाङ्कोऽधुना।
एतच्चेतसि मंस्यते सकुतुकोत्प्रेक्षः किमासीदसौ
वल्मीकादपि विस्मया बहुगुणो वल्मीकजन्मा मुनिः ॥ ४४ ॥

चन्द्रदर्शनेऽपि त्वत्कुचचक्रवाकयुगमवियुक्तमिति रामशापस्यान्यथात्वेन वाल्मीकेर्निन्दा ॥

शृणु नागराज धृतखड्गभीषणे भवति प्रगल्भरिपुखण्डनोद्यते।
विचरत्तरङ्गशतशोभिताकृतिर्जलधिर्नितान्तमुपयाति संमदम् ॥ ४५ ॥

नवीनरुधिरनदीसंगमाशया ॥

देहे घनश्चन्दनचन्द्रलेपो बिम्बाधरे यावकरागयोगः।
प्रातः कृतोऽयं चतुरे भवत्या तन्वङ्गि शोभां त्वयि कां तनोति ॥४६॥

अवेलाशृङ्गारेण त्वया रतिचिह्नाच्छादनं कृतमिति योतयति। अथवा काकुवाक्यरसंयोगादसौभाग्यं स्थापयति ॥

हारस्तार उदारमौक्तिकमयं सीमन्तमाचित्रके
वासश्चन्द्रसितं तनौ रुचिकरो लेपो घनश्चान्दनः।
धम्मिल्ले सखि मल्लिकास्रगुचितैरेतैः सुधादीधिते-
र्मन्ये स्वास्यजितस्य जेतुमधुना ज्योत्स्नामिमां वाञ्छसि ॥४७॥

चन्द्रोदये श्वेताभरणैरलक्षिता व्यभिचाराय गन्तुमीहस इति वर्णनव्याजेन प्रकटयति ॥

व्रज दूति समर्प्यतां भवत्या नवताटङ्कयुगं करे तदीये ।
इदमेव निवेदयिष्यतीमां मदवस्थामलमत्र पत्रलेखैः ॥ ४८ ॥

कज्जलमिश्राश्रुकणिकाङ्कितत्वेन तस्य सवर्णतेति ॥

कृतानि शान्त्यै विरहव्यथायास्तया सखे कान्यपि भूषणानि ।
गुणान्वितानीति तदङ्गसङ्गादन्तःस्थितं मारमिवोद्गिरन्ति ॥ ४९ ॥

मृणालानि फेनिलाननानीति ॥

श्रीरामचन्द्रे दशवक्त्रपुर्या मार्गाय वारांनिधिबद्धकोपे ।
आग्नेयमस्त्रं गुरु संदधाने मैनागिरीन्द्रौ चकिताबभूताम् ॥ ५० ॥

जलधिमध्यस्थितमैनाकाख्यपुत्रनाशभीत्या ॥

चन्द्रोदये जृम्भति कर्तुकामे किंचित्प्रिये प्रोद्धतजातकामे ।
विलोक्य किंचिन्मणिसौधभूमौ निक्षिप्य काचिद्वमनं ललज्ज ॥ ५१ ॥

चन्द्रप्रतिबिम्बाच्छादनेऽपि ज्योत्स्नायास्तादवस्थ्येन नग्नस्वाङ्गदर्शनात् ॥

उक्तं कार्यमभून्नवेति किमिह प्रष्टव्यमेतत्त्वया
हन्तानुक्तमपि प्रसाधितमहो कृत्यं स्वबुद्ध्यैव मे ।
तद्दूति त्वदृतेऽस्ति का मम सखीत्याख्यातमात्रैव सा
सव्रीडा मुहुरम्बरं नयनयोरन्तेन किं वीक्षते ॥ ५२ ॥

यन्मदीयमम्बरं तेन नीत तत्त्वया परिहृत्य पुनरानीतमिति ॥

यस्मिन्सुस्फुटरश्मिपुञ्जविलसच्छ्रीस्फाटिकग्रावभा-
तुल्याच्छाम्भसि चित्तहारिणि सरोमध्ये न पङ्केरुहम् ।
तत्राहं सलिलं पिबामि तरसैत्युर्वी भ्रमन्ती मुदं-
क्ताद्दृग्भूतसरोवरं न लभते को वात्र हेतुर्वद ॥ ५३ ॥

सर्वत्र निजवदनप्रतिबिम्बावलोकनात् ॥

आलिङ्ग प्रतिवाचमुद्गिर सुधाकण्ठि क्व भूयो वयः
कोपं मुञ्च मयि प्रसीद सुभगे नैवं विधास्ये पुनः ।
पश्य श्वश्रु कथं वदत्ययमहो मानोन्नतां सारिका-
मेवं मानयितुं शुको हि भवने दैवस्य चित्रा गतिः ॥ ५४ ॥

निशासमयोक्तं शुकाभ्यस्तं पतिवाक्यं व्याजेनाच्छादयति ॥

सिक्तं चन्दनवारिभिः कमलिनीशय्यादलं कोमलं
हस्तस्थस्य तया मृणालवलयस्यावेष्टितं तन्तुभिः ।
आलेख्यं त्विदमेव यद्दयितया दत्तं स्वहस्तेन मे
लेखस्तिष्ठतु दूरतः किमधुनाप्याकर्ण्यते वाचिकम् ॥ ९५ ॥

विरहे सतीदृशस्थले स्वस्य निर्वाहाभावात् ॥

दृष्टोऽयं सरितां पतिः प्रियतम कास्ते स सेतुः क्व वा
सेतुः क्वेति मुहुर्मुहुः सकुतुकं पृष्टे परं विस्मिते ।
अत्रासीदयमत्र नास्ति किमिति व्यग्रे निजप्रेयसि
व्यावृत्तास्यसुधानिधिः समभवत्मन्दस्मिता जानकी ॥ ९६ ॥

स्वमुखचन्द्रदर्शनक्षुब्धजलधिकल्लोलाच्छादनस्य सेतोः प्रकटनाय मुखव्यावृत्तिः ॥

धवलय दशनश्रेणिं बिम्बोष्ठि न शोणता गताद्यापि ।
इति दर्शितमुकुराभिः सखीभिरायास्यते मुग्धा ॥ ९७ ॥

अधरसंनिधानजनितारुणतानपायिनीति ॥

श्रीरामे मृगयाविनोदविपुलप्रीतिप्रभूतीभव-
त्प्रस्वेदाम्बुकणावृतास्यकमले सद्मागते जानकी ।
उत्थायाशु ससंभ्रमं बहुतरां भक्तिं दधाना पुन-
स्तत्पादं मणिकङ्कणोज्ज्वलकरा नैव स्पृशत्यद्भुतम् ॥ ९८ ॥

अहल्यावच्चरणस्पर्शमात्रेण कङ्कणमणयोऽपि योषितो मा भूवन्निति ॥

गत्वोद्यानवनस्थलीं मृगनयना प्रोद्यद्वसन्तागम-
प्रोत्फुल्लाखिलवृतचम्पकमुखं क्ष्मारुड्विशेषाकुलम् ।
आदायातिमनोज्ञमद्भुतरसं किंचित्फलं पाणिना
तन्मध्यं च विलोक्य शङ्कितमना हस्तेऽकरोद्दर्पणम् ॥ ९९ ॥

दशनपङ्क्ती दाडिमबीजोपमास्ति न वेति विलोकयितुम् ॥

फूत्काराधिकभीषणास्य भुजगप्रत्यग्रभूषावली
भास्वद्वर्ष्माणि भूतकोटिघटितप्रौढस्तवैः संस्तुते ।
संध्याताण्डवकर्म खण्डपरशौ कर्तुं प्रवृत्ते सति
प्रत्याशं प्रतिपर्वतं समभवन्मेघैर्विना वृष्टयः ॥ ६० ॥

भ्रमरिकासमये शिरःस्थितगङ्गाजलप्रसरात् ॥

निशाकरास्ये निशि कामतप्ता विधुंतुदं निन्दसि किं वृथैव ।
दोषं न जानासि परं मुरारेः शिरोऽस्य कोपात्सखि येन कृत्तम् ॥ ६१ ॥

उदरासंभवे जरणाभावात् ॥

धाराधीश महीमहेन्द्र भवता प्रख्यातवीरव्रतं
सङ्ग्रामे निजवैरिवृन्दममम हन्तुं तपः कुर्वता ।
हानिं यस्य विचार्य निर्जरगणः खिन्नस्तदेवाखिलं
तुल्यं प्रेषयति स्म रक्षितुमहो यन्न त्वया रक्षितम् ॥ ६२ ॥

एतन्निहताः सर्वे स्वर्गं समागन्तारः । ततश्च तद्रणे सुराङ्गना यास्यन्ति चेति तपोभङ्गाय ता एव प्रेषिताः ॥

निशाकरेणातिनिपीडिताङ्गी दिवाकरं कापि परं निनिन्द ।
तदङ्कके सिंहमवेक्षमाणा पुनः समाश्वासयति स्म चेतः ॥ ६३ ॥

अनुदयादथवा कलाक्षये चैतस्मादेव समुपजीवतीति ॥

श्रीराम रामेति पदं मनोज्ञं वक्तुं मतिं हन्त विधाय कश्चित् ।
विचिन्त्य किंचित्पुनराशु चित्ते संदेहशाली स शनैर्व्यरंसीत् ॥ ६४ ॥

सुरतावसरे स्वेष्टदेवध्यानमयुक्तमिति रीतिरिति ॥

श्रीराघवे दिग्विजयाय वेगाद्विनिर्गते चापभृतां पुरोगे ।
शून्यान्यभूवन्सुदृशां शिरांसि कामां च कासांचन वीक्षितानि ॥ ६५ ॥

रिपुस्त्रीणां देवाङ्गनानां च ॥

सङ्ग्रामं त्वयि देव कुर्वति सुरास्तत्कौतुकालोकिनः
पश्यन्तस्तव विक्रमं निजशिरःकम्पं न के चक्रिरे ।
लोकेशादिकपालकोटिकलितां मालां समुत्साय्य-
न्भीतश्चारुमतिर्व्यलम्बत पुनः खण्डेन्दुमौलिः क्षणम् ॥ ६६ ॥

निजशिरःकम्पनेन सुधांशोः सुधाक्षरणान्मुण्डमाला सजीविता भविष्यतीति ॥

समुद्धतानां दनुजेश्वराणां विमर्दने यस्य चकास्ति धैर्यम् ।
स श्रीपतिः किं निजनामधेयमुहूर्तपङ्क्त्यो नितरां बिभेति ॥ ६७ ॥

स्वर्लोकः सर्वोऽप्याक्रम्यत इति ॥

संमानिता कापि [रमा]समाना कान्तेन साकं मदिरां पिबन्ती ।
बिम्बं सुधांशोः प्रतिबिम्बिताङ्कं नखेन काचिच्चषके लिलेख ॥ ६८ ॥

यतोऽयं नखाङ्कितः स्वकान्तामानेन विरहव्यथां वेत्तीति ॥

पङ्करुहाक्षी प्रियविप्रयोगे गन्तुं निशापारमपारयन्ती ।
उद्गातुमादाय करेण वीणामेणाङ्कमालोक्य शनैरहासीत् ॥ ६९ ॥

चन्द्रमृगोऽपि गीतप्रिय इति ॥

त्वयि प्रवृत्ते मृगयाविनोदे नवाम्बुजाभेक्षण नागराज ।
भीतिर्न जाता हरिणाङ्गनानां प्रवर्धते स्म प्रकटः प्रमोदः ॥ ७० ॥

कामभ्रान्त्या ॥

अलङ्कितास्मद्वचमा भवत्या निर्व्यूढमद्यैव पराङ्मुखत्वम् ।
कपोलयोग्या तव पत्रवल्ली दृष्ट यदेतल्लिखिता प्रियेण ॥ ७१ ॥

लतालभ्ये (?) त्वं नोपभुक्तेत्युपालम्भः ॥

मायाप्रगल्भेषु विदारितेषु रक्षःसु रामस्य शरैः सुतीक्ष्णैः ।
अकाण्ड एवाद्भुतमेतदुच्चैर्वल्लीद्रुमाः पल्लविता बभूवुः ॥ ७२ ॥

गगनादापतितरुधिरबिन्दुसंपर्कात् ॥

यूनां नागरिका विधाय विपुलं मानग्रहं याः प्रिया-
न्पादे पातयथ प्रियाणि वदतो दक्षालिभिः शिक्षिताः ।
ग्रामीणाः सख्लो वयं पुनरमूः कान्तैर्न विद्मः क्वचि-
न्मानं कर्तुमिहालयोऽपि न तथा याः शिक्षयेयुश्च नः ॥७३॥

अत्र काकुवाक्यैः पदे पदे भावः ॥

श्रीरामचन्द्रे दशवक्त्रहानौ कृतोद्यमे क्रव्यभुजः सहस्राः ।
मित्राण्यमन्यन्त मृगं कपिं च तपोधनं गाढतरं वनं च ॥ ७४ ॥

राक्षसवधे मांसबाहुल्यादिमित्युपकारः कृतः ॥

दूरेऽन्योन्यकथाकुतूहलविधिभ्रान्तस्तया भीतया
गच्छन्त्या गुरुसंनिधौ नयनयोरन्तेन नैवार्थितः ।
किं त्वाश्वासयितुं चलाचलमिदं चित्तं मदीयं शनैः
स्नेहव्यग्रहृदा हि मौक्तिकमयो हारोऽयमुत्सृत्रितः ॥ ७५ ॥

भूमिपतितमौक्तिकग्रहणव्याजेन विलम्बः ॥

जाते त्वयि श्रीसख नागराज पूर्वं प्रहृष्टोऽभवदिक्षुधन्वा ।
आचारमालोक्य पुनस्त्वदीयं विषादमत्यन्तमवाप चित्ते ॥ ७६ ॥

द्वितीयोऽयं मे सहचर इति संतोषः । पुनस्त्वदीयशिवभक्ततया विषादः ॥

---

१. समुद्धृतोऽयं श्लोकः शार्ङ्गधरपद्धतौ प्रहेलिकादिप्रकरणे.

एकाकिनीं चित्तवतीं विहाय यियासुना मुग्धतया विदेशम् ।
निजाशयं ज्ञापयितुं प्रियेण सारीषु चिक्रीड चरेण काचित् ॥ ७७ ॥

चरे सारीणामेकाकिनीनां मरणाच्चरक्रीडायां विलम्बहेतोः ॥

शिरः समालोक्य शशाङ्कमौलेरावेष्टितं भीममुखैर्भुजंगैः ।
बिभेति पूर्वं मरुतामधीशो विचिन्त्य किंचिद्विजहाति भीतिम् ॥ ७८ ॥

सर्पदर्शनेन भयम्, चन्द्रस्मरणेन च भयापगमः ॥

त्वं मुग्धे न तु मन्दिरं पितुरुपानीतासि भर्तुर्गृहा-
त्तत्काव्यं परिपूजयैनमपरैः किं तैर्ग्रहैः पूजितैः ।
एकोऽसावपराङ्मुखः फलति नैवेच्छानुकूलैः फलै-
रित्येवं कथिते सखीभिरभवन्मन्दाक्षमन्दा वधूः ॥ ७९ ॥

संमुखे शुक्रे भर्तुर्गृहे गमनं न संभवति । व्यभिचारः सुलभश्चात्र ॥

षण्मुखसेव्यस्य विभोः सर्वाङ्गेऽलंकृतित्वमापन्नाः ।
पन्नगपतयः सर्वे वीक्षन्ते गणपतिं भीताः ॥ ८० ॥

स्कन्दवाहनमयूरदर्शनभीताः शुण्डादण्डप्रवेशाय ॥

'विच्छायतां गच्छति पश्य मुग्धे मन्ये त्वदास्येन जितो मृगाङ्कः ।
हृदि स्थितापीति निगद्यमाना कान्तेन कान्ता पतति स्म चित्रम् ॥८१॥

रजन्या गतप्रायत्वात् ॥

अन्योन्यं भुजगवराः शंकरसर्वाङ्गभूषणीभूताः ।
पश्यन्तो वदनानि प्रायः कम्पं भजन्ति को हेतुः ॥ ८२ ॥

नीलं कण्ठं विलोक्य केनायं दंशापराधः कृत इति ॥

योऽयं भाति पयोधरस्तदुपरीत्याख्याय ऋज्वाशये
बाले बाहुमुदस्य किं प्रियतमस्येन्दोः कला दर्श्यते ।
दुर्लक्ष्याः सखि दर्शिताः कति न वा वक्रेन्दुलेखास्त्वये-
त्यालीजल्पितविस्मिता क्षणमथो सान्तःस्मितान्तर्हिता ॥ ८३ ॥

नखाङ्कितं पयोधरमयं पश्यतीति ॥

संगत्य नेत्रसलिलैस्तव विप्रयोगे
हारस्थितानि हृदयं हरिणायताक्ष्याः ।

मुक्ताफलान्यपि दहन्ति हि नीचमार्गे
सङ्गो जडैर्गुणिनमप्यहितीकरोति ॥ ८४ ॥

अतितापापूर्णकालकीभूतानामुपलानामुष्णजलसङ्गाद्द्रुतापकारित्वम् ॥

ईश्वरजटाप्रदेशे प्रोद्यत्कृतमालमालिकानिकरे ।
परिमलबहुलेऽप्यलयः किमिति मनोज्ञेऽपि नासते लुब्धाः ॥८५॥

चम्पककुसुमभ्रान्त्या ॥

कंदर्पो योगजुषां भेत्तुं मर्म समाधिमतिवेगात् ।
आकृष्य चापमधिकं नो मुञ्चति सायकं चित्रम् ॥ ८६ ॥

आत्मदाहवृत्तान्तं स्मृत्वा ॥

त्वं पार्थादधिकोऽसि संप्रति धनुर्विद्याविदामग्रणीः
प्रीत्या मद्वचनं करोषि नियतं कुर्या विशेषादिदम् ।
चन्द्रेणेह कलङ्किना मम मुखं गायन्ति तुल्यं ततो
हत्वैनं प्रिय पातयास्य हरिणं प्रातः प्रयातासि यत् ॥ ८७ ॥

प्रातर्विदेशं प्रयातोऽसि प्रियतमे सूर्योदयमनाकाङ्क्षमाणा मृगवधमादिशति । तद्वधेन गात्रेस्तथैवावस्थानात् । तद्वियोगादियं परागुभाविता । त्वं तमेव यथाकालं पश्यसीति तत्समत्वात् ॥

सखीनिदेशानुचरः प्रियोऽयमुच्चस्वरा पञ्जरशारिका च ।
एतत्सपत्नीगृहमप्यदूरं कथं नु मानः सखि नैष मान्यः ॥ ८८ ॥

अत्रत्यं वृत्तान्तं शारिकामुखात्सपत्नी शृणोतीति परित्याज्यो मानः ॥

मज्जंश्चरमसमुद्रे मार्तण्डश्चण्डमात्मनस्तापम् ।
तस्यैव तटविभागे जन्तुविशेषेऽक्षिपत्सत्यम् ॥ ८९ ॥

चक्रवाके ॥

कामेषोरिव भल्लिका विरहिहृच्चिन्ताम्बुपूर्णार्णव-
तापानामिव नौर्विधोरिव कला मानग्रहग्रन्थिहृत् ।
कालस्य च्छुरिकेव हा तव करे संवर्तिका कैतकी
वैयोगी क्रकचद्वयीव सखि मे चित्तं परं कृन्तति ॥ ९० ॥

अवधिभूतवर्षाकालगमनात् ॥

स्मरमतसचिवं कलाविदग्धं भज सखि तं तरुणं शशाङ्ककान्तम् ।
इति गिरमधिगम्य दूतिकाया मुखमबला स्वकरेण सा पिधत्ते ॥ ९१ ॥

आत्मनि पद्मिनीभावप्रकटनेन चन्द्रगुणान्विते तरुणे स्नेहराहित्यं प्रकाशयति ॥

उद्याने स्मरसांपरायविवशामालिङ्ग्य गाढं प्रिया-
मागच्छन्मदवारणेश्वरभयादन्यत्र नीत्वा युवा ।
बुद्ध्वा यां पुनरन्तरायमखिलं स्नेहादवादीद्द्रुतं
श्रुत्वा सा निजजीवितेशविषये स्नेहच्छटामत्यजत् ॥ ९२ ॥

हस्तिदर्शनेनान्यामक्तत्वं द्योत्यत इति । अथवा पयोधरोरुगमनविजितकुम्भस्थलकर-गतिरात्मनि पराजयमाशङ्क्य कुप्यति ॥

जनकतनयां हृत्वा रागाद्गते दशकंधरे
तदुरुविरहज्वालाजालाकुलीकृतविग्रहः ।
रघुपरिवृढो नाधो नोर्ध्वं न तिर्यगवेक्षते
मुकुलितदृगम्भोजद्वन्द्वः समाहितवत्स्थितः ॥ ९३ ॥

श्वश्रूस्ववंशजनपरिलज्जया ॥

पतिव्रताहं प्रमदासु रूढा लोकापवादो नितरां गरीयान् ।
उल्लङ्घ्य शीतं व्रज वर्तमानमायाहि पूर्वं प्रिय भाविशीतात् ॥ ९४ ॥

अधरस्फुटनपरिहारः ॥

मलयाद्रिसमुद्भूते मन्दं वाति समीरणे ।
निनिन्द वानरान्काचित्कामिनी यामिनीमुखे ॥ ९५ ॥

मलयाद्रिसमीरणेन विरहिणी दुःखं प्राप्नोति ॥

सीताजानिरवादीदवनीमखिलां वहन्भुजाभोगे ।
पृथ्वीपतिरिति लोका मा ब्रूध्वं मामतः क्वापि ॥ ९६ ॥

पृथ्वी श्वश्रूरूपिणी, तत्पतित्वमयुक्तमिति ॥

अन्याङ्गनो········कृतोपपत्तिमशोकमालां बकुलस्रजं च ।
प्रियेण दत्तामधिकादरेण न मानिनी स्वीकुरुते कदापि ॥ ९७ ॥

सपत्नीचरणताडनगन्धव···त्याशङ्किनी ॥

आसीत्कर्पटिगोत्रसागरसुधाधामा मुकामाद्भुतः
श्रीविद्याधर इत्यशेषभुवनप्रख्यातनामामृतः ।

यः केदारपदारविन्दयुगलप्रत्यग्रपूजाविधि-
प्राप्ताशेषपवित्रभव्यविभवैः सार्थीकृतार्थश्रमः ॥ ९८ ॥

तत्पुत्रः सर्वमित्रं सरसकविकुलस्तूयमानोरुकीर्ति-
र्विख्यातो जालपाख्यो जगति विजयते टाकवंशप्रशस्यः।
विष्णुर्दैत्येन्द्रयुद्धव्यतिकरसमये व्याकुलत्वात्स्वभार्यां
लक्ष्मीं निक्षिप्य यस्मिन्विहरति दिनशः स्वेच्छया स्वस्थचित्तः॥९९॥

तस्माज्जातः सुजातो निजगुणमणिभिः प्रीणिताशेषलोकः
कोकाहंकारहारिस्मितमहितमुखष्टाकवंशावतंसः।
भाति श्रीनागराजो परनृपतिशिरोदर्शितोद्यत्प्रतापो
राजेते यं समेते विगलितकलहे वाक्च पद्मालया च ॥ १०० ॥

भारत्यां यदि पुंस्त्वमामरतरुव्राते विवेकोऽस्ति चे-
त्माङ्गत्वं यदि मन्मथे सकलता नित्यं शशाङ्के यदि।
सिंहे चेन्नरता जितारियशसो भावज्ञचूडामणे-
स्तत्तत्सद्गुणतोपमानघटना स्यान्नागराजप्रभोः ॥ १०१ ॥

यत्तीक्ष्णाक्षतधारदुर्धरमहाकौक्षेयकाक्षेपण-
क्षुभ्यत्क्ष्मापतिवक्षभोदरदरी निर्भिन्नगर्भायते।
सोऽयं दुर्जयदोर्भुजंगजनितप्रौढप्रतापानल-
ज्वालाजालखिलीकृतारिनगरः श्रीनागराजो जयी ॥ १०२ ॥

इति श्रीनागराजकविप्रणीतं भावशतकं संपूर्णम्।

---

श्रीनारायणभट्टपादकृतः

## स्वाहासुधाकरः।

मङ्गल्यं वः करोतु ज्वलनदयितया संगमे भर्तृभीत्या
ग्रस्ताङ्को हन्त तस्यामपि च हुतभुजा ग्रस्ततां प्रापितायाम्।

---

१. "केरलदेशालंकरणभूतायाः 'निला'नामकपुण्यनद्याः पञ्चाशन्न्यूनार्धयोजनमात्रमु-त्तरे तीरे 'मेप्पुत्तूर्' इति प्रथिते धरणीसुरवंशे कृतावतारोऽयं नारायणभट्टपादः. सोऽयं बाल्येऽनभ्यस्तशास्त्रो बभूव. अवगतवांश्च किंचित्काव्यादिकमात्रम्. ततः कदाचन

निश्चन्द्रे व्योममार्गे सदसि च हरिणा कौशलाद्दर्शितात्मा
वासोभिः सोपहासं सकलसुरगणैरर्चितोऽयं मृगाङ्कः ॥ १ ॥
जिह्वायां कमलोद्भवः स्वगृहिणीं वाणीं दधात्यादरा-
त्कृष्णो वक्षसि सिन्धुराजतनयामाधाय धत्ते मुदम् ।

---

'अच्युत'नामकस्य वैष्णवदासस्य शिष्यतामुपगम्याधीतसकलशास्त्रस्तस्य कुतोऽपि हेतोः संजातं महान्तमामयं निजतपःशक्त्या स्वस्मिन्संक्रमय्य तदपनयनोपायं समालोच्य 'गुरुवायुपुरम्' इति प्रसिद्धे क्षेत्रे संनिहितं भगवन्तं श्रीनारायणमभजत. प्रतिदिनमेतत्स्तोत्ररूपं श्रीमद्भागवतार्थप्रतिपादनपरं सानन्दश्रवणसंतोषजनकसरसरमणीयपदनिवहघटितं नारायणीयनामकं स्तोत्ररत्नं रचितवान्. एतदपि केरलीयैरहरहः पर्युपास्यमानं भागवतमिव विजेजीयते. एतत्स्तोत्रनिर्माणकलिगतदिवससंख्या तत्रत्यान्तिमश्लोके 'आयुरारोग्यसौख्यम्' इति पदेन प्रकाशिता. (१७१२२१० इति गतकलिदिवससंख्या) इत्थं गुरुवायुपुरेशभगवच्छ्रीनारायणप्रसादसमवाप्तनिरवद्यामयापगमसमुज्ज्वलनिजशरीरोऽयं देवालयनदीवास्तव्यराजाभ्यर्थितः 'प्रक्रियासर्वस्व'नामकं पाणिनीयसूत्रव्याख्यानरूपं कमपि ग्रन्थं निर्मितवान्. पुनः कदाचिदयं बालचन्द्रदर्शनजातकौतुकिभिर्देवैः संप्रार्थितः 'कस्मात्कारणान्निखिलैर्जनैरयं वासोविक्षेपपुरःसरमभिवन्द्यते इत्यस्मान्प्रबन्धरूपेणैव वक्तव्यम्' इति द्रुतमेवेदं स्वाहासुधाकरनामकं प्रबन्धरत्नं च कृतवान्. अयं वर्षशतत्रयात्प्राचीनः. तस्मादेतच्छ्लोकास्त्वन्यग्रन्थेषु नोदाहृताः. एतेनायं प्राचीन इति न परिशङ्कनीयम्. 'लोकाम्बिका दिशतु मङ्गलमस्मत्कुलदेवतम्'. सोपोद्घातोऽयं प्रबन्ध उत्तरमलबार(केरल)देशान्तर्वर्तिकटत्तनाडराजेन श्रीमदुदयवर्मणा केरलीयलिपितो भूयसा श्रमेण देवनागराक्षरैर्विलिख्य प्रेषितः, अतो वयं तस्य राज्ञो महान्तमुपकारभारं शिरसा धारयामः. आशास्महे च तद्देशप्रसिद्धनानाकाव्यनाटकभाणादिप्रेषणेन सर्वदैवास्माननुपकरिष्यति रसिकशिरोमणिर्महीपतिः. एतत्कविप्रणीतः कश्चन 'चण्डिकासप्तति'नामको देवीस्तवोऽप्यस्तीत्यपि श्रूयते.

---

१. संपूर्णश्लोकस्त्वित्थम्—'अज्ञात्वा ते महत्त्वं यदिह निगदितं विश्वनाथ क्षमेथाः स्तोत्रं चैतत्सहस्रोत्तरमधिकतरं त्वत्प्रसादाय भूयात्। द्वेधा नारायणीयं श्रुतिषु च जनुषा स्तुत्यतावर्णनेन स्फीतं लीलावतारैरिदमिह कुरुतामायुरारोग्यसौख्यम् ॥' अत्र 'आयुरारोग्यसौख्यम्' इत्यस्मात्पदादार्यभटसिद्धान्तादिज्योतिःशास्त्रप्रसिद्धेन वाररुचेन कटपयादिक्रमेण ग्रन्थनिर्माणसमये (१७१२२१०) एतावती गतकलिदिवससंख्यासीदिति ज्ञायते. तेन १५९० मिते ख्रिस्ताब्दे कविरयं 'नारायणीयं' नाम स्तोत्रं प्रणीतवान्. २. प्रक्रियासर्वस्वस्येदं मङ्गलाचरणम्—'रासविलासविलोलं स्मरत मुरारेर्मनोरमं रूपम्। प्रकृतिषु यत्प्रत्ययवत्प्रत्येकं गोपिकासु संमिलितम् ॥'

देहार्धे गिरिकन्यकां च गिरिशो गृह्णाति मोहाद्यथा
स्वाहां हव्यभुगादधाति जठरे कामातुरोऽयं तथा ॥ २ ॥

एतावानस्ति विशेषः—

ब्रह्मादयस्त्रयो देवाः सदा दधाति वल्लभाम् ।
दधाति याममात्रं न पावकः संध्ययोर्द्वयोः ॥ ३ ॥

अथ कदाचित्—

संध्योपासनकर्मणे सपदि तां निक्षिप्य कान्ते गते
चन्द्रस्तामवलोक्य मन्मथशरैः संतापितात्मा चिरम् ।
मल्लीचन्दनमन्दमारुतगमप्त्वा हन्त निन्द्रापरः
कष्टं कांश्चन वासरानगमयत्प्रत्येकमब्दोपमान् ॥ ४ ॥

तदनु कदाचन दिवसावसानवेलायां मन्दमन्दमायाति च मलयशिखरिशिखरशेखरितमन्दरतरचन्दनतरुमञ्जुलतरमञ्जरीविसृमरमकरन्दबिन्दुभरणमन्दगमने [मन्द]पवने, ऽकुर्वाणे च संध्यासमयावनमदुन्नमदतिकोमलदलपेशलसकलकमलकुमुदकुसुमधुरतरमकरन्दरसतुल्यकालसमास्वादनजनितानन्दकन्दलितविरहिवर्गव्यलीके चञ्चरीके, वियुज्यमाने च विरहवेदनाविदीर्णहृदये ससाक्रन्दवाचालिताशाचक्रवाले चक्रवाके, संप्रयाते च कुहचन सहचरीं निक्षिप्य निशापादिकर्मकलनादरे स्वाहासहचरे पुष्पायुधनिष्पादितपीडाकुल एष दोषाकरः कुमुदिनीरोहिणीभ्यामप्यविज्ञातवृत्तान्तं स्वाहया सनाथीकृतमुटजाङ्गणमभिससार ।

दृष्ट्वा सा कामसेनापतिमतिसुकुमाराङ्गमारादकाण्डे
चन्द्रं नारीजनानामतिशयसुलभादाकुला चित्तलौल्यात् ।
तस्थौ गत्वा गृहाभ्यन्तरमररमुखेनास्य संचारयन्ती
वक्त्रे मन्दस्मितार्द्रानतिमधुरसुधाशीतपातान्कटाक्षान् ॥ ५ ॥

किमिह बहुभिरुक्तमक्रमैः पक्ष्मलाक्ष्याः
सकलभुवनबन्धोश्चातिमुग्धाः कटाक्षाः ।

---

१. कपाटरन्ध्रेण.

हृदयहरणदक्षाः प्रोचुरन्योन्यमेत्य
प्रणयगतिमशेषां दूतिकातुल्यरूपाः ॥ ६ ॥

अनन्तरममृतगुरेवमवादीत्—

पश्य त्वं भृङ्गपोतं कमपि कुमुदिनीतीरभागे चरन्तं
सौरभ्यं मन्दवातैरुपहृतमतुलं किंचिदास्वादयन्तम्।
एतस्या हन्त माध्वीरसमतिमधुरं जातु पातुं नितान्तं
मुग्धे वक्त्रे विकासं दिवसपरिणतिप्राप्तमाकाङ्क्षमाणम् ॥ ७ ॥

अथ स्वाहयाप्येवमभिहितम्—

रविरयमस्तं यातः समागतो हन्त हन्त चन्द्रोऽयम्।
याति विकासमपीयं कुमुद्वती किं विलम्बसे भृङ्ग ॥ ८ ॥

अनयोरेवमादिभिः सल्लापैरुल्लासितमल्लिकायुधविलासयोः सपदि परस्परगृहीतहस्ताम्बुजयोरालिङ्गनचुम्बनाडम्बरैः संभृतानन्दयोरतिमधुरमधरबिम्बमास्वादयतोरतिकोमलवदनकमलसमवलोकनविधुरविरहवेदनयोरन्तरान्तरा ससंभ्रमज्वलनसमागमनावेक्षणव्यापृतैकैकनेत्रयोः स्वाहाचन्द्रमसोर्मन्दमन्दनिष्पन्दमानमञ्जुलतरमिलितनर्मान्कारमनोहरा मञ्जुशिञ्जानवलयनूपुरमेखलागुणा दशनानिपातावदलितसकलावयवाः प्रसृमरस्वमलेशमिलितनिखिलशरीराः शनैर्म्लायमानसकलावयवाः सुरतोत्सवाः संबभूवुः। ततश्च—

भूयादेवं प्रभाते दिवसपरिणतौ चानयोरङ्गजन्म-
क्रीडाभेदो निगूढो मुहुरपि सदयं सस्पृहं सप्रमोदम्।
संभापन्तौ युवानौ विरहहुतवहग्रस्तदेहावभूतां
स्वाहा हा हन्त पश्चादपि च हुतवहग्रस्तदेहा बभूव ॥ ९ ॥

तदनु तयोरेवमेव चौर्यसुरतमनुसवनारनुक्षणविजृम्भिताभिलाषयोः कदाचिदप्यपरिपूर्णमनोरथयोः स्वाहासुधाकरयोराज्यधारयेव महानलो मदनानलः प्रतिक्षणं समजृम्भत।

अथ निपुणमतीनामग्रणीरुग्ररूपः
स्मरशरपरितापव्याकुलाङ्गो मृगाङ्कः।
प्रतिदिनमवियोगे कल्पयन्नभ्युपायं
प्रणयपरवशां तां वल्लभामेवमूचे ॥ १० ॥

इयां विद्यामधीष्व त्वमिह सहचरात्पावकाद्व्याजपूर्वं
धत्ते सोऽयं यथा त्वामनुदिनमुदरे सादरं हन्त पश्चात्।
धृत्वा मां याहि नित्यं जठरकुहरमेतस्य जातानुमोदा-
वावां तस्मिन्नवमन्तौ तदनु विहरणं कुर्वहे सार्वकालम् ॥११॥

अथ सा हुतवहसहचरी मधुरां जारभारतीं तथेति प्रतिगृह्य स्त्रीजनसुलभेन निर्बन्धेन निबध्य सुदुर्लभामपि तां विद्यां जडात्मनो हुताशनादधिजगाम।

संध्यायामथ निर्गते पुनरहो कामाहवं कुर्वतोः
स्वाहाचन्द्रमसोः क्षणेन स गतो यामोऽयमामोदिनोः।
संप्राप्ते परिणतरि क्षणमिव स्वाहानु विद्यावशा-
त्संजग्राह निजोदरे शशधरं तामप्यसौ पावकः॥ १२ ॥

ततश्च—

कथं वा राकायामिह नहि समायाति गगने
शशाङ्को राज्यर्धं गतमिति मिथो हन्त गदताम्।
नितान्तं तिथ्यर्क्षग्रहणगणनव्याकुलधियां
जनानां संजाताः कतिचन महान्तः कलकलाः॥ १३ ॥

हा हा नः प्राणनाथः क नु खलु विगतः संत्यजन्कष्टमस्मा-
नित्थं तारावलीनां क नु मम जनको हन्त हन्तेति चान्द्रेः।
आहारो हन्त हा हा गत इति च सुराणां नितान्तातुराणां
वाक्यैरश्रुप्रवाहैरपि च सुरकुलं व्याकुलं संबभूव॥ १४ ॥

अथ शतमखचतुर्मुखप्रमुखैरखिलैरमरैरस्मदापन्निवारणप्रवीणो नारायणान्नान्यः कश्चिदिति निश्चिन्वानैरनवरतस्तुतिरवमुखरितहरिदन्तरालैः संचिन्तितो भगवानम्बुजाक्षः।

विज्ञायाथ दयानिधिः स भगवानाकाङ्क्षितं नाकिनां
सद्यः प्रादुरभूदपारमहिमा मन्दस्मितार्द्राननः।
नीलाम्भोधरजालकोमलतरैरानन्दयन्नङ्कै-
श्चन्द्रालोकनकौतुकं सुमनसां वक्त्रेन्दुना पूरयन्॥ १५ ॥

स्वाहाग्रस्तं मृगाङ्कं तुलितमहदकूपारगाम्भीर्ययासौ
बुद्ध्या निध्याय देवान्मुकुलितकरपङ्केरुहानेवमूचे ।
विज्ञातं वः सुरेन्द्राः सकलमिह मया कारणं मन्त्रणामे
संजातं घोरघोरं व्यसनमिदमहं नूनमुन्मूलयामि ॥ १६ ॥

यूयं यात बहिः क्षणं हुतभुजा संभाषणं कुर्महे
नास्माकं वचनं तदन्तरगता स्वाहापि गृह्णातु सा ।
षट्कर्णश्रुतमन्त्ररक्षणविधौ को वा विदग्धः पुमा-
नित्थं नीतिविदां वचो न किमिदं युष्माभिराकर्णितम् ॥ १७ ॥

नारायणेन गदिता मुदितानुभावा-
मेवंविधामथ गिरं विबुधा विचार्य ।
स्वाहागतं निखिलचापलमाकलय्य
व्रीडापग नतमुरारिपदाः प्रयाताः ॥ १८ ॥

स्वाहां विन्यस्य याते कुहचन दहने पार्श्वभागं मुरारे-
र्देवाः स्वाहासमीपं निभृतमुपगतास्तस्थुरत्यन्तगूढाः ।
सापि प्रीता समन्तात्प्रतिमुहुरवलोक्याशु लब्धावकाशा
वासोलेशेन हीनं गगनपथमथो यापयामास चन्द्रम् ॥ १९ ॥

अथ निभृतमवस्थिताः सुरेन्द्राः परिहसनाभिमुखाः सहस्ततालम् ।
वसनमुरुतरं समुत्क्षिपन्तो विविधतरां गिरमेवमूचिरे ते ॥ २० ॥

तव हन्त वियोगपीडितं जनमेनं प्रविहाय किं भवान् ।
गमनं विदधाति गृह्यतां वसनं नेति च केचिदूचिरे ॥ २१ ॥

निहितं वसनं क्व तावकं रचयामोऽस्य गवेषणं वयम् ।
अथवा वसनं प्रगृह्यतामिदमेवेति च केचिदूचिरे ॥ २२ ॥

व्यसनं वसनापहारजं कथमेतद्भवतः समागतम् ।
त्वरितं च मदीयमंशुकं परिधेहीति च केचिदूचिरे ॥ २३ ॥

देवो नारायणोऽथ ज्वलनमुपगतं मन्दमन्दं बभाषे
चन्द्रालोकाभ्युपायं कथयितुमधुना बुद्धिकौशल्यशाली ।

आनीतः स्वं समीपं स किल शशधरो लक्षितो देववृन्दै-
स्तस्माद्याहीति याते तदनु च दहने देवदेवस्तिरोऽभूत् ॥ २४ ॥
निन्दन्तः केचिदिन्दुं कतिचन दयितां पावकस्य क्षिपन्तः
स्वाहानाथस्य जाड्यं महदिति च परे निर्विशङ्कं वदन्तः।
चित्रं चित्रं चरित्रं सकलसुरपतेर्माधवस्येति भक्त्या
वैकुण्ठं संस्तुवन्तो निजमथ विबुधा मन्दिरं भेजिरे ते ॥ २५ ॥

स्वाहासुधाकरं नाम प्रबन्धमतिकोमलम्।
अकरोदचिरेणैव नारायणमहीसुरः ॥ २६ ॥

इति श्रीनारायणभट्टपादकृतः स्वाहासुधाकरः समाप्तः।

## नारायणसूनुश्रीकृष्णकविप्रणीतं

# ताराशशाङ्कम्।

चञ्चच्चन्द्रमरीचिभिश्चकचकच्चूडं चलल्लोचना-
चारुस्मेरकुचोपभोगघुसृणव्यालिप्तवक्षःस्थलम्।
बिभ्राणं धनुरैक्षवं सृणिगुणौ पौष्पं शरं चोदय-
त्सूर्यांशुप्रकरद्युति गणपतिं वन्दे जगन्मोहनम् ॥ १ ॥
दारुकावनविलोललोचनोदारकामकलनैककौतुकम्।
कामिनीकलितवामभागकं वामदेवमनिशं श्रयामहे ॥ २ ॥
राधापयोधरतटीपटुचित्रकार-
पाणिं नखांशुचयकन्दलिताग्रवेणुम्।
वन्दे कलिन्दतनयाजलकेलिलोल-
गोपालिकावसनचौर्यपरं किशोरम् ॥ ३ ॥
श्रुतिपरिसरगुञ्जद्भ्रमरी[2]शिञ्जिनीकं
मधुरिमनिधिचापं सौरभाधाररोपम्।

१. 'स्वाहासुधाकरप्रबन्ध'कर्तुरेव नारायणस्यायं सूनुरिति भाति. २. भ्रमरीमौर्वीकम्. ३. इक्षुचापम्. ४. पुष्पबाणम्.

दधदरुणिमसंपत्कोषमुन्मादितेशं
सुखयतु मम भावं धाम शृङ्गारदैवम् ॥ ४ ॥

ताराधीशरुचिः सेयं तारा जयति संततम् ।
यद्विभूतिः सरसतां पदेषु तनुते कवेः ॥ ५ ॥

वाञ्छन्नपि कविकीर्तिं लोकानां लालनीय एव स्याम् ।
लोके न हासहेतुश्चन्द्रकलाग्रहणचापलं हि शिशोः ॥ ६ ॥

कृतिर्मम नवीनापि कमनीया भवेदियम् ।
अप्रौढिमा नवोढेव रसिकानां कलाविदाम् ॥ ७ ॥

दोषान्निरस्य गृह्णन्तु गुणमस्या मनीषिणः ।
पांसूनपास्य मञ्जर्या मकरन्दमिवालयः ॥ ८ ॥

कलशजलधिगेहस्याक्षि यं वाममाहुः[1]
प्रथमरसविकासप्रौढिमश्रीनिवासम्[2] ।
स जयति जगदेकानन्दनोद्दामधामा
सकलविभवभूमा देवतासार्वभौमः ॥ ९ ॥

अयं सखायं मम चिन्त्यकार्यं चकार वैरेक्षणवीक्षणेन ।
इतीव रोषेण शिरः पुरारेराक्रम्य यो भातितरां कलात्मा ॥ १० ॥

कुमुदवलयव्यालोलश्रीविलाससुधासरि-
द्भ्रमकरकरश्रीकाद्राकाङ्गनासुमकन्दुकात् ।
अविरहयुवश्रेणीसाम्राज्यसौख्यसुरद्रुमा-
त्त्रिजगति यतो निर्वर्ण्यं वा न वर्ण्यमवेक्ष्यते ॥ ११ ॥

सुरासुरशिरोरत्ननीराजितपदाम्बुजः ।
स राजसूयं सम्राजो विधातुमुपचक्रमे ॥ १२ ॥

अतिविचित्रतदुत्सववीक्षणोत्सुकहृदः ससतीसुतबान्धवाः ।
सुरनरोरगलोकनिवासिनः सरयमभ्यगमन्सकला जनाः ॥ १३ ॥

वाणीपाण्यग्रचञ्चद्व्यजनभवमरुन्मृष्टहोमश्रमाम्बौ
दिक्कान्तालोचनान्तप्रसृमरसहजप्रेमसाम्राज्यधात्रि ।

---

१. दुग्धाब्धिशायिनो विष्णोर्वामनेत्रं चन्द्रम्. २. शृङ्गारः.

तस्मिन्सौन्दर्यमन्दीकृतमदनमदप्राभवे श्रीसनाभौ
सर्वासामङ्गनानां सपदि समपतन्दृष्टयः कामकृष्टाः ॥ १४ ॥
स एव जानाति विलासिनीनां कटाक्षतैक्ष्ण्यं कमनीयमूर्तिः।
योऽयं कलङ्कीत्यधुनापि लोकैरालोक्यते तेन गृहीतसारः ॥ १५ ॥
विस्मयस्तिमितनेत्रतारकं विस्मयस्फुरणपक्ष्म काचन।
वीक्षते स्म तमतिस्मराकृतिं लक्ष्यसाधनमिवानुकुर्वती ॥ १६ ॥
निमिषद्भिरुन्मिषद्भिस्त्रपया कुतुकेन विकसितानङ्गैः।
लावण्यनिधिमपाङ्गैस्तमापिबन्तीव कापि बभौ ॥ १७ ॥
अहो लक्ष्मीरहो रूपमहो लक्षणशालिता।
अहो दाक्षायणीपुण्यमिति काचित्समाल्पत् ॥ १८ ॥
काचिदन्तःप्ररूढस्य कुतूहलमहीरुहः।
कुसुमेनोद्गतेनेव स्मितेनाकलिता बभौ ॥ १९ ॥
अर्पयैतमधरं मधुरं ते मत्सखाय शशिने सहमेति।
अन्तरङ्गजनुषोन्नमितास्येवोन्मुखी गगनमैक्षत कापि ॥ २० ॥
चकिता मृगीव काचिच्चलनयना वक्रिताननोद्ग्रीवा।
व्यलसत्परुषतरस्मरशरागमायनमवेक्षमाणेव ॥ २१ ॥
रेजे काप्यङ्गभङ्गप्रसृतभुजलतालिङ्गितुं संप्रवृत्ते-
वैका किंवापि वक्तुं चलितरदपटी चुम्बितुं प्रोद्यतेव।
अन्या रोमाञ्चिताङ्गी बहिरिव विगलत्प्रौढमानान्धकारा-
प्यन्योद्यन्मन्दहासा विमलरुचि किरन्तीव संमोहचूर्णम् ॥ २२ ॥
निमीलन्निःश्वासा निमिषदरविन्दाभवदना
तिरोमीलन्नेत्रा तनुजलकणालंकृततनुः।
उदञ्चद्रोमाञ्चा व्यलसदपरिस्पन्दसकल-
प्रतीका काप्यन्तःकरणरतितान्तेव तरुणी ॥ २३ ॥
अपसरापसरेति पुरः स्थितं जनमिव ब्रुवती करकम्पितैः।
अनुचकार लतामनिलोच्चलत्किसलयामपरा चपलेक्षणा ॥ २४ ॥

अयं किल भयंकरं त्रिभुवनासुवार्तंभयं
ससर्ज परुषं विषं तादिति पुष्कराक्षो रुषा ।
चकर्ष कलशोदधेः सकलभाग्यसारं श्रिया
. सहामुमिति काचिदन्वलपदेणशावेक्षणा ॥ २५ ॥

काचित्तं हृदयंगमं मनसिजप्रेम्णेव संभावय-
न्त्युद्यत्केलिमनोरथोत्सवरसोल्लासा बभासे क्षणम् ।
सव्रीडेव सकौतुकेव चकितेवाह्लादिनीवोन्मदा
संभ्रान्तेव च कोपना व्यसनिनीवानन्दमान्द्रेव च ॥ २६ ॥

परपुरुषमुखं न वीक्षणीयं कुलभवयेति विचिन्तयामि भूयः ।
घटयितुमपि पक्ष्म नैव शक्नोम्यहह किमेतदिति स्म वक्ति कापि ॥ २७ ॥

किं पश्यामि किमालपामि किमहं ध्यायामि किं चिन्तये
किं वाञ्छामि वितर्कयामि किमु किं तिष्ठामि कुर्वे च किम् ।
इत्याकूतविकल्पजल्पितशता काचित्कुचोज्जृम्भणा-
त्रुट्यन्तीमपि कञ्चुलीं विगलितां नीवीं च नावैक्षत ॥ २८ ॥

दग्धो मारस्त्रिपुररिपुणेत्यद्य मिथ्या विजाना-
म्येतं पश्यन्त्यहमिति मर्खां काञ्चिदुचे ब्रुवाणाम् ।
मुग्धे किं त्वं भ्रमसि स तनुं तस्य हुत्वाक्षिवह्नौ
लेभे तस्याप्यतिमदकरश्रीकमेतच्छरीरम् ॥ २९ ॥

अयं नात्रेः पुत्रो नयनमलजातस्य नु कथं
भवेल्लावण्यश्रीरियमनुपमा सोऽयमथवा ।
तपःशक्त्या तेजोनिधिमपि दृगुल्लासकममुं
ससर्जार्कि गर्वं तिरयितुमिति स्माह च परा ॥ ३० ॥

यदा सुमशरः शरं समसृजत्तदा पार्वती
मनस्यकलयत्परं पुररिपुर्यदासौ शिरः ।
रुरोह विरहागमव्यसनतस्तदाद्येकतां
तया स विषमेक्षणोऽप्यलभतेति काप्यालपत् ॥ ३१ ॥

१. लोकत्रयप्राणहारकम्. २. विष्णुः. ३. क्षीरसागरात्.

अत्रेः क्व शक्तिरपि तस्य पितुर्नहीदृ-
गाश्चर्यवस्तुकलनेप्ष्विति चिन्तयन्ती।
कस्माद्भ्रमामि मनसोऽभवदेष विष्णो-
रित्याह नु श्रुतिरितीव जगाद कापि ॥ ३२ ॥

एवं स्मरेणाकुलितासु तासु व्यालोलदृष्टेरुडुनायकस्य।
तस्यापि सांक्रामिकवद्बभूव स्मारो विकारः करणापहारी ॥ ३३ ॥

परा लक्ष्मीरेषा प्रथमरसवर्णीयमतनो-
रियं संपद्भूनामियमपि तपःसंततिफलम्।
इयं देवी वात्स्यायनमुनिमतस्येति स तत-
स्ततस्तास्ताः पश्यन्किमपि परमं प्रैक्षत महः ॥ ३४ ॥

किमेतदित्याकुलितान्तरात्मा विमृज्य नेत्रे मुहुरीक्षमाणः।
तदन्तरे मानुषरूपमेकं ददर्श नारीत्यपि निश्चिकाय ॥ ३५ ॥

श्यामामुन्मुखजानुसंगतभुजं सव्यङ्घ्रिदेशोल्लस-
ज्जान्वध्यासितकूर्परं करतलन्यस्तैकगण्डस्थलम्।
आसीनां स्खलितांशुकान्तविकसद्वक्षोरुहां वीक्ष्य तां
मायामेव मनोज्ञाकृतिधरां मेने स मैनध्वजीम् ॥ ३६ ॥

पुनः स रम्भा किमुतोर्वशीयं तिलोत्तमा गौतमसुन्दरी वा।
रतिर्नु वाणी गिरिजा रमेति विचार्य वत्ति स्म चिराय ताराम् ॥ ३७

तस्या गुरुनितम्बिन्या लावण्यं रमणीयताम्।
सौन्दर्यमपि संपश्यन्स एवं हृदयेऽकरोत् ॥ ३८ ॥

अहह महल्लावण्यं मोहनमूर्तेर्यतो दृगङ्गेऽस्याः।
यत्नेनैव विधेया रत्ने स्निग्धे शलाकेव ॥ ३९ ॥

नूनमालोक्य कान्तायाः कान्तिमस्यास्तडिल्लता।
लज्जिता जातमात्रैव तत्र तत्र विलीयते ॥ ४० ॥

को नाम रामणीयकमेतस्या वर्णयेत्कविर्लोके।
एकैकमपि यदङ्गं न विमुञ्चत्यन्यतो दृशं प्राप्ताम् ॥ ४१ ॥

सृष्ट्वा प्रथममहल्यां तिलोत्तमामपि विधिः कृताभ्यासः ।
एतां ससर्ज नूनं नो चेत्कथमङ्गसौष्ठवमियत्स्यात् ॥ ४२ ॥

तिरश्चां नो लज्जेत्यभिदधति मिथ्यैव विबुधा-
श्चमर्यो यद्दृष्ट्वा कचनिचयमस्या वनमगुः ।
दृशं दृष्ट्वा प्राणेष्वपि विगततृष्णैरविरतं
चकोरैरङ्गारग्रसननियमः सोऽपि विधृतः ॥ ४३ ॥

श्रुत्वास्या वचनं वनप्रियतया ख्याताः पिका मैव भू-
त्स्वीयानां कलकण्ठतेति करटैः संरक्षयन्ते शिशून् ।
आस्तामेतदचेतना अपि दिवारात्रं यदालाबुकं
धृत्वा पात्रमहो भ्रमन्ति भुवने वीणा विरक्ता इव ॥ ४४ ॥

मत्वा जितं मनसिजेन मम प्रियैव
यः सुन्दरीति भुवनेषु ववल्ग दृप्तः ।
दृष्ट्वाथवा स्त्रियमिमां निपपात भाल-
वह्नौ हरस्य मुरकार्यचिकीर्षयेव ॥ ४५ ॥

मनोजेऽनङ्गे तत्करमरमिजानाश्रयशुचा
द्विधा जातं चापं यदपि बहुधा तस्य विशिखाः ।
अमुष्याः संप्राप्य भ्रुकुटिकुटिलापाङ्गरुचितां
विवल्गन्त्येते ते सकलजनसंमोहनचणाः ॥ ४६ ॥

अस्या मुखेन चलकुन्तललाञ्छितेन
मुग्धास्मितेन समतामधिगन्तुमेव ।
पाथोरुहं परिचयं कुरुते मिलिन्दै-
र्हंसार्भकं च वदनेन मुहुर्दधाति ॥ ४७ ॥

कुचावमुष्याः स्मरकुम्भिकुम्भौ न वेद को नाम यतः समीपे ।
वलित्रयाकल्पितमुष्टिमुद्रा तनूरुहश्रेणिसृणिर्विभाति ॥ ४८ ॥

नामैव न स्यादसतः सतो न स्याददर्शनम् ।
ब्रह्मेव तत एतस्या वलग्नं वेद्यगोचरम् ४९ ॥

सकलभुवनमोहनस्य केलीसदनमिति ब्रुवते यदङ्गजस्य ।
जघनमिदमृतं मनो विमूढं न पुनरतो विनिवर्तते यतो मे ॥ ९० ॥

तारुण्याङ्कुरवृद्धये मनसिजः सीमन्तकुल्यामुखे
लावण्याम्बुमवाहयज्झरमहो तेनालकान्पार्श्वयोः ।
कृत्वाधिक्यमितस्ततो विकृषता वक्षोजशैलाग्रतो
वेगेनापतता निखातमुदरं श्रोणीभरश्चैधितः ॥ ९१ ॥

अंशैरियमभूत्त्रर्नामिन्दिरापार्वतीगिराम् ।
यदङ्गेष्वपि सर्वेषु सौन्दर्यमुपमा समा ॥ ९२ ॥

अस्यां ममेव हृदयं मपि नूनमस्याः
सक्तं स्मितेन लसितं चलितं कटाक्षैः ।
उन्मीलितं कररुहैः स्फुरितं करेण
स्विन्नं हृदा समुदितं हि मनोरथैश्च ॥ ९३ ॥

अतः परमहो सौख्यमैहिकं किमु देहिनाम् ।
अकृत्रिमतमप्रेमरमणीसंगमादपि ॥ ९४ ॥

शृङ्गारो हि रसो मरुन्मलयभूर्मल्लीप्रसूनं वय-
स्तारुण्यं समयो मधुर्मनसिजो मित्रं सहायो मनः ।
उत्साहो बलमङ्गना सहृदया दूतः सहासेक्षणं
सारल्यं च गुणो रतिर्विरहणं सौख्यं तदैक्यं परम् ॥ ९५ ।

सन्तु स्वैरविहारसौभगभुवो वाराङ्गना निर्भर-
व्रीडाविभ्रमवल्गुवल्गितरसाः स्वीयाः सुरूपा अपि ।
निर्व्याजप्रणयानुरागविकसद्वक्षोरुहालिङ्गनै-
र्लोके का नु पराङ्गनेव सरसं प्रेयांसमुल्लासयेत् ॥ ९६ ॥

निन्दन्तु सुमनसो वा कुर्वन्तु कुलाद्बहिर्वा माम् ।
सहृदयया परमनया सह वस्तव्यं क्षणं वापि ॥ ९७ ॥

योगे भोगेऽपि सक्तानां वस्तुना ह्युद्गतेन यत् ।
अद्वैतं तत्परानन्दसाम्राज्यं सुधियो विदुः ॥ ९८ ॥

एवं विचिन्तयन्नेव संवनं तत्समापयन् ।
स दक्षिणीकृतक्षोणीवलयः कमलानुजः ॥ ५९ ॥
अभूदवभृथस्नानं यत्स एव सुधारुचेः ।
स्मारदीक्षाभिषेकोऽभूत्तारासंसक्तचेतसः ॥ ६० ॥

ताराविधू सहृदयावपि मन्मथार्तौ
ज्ञातेङ्गितौ सहमितेक्षणविभ्रमेण ।
तौ नूतनाभिसरणत्रपितान्तरङ्गौ
मुग्धाविव प्रभवतः स्म न चोपसर्तुम् ॥ ६१ ॥

क्वचन संगतयोर्विजने तयोः कुतुकिनोरपि न त्रपितात्मनोः ।
हृदयहारि बभूव परस्परं सहमितं क्षणमीक्षणवल्गितम् ॥ ६२ ॥

अन्योन्यवीक्षणपदं मुहुरीक्षमाणौ
साकूतमत्र किमितीव ततस्ततस्तौ ।
अन्योन्यमीक्षणकलामिव शिक्षयन्तौ
ताराविधू व्यलमतां क्षणमात्तलज्जौ ॥ ६३ ॥

यदा मदनमार्गणत्रुटितमानबन्धादिव
त्रपा हृदयतश्च्युता निभृतकौतुकोज्जृम्भणात् ।
अकम्पत कस्तदा पुलकितः कपोलस्तयो-
स्तनुः श्रमजलाङ्किता स्तिमिततारका दृग्बभौ ॥ ६४ ॥

प्रसारय दयामयं मयि कटाक्षमित्याकुलं
वदन्गुरुनितम्बिनीमुपससार चन्द्रो यदा ।
शनैर्गलैलसत्पदं किमिदमाचरस्यङ्गज-
प्रियेति बहुशो वदन्त्यपससार सा कामिनी ॥ ६५ ॥

सरयमपसरन्तीं तां परित्यागशङ्का-
कुलमिव पदयोर्यत्प्राग्रहीदन्तरीयम् ।
स्मरसुहृदपि तेन व्याहरन्तीं च मा मे-
त्यमनुत निजचेतःकामनाकल्पवल्लीम् ॥ ६६ ॥

---

१. [illegible]. २. [illegible] वा स्यात्.

मम दयस्व विलासवतीत्ययं चिबुकसीम्नि चकार करं यदा।
त्यजति मामिति रोषवशेन तन्मुखमवक्रयदीषदिव त्रपा ॥ ६७ ॥

यदुपविवेश सा दलितकञ्चुलिकाविगल-
न्मणिरशनावलग्नकरमीषदपत्रपिता।
तदुपदिदेश कामसुहृदे किल कामकलां
परवनितारातिक्रमविलासविबोधकरीम् ॥ ६८ ॥

ताराधरसुधासारहारी सोऽयं सुधामयः।
अभूदन्नानुरूपा हि तनुरूपविवृद्धयः ॥ ६९ ॥

दयिताकुचपक्षपातिता परमिन्दोरिति मन्महे वयम्।
अधुनापि रथाङ्गपक्षिणौ यदयं तत्सदृशौ विबाधते ॥ ७० ॥

अमन्दानन्दश्रीकरणमुदयच्चाटुवचसो-
स्तयोः किंवाप्यासीदसमशरलक्ष्मीविलसनम्।
अनिर्वाच्यं कन्याजननयनकौतूहलपदं
यदाहुर्धीराणामपि हृदयचापल्यजननम् ॥ ७१ ॥

किमतः परं विचित्रं यदिन्दुनिकटेऽन्धकारमुच्छलति।
वल्गति रथाङ्गयुग्मं कुवलयमपि मीलितुं यतते ॥ ७२ ॥

नीलोत्पले वा भ्रमरी तिरो भवेत्पाथोरुहे वापि मरालशावकः।
यदेतयोर्मीलनमेकदा भवत्यदस्तु मायां मदनस्य मन्महे ॥ ७३ ॥

को नाम रतिसौख्यं तद्वर्णयेन्मतिमानपि।
भवन्ति यत्रोल्लासाय नखदन्तक्षतान्यपि ॥ ७४ ॥

क्वचिद्रम्ये हर्म्ये क्वचिदपि नदीकूलपुलिने
क्वचिन्मञ्जौ कुञ्जे क्वचिदुपवने मन्दपवने।
क्वचिल्लीलाशैले सरसतरसालेऽपि स तया
समं सीमन्तिन्या व्यहरदसमश्रीरहरहः ॥ ७५ ॥

तारानुगाः काश्चिदमर्त्यमर्त्यभोगिस्त्रियो भोगरतान्तरङ्गाः।
संगत्य ताभी रमते स्म नित्यं कृष्णो यथा गोकुलसुन्दरीभिः ॥ ७६ ॥

योगमार्गप्रवृत्तस्य सुषुम्णा नाडिकास्विव ।
तासु मुख्याभवत्तारा तस्य भोगरतात्मनः ॥ ७७ ॥

तत्पतीनुपचरन्निव यात श्वः परश्च इति वारयति स्म ।
स्वां पुरीं जिगमिषून्मधुरोक्त्या सोऽयमङ्गजविलासरतात्मा ॥ ७८ ॥

राज्ञि सर्वानुकूलेऽपि बाहुल्येन मृगीदृशाम् ।
सापत्न्यकलहः प्रादुरासीदैकान्त्यघातुकः ॥ ७९ ॥

स्पष्टे किंचित्तदा चौर्ये कामिन्योऽपि यथापुरम् ।
न शेकुरभिसर्तुं तं चिन्तासंतानयन्त्रिताः ॥ ८० ॥

असन्तः कं नु निन्दन्ति सन्तो निन्दन्ति कं पुनः ।
नूनं रन्तव्यमित्येव काश्चिन्न तममूमुचन् ॥ ८१ ॥

ताराविरहितस्यासन्नन्या नानन्दहेतवः ।
तस्य लक्ष्मीवियुक्तस्य राज्ञः प्रकृतयो यथा ॥ ८२ ॥

कस्य नाम सुखाय स्यादनेकरमणीकता ।
तस्य राज्ञोऽपि यच्चित्तवैक्लव्यमुदपादयत् ॥ ८३ ॥

केचिच्चन्द्रं निनिन्दुः कतिचन वनिताः केऽपि शेपुस्तदानीं
जेपुः केऽप्याभिचारं मनुशतमसृजन्केऽपि कृत्याः करालाः ।
तस्मिंस्तेजस्विनीदं सकलमपि मुधाभूतमालोक्य दिष्टं
जानन्तः केऽपि दुष्टं सह युवतिजनैर्निर्ययुः स्वस्वलोकान् ॥ ८४ ॥

यातासु तासु वनितासु ततः क्रमेण
लीलास्थलानि चरितानि च तानि तानि ।
दृष्ट्वा विचिन्त्य विमना विललाप शश्व-
त्ताराविलासरसिकः स सखा स्मरस्य ॥ ८५ ॥

एतत्तदेव भवनं वनमेतदेव
शैलोऽप्ययं कुसुमराशिरयं निकुञ्जः ।
सौधोऽप्यसौ किमु न भान्ति विशोचयन्ति
सर्वेऽप्यहो विरहितं प्रियया तयाद्य ॥ ८६ ॥

1. चन्द्रे.

दिशि दिशि नलिनाक्षि लक्ष्यसे त्वं तदपि न मोदयसे मनो मदीयम्।
प्रकटयति किमङ्गजः स्वमायामयि हृदयं मम मुह्यति प्रकामम् ॥ ८७ ॥

प्रियजनविरहादप्यस्ति दुःखं किमन्य-
त्रयमपि भुवनानां नूत्नवद्भाति यत्र।
किमु हृदयविकारश्चाक्षुषं वापि जाड्यं
जगदिदमखिलं वा शून्यतामेत्यकाण्डे ॥ ८८ ॥

वपुरतिकृशमस्तु बाष्पधाराविलमधुनाक्षि तदङ्गसङ्गहीनम्।
हृदय दयितया [तया] क्षणं वा नहि विरहस्तव खिद्यसे किमर्थम् ॥८९॥

इदानीमप्यग्रे मम विचलतीव प्रतिपदो-
च्चलच्चेलप्रान्ता चरणकटकोदारनिनदैः।
मरालानाकर्षन्त्यनुपदमुदञ्चत्कुचतटी-
पटाकृष्टिक्रीडाविचलितकरा सा स्मितमुखी ॥ ९० ॥

अद्याप्युल्लसतीव सा मम पुरः पाञ्चालिकेव स्थिता
द्वारे केलिनिकेतनस्य कटिविन्यस्तैकहस्ताम्बुजा।
अन्येनाददती करेण करतः सख्याः शनैर्वीटिकां
पश्यन्ती मम मार्गमेव विलसन्नीलोत्पलाभेक्षणा ॥ ९१ ॥

अद्यापि मामिव ममेति विलासिनी सा
माद्यन्मरालमदहारिगतिर्मृगाक्षी।
आच्छादयन्त्यनुपदं च विजृम्भमाणं
वक्षोजमंशुकसमीकरणच्छलेन ॥ ९२ ॥

अद्यापि प्रविलसतीव मे पुरस्तात्तन्वङ्गी घनकुचभारसंनताङ्गी।
वीटीं मे सकुतुकमर्पयन्त्युदारस्मेरास्या दरचलितप्रवालपाणिः ॥ ९३ ॥

अधुनापि धुनातीव करं मम कुचस्पृशम्।
करेण कङ्कणक्वाणकैतवान्मेऽतिशंसता ॥ ९४ ॥

अद्यापि मामिव परिष्वजतेऽतिवेल-
कौतूहलत्रुटितकञ्चुकसंधिबन्धा।

काञ्चीलतां विगलितामपि नेक्षमाणा
मल्ली रसालमिव सा मधुरस्मितास्या ॥ ९९ ॥

अद्यापि चिकुरभारप्रचलन्मल्लीमरन्दधाराभिः ।
अभिषिञ्चतीव सा मां कामकलोल्लासौख्यसाम्राज्ये ॥ ९६ ॥

अद्याप्यग्रे मम विलसतीवानिशं सा रतान्त-
श्रान्ता कान्ता लुलितकबरीभारचञ्चत्करान्ता ।
स्वेदार्द्रेण प्रविशदरुचा वाससोल्लासिताङ्गी
सद्यो दुग्धाम्बुधिसमुदिता श्रीरिव स्वर्णगौरी ॥ ९७ ॥

इतः परं च किं दुःखं कामुकस्य न यत्प्रिया ।
लक्ष्यते नयनोन्मेषे लभ्यते करवल्गिते ॥ ९८ ॥

तच्चिन्तयामि परिषत्सु पराङ्गनानां
सभ्रूविलाससमलमैर्वल्गितैरपाङ्गैः ।
कंदर्पकार्मुकलतोत्पतितैरिवास्त्रै-
र्धैर्यं ममापचिनुते स्म हसन्मुखी सा ॥ ९९ ॥

तच्चिन्तयामि चिबुकाकलिताङ्गुलिभ्रू-
भङ्गाभिरामदरवक्रितवक्त्रमक्ष्णा ।
संभाव्य मां मनसि पूर्णमनोरथा सा
चित्रार्पितेव यदभात्पुलकाचिताङ्गी ॥ १०० ॥

तच्चिन्तयामि मयि चञ्चदपाङ्गभङ्ग-
भङ्गीप्रसद्भुजशिरःस्खलदंशुकान्तम् ।
जृम्भाविरामविकलोक्त्यवदद्भुजेव
कान्ते क्षणं कुरु कृपामिति सा यदालीम् ॥ १०१ ॥

तच्चिन्तयामि रहसि स्वयमन्तिकं मे
प्राप्तापि यन्मम करं चिबुकाग्रलोलम् ।
मा मेति वल्गु निगदन्त्यरुणत्प्रकम्प्र-
हस्तावधूतत्रुटितकञ्चुकनीविबन्धा ॥ १०२ ॥

तच्चिन्तयामि गुरुसाध्वसलोलनेत्र-
मुद्यत्त्रपास्खलितचाटुनिषेधवाक्यम् ।
ईषत्पराकृतदुकूलमनङ्गचौर्य-
विक्रीडितं किमपि भोगिकुलैकभाग्यम् ॥ १०३ ॥

तच्चिन्तयामि सदनं मम सा समाया-
न्त्येकाकिनी क्व चलसीत्यनुयुञ्जता यत् ।
लीलाशुकेन मृदु लापयति स्म तारा
कान्तस्य संनिधिमितीव सयुक्ति भीरुः ॥ १०४ ॥

तच्चिन्तयामि सततं मयि चुचुकाग्र-
चञ्चत्करे पुलकघर्मजलाचिताङ्गी ।
यत्स्वाम्बरं विगलदप्यनवेक्षमाणा
मञ्चे न्यषीददचिरं विनिमीलिताक्षी ॥ १०५ ॥

तच्चिन्तयामि निजपाणिनखाग्रकान्ति-
संछादिते जघनधाम्नि हृतान्तरीये ।
मामंशुकापनयनाय पुनश्चलाग्र-
हस्तं विलोक्य हसितं दरमीलिताक्ष्या ॥ १०६ ॥

तच्चिन्तयामि सततं चरितं मनस्वि-
सायुज्यसंपदयनं वचसामभूमिम् ।
यत्तत्त्वमक्षिपरिपीतमनोजसारो
वेत्त्येक एव वनितायितवाममूर्तिः ॥ १०७ ॥

तच्चिन्तयामि मयि केलिकृतापराधे
व्यर्थाशयेऽपि कपटेन निमीलिताक्षे ।
ईषद्विवृत्य शनकैरधरं ममाशु
संदश्य यन्निववृते विकसन्मुखी सा ॥ १०८ ॥

तच्चिन्तयामि सततं शयिता समीपे-
ऽप्याकाङ्क्षितार्थसफलीकरणासमर्था ।

अर्धोन्मिषन्नयनमाननमादरान्मे
पश्यन्त्यभाद्विवशितेव यदङ्कजेन ॥ १०९ ॥
तच्चिन्तयामि मनसि स्मितदीपशोभा
शोभायमानघनपुष्पकपोलरङ्गम् ।
उच्चकविभ्रममुदञ्चितकण्ठनाद-
मुछ्वासकं किमपि कर्णमणीप्रवृत्तम् (?) ॥ ११० ॥
तच्चिन्तयामि गतमोहमदुःखगन्ध-
मन्तर्गतश्वसितमुज्झितनादरूपम् ।
तत्पूर्वमेव निमिषन्नयनच्छदार्ध-
लीनालिकं किमपि कामिकुलैकसौख्यम् ॥ १११ ॥
तच्चिन्तयामि सुरतान्तनितान्ततान्त-
मास्यान्तरे विनिहितं मम कान्तकान्तम् ।
यद्विस्मृतस्मितमपि स्फुटतालुगर्भ-
ताम्बूलमङ्कुरितहासमिवाननाब्जम् ॥ ११२ ॥
तच्चिन्तयामि निजभर्तृममागमोक्ति-
माकर्ण्य पान्थमुखतः परुषां मृगाक्षी ।
निःश्वस्य दीर्घमसुमारुतमुच्चलन्तं
संरुन्धतीव हृदये विदधे करं सा ॥ ११३ ॥
तच्चिन्तयामि हृदि लग्नमिवोग्रशल्यं
तेन द्विजन्महतकेन विनीयमाना ।
मामश्रुकोरकितपक्ष्मदृशा निरीक्ष्य
व्योम्नि व्यकल्पयत यज्जलदश्रियं सा ॥ ११४ ॥
इति स्मारं स्मारं बहुविधमुदश्रुजलकणां
दृशं वारं वारं दिशि दिशि वितृण्वन्विकलधीः ।
मुहुर्ध्यायं ध्यायं पुर इव चरन्तीं तत इतः
पुनर्भ्रामं भ्रामं व्यलसदसमोन्माद इव सः ॥ ११५ ॥

---

१. बृहस्पतिना.

तारापि नाकं प्रययौ कथंचिद्देशान्तरावासगदातुरेव।
श्लथस्तनी क्षामकपोलभागा पाण्डुद्युतिश्चन्द्रवियोगखिन्ना ॥ ११६ ॥
तां वेपमानां परिशुष्कवक्त्रां स्विद्यत्तनुं निःश्वसतीं निकामम्।
मार्गश्रमेणाकुलितां विदित्वा दस्रौ गुरुः पश्यतमित्युवाच ॥ ११७ ॥

नाडीषु विस्फुरति घर्मे तनौ च वायु-
श्छिद्रं शरीरजगदोऽयमवाच्यरीतिः।
स्वैरस्थितेरुपशमोऽस्य भवेदितीव
व्यालोक्य तां जगदतुर्भिषजौ सुराणाम् ॥ ११८ ॥

दलति द्विधा न हृदयं भवत्यहो ज्वलति स्फुटं न वपुरेति भस्मताम्।
भ्रमतीव दृग्विगलतीव चेतना जगदद्य शून्यमिति सालपन्मुहुः ॥ ११९ ॥

क्षणमिव पुरः स्थितं तं समीक्ष्यमाणापि सान्द्रमन्दाक्षा।
व्यनमयदीषद्वदनं स्तनवसनं सा समीचकारेव ॥ १२० ॥

कदा नु दयिताननं तदवलोकये सस्मितं
कदा परिरभे च तं त्रुटितकञ्चुली संभ्रमात्।
कदा तदुरसि स्वपिम्यहमनङ्गलीलालसे-
त्युदञ्चितमनोरथा न विदधे निमेषं च सा ॥ १२१ ॥

नवकिसलयतल्पे वक्रिताङ्गं शयाना
निभृतकृशशरीरा दुर्निरीक्ष्यातिपाण्डुः।
नवविकसितसंध्यारञ्जिताङ्गी द्वितीया
शिशिरकरकलेव प्रेक्षणीया बभूव ॥ १२२ ॥

वामाङ्गविस्फुरणमप्यनुभूतपूर्वं
सौभाग्यसूचकममंस्त मरुद्वदं सा।
शून्यं जगत्सकलमित्यवगच्छतां किं
विश्वासपात्रमसमव्यसनाकुलानाम् ॥ १२३ ॥

क्षणं सव्रीडेव क्षणमिव सकौतूहलभरा
क्षणं चिन्ताक्रान्ता क्षणमिव च केलिप्रकुपिता।

---

१. 'हे दस्रौ अश्विनीकुमारौ, युवां पश्यतम्' इति गुरुरुवाचेत्यर्थः.

क्षणं सानन्देव ह्रियमपि च संत्यज्य मदन-
ज्वराटोपभ्रान्ता गदितुमसमं प्रारभत सा ॥ १२४ ॥
परिचरता स्वयमालीजनेन शिशिरोपचारेषु ।
प्रोक्तो हिमकरशब्दो मूर्छालां तामबोधयच्छश्वत् ॥ १२५ ॥
सा स्मरज्वरसंतापसंभ्रान्तामूनमूमुचन् ।
तेऽपि तादृक्शरीरस्यालाभात्तां पुनराश्रयन् ॥ १२६ ॥
प्रवालतल्पे शफरीमिव स्थले परिस्फुरन्तीं प्रमवेपुणोल्बणम् ।
अङ्गारभङ्गेष्विव रोपितां रहः समेत्य तां प्राणसमावदत्सखी ॥१२७॥
तवेयानिति संतापं के नु निर्णेतुमीशते ।
ज्वलन्ति सकलाङ्गानि यस्य निर्वर्णनेऽपि नः ॥ १२८ ॥
यतेत नित्यं सुमतिः सुखाप्तये दैवं हि साह्यं कुरुते क्रियावताम् ।
अचेष्टमानस्य कथं स्वयं मुखे पतेयुरन्धःकवलाः शुभेक्षणे ॥ १२९ ॥
तदर्चय त्वं जगदेकमोहनं मनोभवं त्व नमतामभीष्टदम् ।
स्वकीयतापं प्रभवत्यपोहितुं स एव पृषत्क्रपाम्बुवृष्टिभिः ॥ १३० ॥
इतीदं वचनं सख्याः संमान्य विरहातुरा ।
शनैः प्रातिष्ठतोद्यान रहः पूजयितुं स्मरम् ॥ १३१ ॥
यान्ती कथंचिदुद्यानं सह सख्या तया शनैः ।
पदे पदे विमुह्यन्ती विविधं विललाप सा ॥ १३२ ॥
सुखायागन्तुमीहन्ते सर्वे सुकृतिनो दिवम् ।
हा हन्त मम पापाया दुःखायाद्य दिवि स्थितिः ॥ १३३ ॥
मन्दमन्दमनुयासि मां सखे गन्धवाह शुभसूचनाकृते ।
मन्दभाग्यकशिरोमणेरहो कथं मामुपयान्ति मेऽसवः ॥ १३४ ॥
कोकिल काकलिकां त्वं मा कुरु यावत्समेति नो कान्तः ।
दयिते समागते मे कलयः कोलाहलं सह स्वीयैः ॥ १३५ ॥
अलिनि नाद्रियसे मम याचनां कलरवैर्विकलां मम चेतनाम् ।
कलयसे हि समेतु स मे प्रियो निगलितां कलये नलिनोदरे ॥ १३६ ॥

१. ओदनग्रासाः.

रथाङ्गि पत्या सममग्रतो नटन्त्युदञ्चयस्यद्य मनोऽन्यथां मम ।
समागते मे दयितेऽपहास्यतामुपैषि शोचन्त्यनवेक्षितप्रिया ॥ १३७ ॥

कः क इति राजहंसि ब्रवीषि किं त्वं न वेत्सि मम कान्तम् ।
योऽभूदत्रेर्नयनाज्जगदेकानन्दकः श्रीमान् ॥ १३८ ॥

मनोमयस्त्वं मनसो हरेरभूर्मनोजमित्रं जगतां मनोहरः ।
मनोगतं किं नु न वेत्सि कान्त मे ममैव दौर्भाग्यमहो महत्तरम् ॥१३९॥

इत्याद्यनुपदं शोचन्त्यनङ्गशरपीडिता ।
शनैरगमदुद्यानमवलम्ब्य सखीकरम् ॥ १४० ॥

चन्द्रोऽपि मुह्यन्विवशः स्मरार्तो विचिन्त्य नानाविधमाकुलात्मा ।
न जीवितुं शक्यमपि क्षणं वा प्रियां विना तामिति निश्चिकाय ॥१४१॥

तां पश्यामि दरस्मितां महमितं जल्पामि साचीक्षणं
पश्यन्त्याश्चिबुकं स्पृशंश्चलकरश्चुम्बामि बिम्बाधरम् ।
आलिङ्गाम्यतिकौतुकेन कठिनापीनस्तनीं गाढमि-
त्युद्यत्केलिमनोरथः स शनकैः प्रातिष्ठदैन्द्रं पुरम् ॥ १४२ ॥

प्रस्थितस्य शुभं तस्य प्रशशंस स्फुरन्भुजः ।
अनुगोऽभून्मरुत्पोतो मानसं च पुरःसरम् ॥ १४३ ॥

उत्साहे सति किं शक्त्या कामं सुहृदि किं भटैः ।
किं रथेन च संकल्पहये सति मनोरथे ॥ १४४ ॥

पुरःस्थितां भावनया पुनः पुनस्तिरोभवन्तीं हृदयस्य चापलात् ।
ग्रहीतुकामो हरिणीमिवाधिकद्रुतप्रयाणामगमन्निशाविटः ॥ १४५ ॥

प्रसीद परिहासस्य नैष कालः शुचिस्मिते ।
परमार्तं प्रपन्नं मां पाहीत्यनुललाप सः ॥ १४६ ॥

मुहुर्विमुह्यन्मुहुरुत्थितो व्रजन्मुहुर्विशोचन्विहसन्मुहुर्लपन् ।
उन्मत्तरूपोऽपि स दैवयोगतो वनं तदागात्प्रियया तया स्थितम्॥१४७॥

वसन्तलक्ष्मीनटनैकरङ्गं विमृज्य बाष्पं बहुशो वनं तत् ।
वियोगिनां प्राणहरं प्रपश्यन्विसिस्मिये सोऽयमचिन्तयच्च ॥ १४८ ॥

नूनमत्र मनःकान्ता वसेन्मम विलासिनी।
नान्तरङ्गं हि निर्व्याजं रुचिरेऽपि प्रवर्तते॥ १४९॥
विरहिणां यमकिंकरगर्जितप्रतिममप्यधुना मधुरायते।
पिकशिशोरिह कूजितमूर्जितं कुसुमिताम्ररसालविलासिनः॥ १५०॥
उदञ्चयति रोमाञ्चमुल्लासयति मानसम्।
उन्मूलयति संतापमनिलोऽम्बुजसौरभः॥ १५१॥
विसृज्य कुसुमानीह विद्रवन्तो मधुव्रताः।
प्रदर्शयन्ति मे मार्गमिवैते मधुरस्वराः॥ १५२॥
इदं विकचपङ्कजं सर इमेऽपि मन्दानिलो-
ल्लसत्कुसुमलालसभ्रमरपङ्क्तयः स्वर्द्रुमाः।
इयं पुलिनविभ्रमोन्मदमरालवामालिरि-
त्ययं महसितेक्षणस्तत इतोऽविशत्तद्वनम्॥ १५३॥
प्रविशंस्तत्र शुश्राव तारायाः करुणां गिरम्।
मनीषितफलावाप्त्यै प्रार्थयन्त्या मनोभवम्॥ १५४॥
सांसारिकपरानन्दकन्दं कंदर्पमेव तम्।
वन्दामहे किमपरैरदृष्टसुखसाधकैः॥ १५५॥
आसीदर्धं पौरुषं चान्तकारेः शौरेः मध्यां भीरुतैवाविरासीत्।
मायावेषाद्यस्य तस्यात्मयोनेर्माहात्म्यं ते को नु विज्ञातुमीष्टे॥ १५६॥
लोकातीतं वस्तु किं वा चकास्तीत्याभापन्ते शास्त्रविज्ञा महान्तः।
जाने तस्याप्यङ्गजात प्रभुं त्वां मायायोगात्पौरुषं नाम तस्य॥ १५७॥
एकं द्विधा कलयितुं सकलाः समर्था
द्वावेकमारचयितुं त्वदृते न कोऽपि।
त्वामर्चयामि तदहं सुचिरं त्वयैव
संतापितौ घटय नौ भगवन्मनोज॥ १५८॥
श्रुत्वा स मधुरां तस्या वाचं वाचामगोचरम्।
आनन्दमन्वभून्नष्टां श्रियं प्राप्येव भूमिपः॥ १५९॥

विधिरमणीपाणिरणन्मणिवीणागुणकलक्कणोदारः।
मरुद्वनीरमणवनीचरदलिनीमदहरः स्वरः कस्याः ॥ १६० ॥
एवमानन्दसाम्राज्यविवशो बहुशः शशी।
विचिन्त्यात्रैव तारेति निश्चिकाय चिराय सः ॥ १६१ ॥
आकर्णयन्कर्णसुखानि तस्या वाक्यानि चैतन्यविकासकानि।
ईचिक्षिषासंभ्रमलोलदृष्टिर्मृद्न्करीव व्रततीर्जगाम ॥ १६२ ॥
स तत्र चैकत्र सुरद्रुमस्य प्रगृह्य वामेन करेण शाखाम्।
कोषीभवत्पङ्कजमुन्दरेण परेण पुष्पाण्यवचिन्वतीं ताम् ॥ १६३ ॥
वामेतरांसस्खलितोत्तरीयामुत्कंधरामूर्ध्वविलोलदृष्टिम्।
कर्णावलम्बिप्रसवाग्रलम्बिरोलम्बशङ्काकरकुन्तलालिम् ॥ १६४ ॥
संकोचिताङ्गं चलनेत्रतारमाकुञ्चितभ्रूकुटिकम्प्रहस्तम्।
क्वचित्क्वचिद्भृङ्गनिपातभीत्या शनैः प्रसूने करमादधानाम् ॥ १६५ ॥
अलं प्रसूनावचयेन भद्रे मनोभवार्चाविसर्गोऽयमायात्।
करण्डपाण्येति विबोध्यमानामाल्या मुहुः श्रान्तमस्तगात्रीम्॥१६६।
नमो नमस्ते भगवन्प्रसीद प्रपन्नकल्पद्रुम मन्मथेति।
मुहुर्वदन्तीं मदनाग्नितापविशोषिताङ्गीं स्वरमात्रबोध्याम् ॥ १६७ ॥
अशोचनीयां प्रियदर्शनां च वातेन पत्रावलिशोषणेन।
स्पृष्टा लता माधविकेति शङ्क्यां प्राणप्रियामैक्षत शीतरोचिः॥१६८।
हृष्टः समेत्य पश्चात्कुचतटचलदेकपाणिरेष शनैः।
अवटुतटघटितकुसुमं कबरीभरमग्रहीत्तस्याः ॥ १६९ ॥
आकृष्यमाणेव लतातिभीरुर्निवृत्य तं चन्द्रमसं निरीक्ष्य।
ईषत्त्रपावक्रितगात्रयष्टिः स्तब्धा क्षणं सा प्रतिमेव रेजे ॥ १७० ॥
आलिङ्ग्य निश्चलकराग्रगलत्प्रसूना-
मादाय सोऽपि तरलाङ्गुलिपल्लवान्तः।
आरोप्य चाङ्कभुवि संकुचिताङ्गयष्टि-
माचुम्बति स्म वदनं कुचलोलपाणिः ॥ १७१ ॥

---

१. ईक्षितुमिच्छा.

आनन्दसाम्राज्यनिमग्नचेतसोर्यथापुरं पोषमवापतुस्तनू ।
क्षणात्तयोर्नव्यमिव व्यभाज्जगत्समस्तमासीन्मतिरीदृशी तदा ॥ १७२ ॥
योगानन्दमखण्डं किमिति ब्रुवते महाकवयः ।
नूनं शास्त्रव्यसनान्नासीद्रोगेषु तेषां धीः ॥ १७३ ॥
अनशननियमेन श्रौतचिन्ताकुलाना-
मजनि मुनिजनानां नूनमुन्माद एव ।
परममिति हि किं वा सादरं संगिरन्ते
सहृदयजनसङ्गानन्दसाम्राज्यतोऽपि ॥ १७४ ॥
विनाशो दुःखानां विरतिरपि मोहस्य महतः
सुखस्यापि स्फूर्तिर्न भवति किमत्रैव सततम् ।
विशेषः को मोक्षे श्रुतिरपि च भोगैकफलदाः
क्रियाः प्रोचे कण्ठादुपरि परमं ब्रह्म तदिति ॥ १७५ ॥
तयोश्चिन्तयतोरेवमानन्दाम्बुधिमग्नयोः ।
प्रययौ सा सखी भोज्यपदार्थादानकैतवात् ॥ १७६ ॥
ततः कृतार्थः स तया समं शशी निषेव्यमाणो मरुतं ततस्ततः ।
संप्रस्थितः स्वं निलयं जगाद तां विलासभूमी रुचिराः प्रदर्शयन्॥१७७॥
स्मरसि यदिहारामे रामे सुमान्यवचिन्वती
हरति मरुति क्षौमं वासः समीक्ष्य मम स्मितम् ।
अयमुपसरेदित्याकृत्य द्रुतं जघनस्थलीं
त्वभिपिदधती सूनं लूनं समस्तमवाकिरः ॥ १७८ ॥
स्मरसि विहरतोः पुरावयोः किं सरसि घनस्तनि यत्समीप्यर्थयात्र ।
नलिनमुकुलसंग्रहप्रवृत्ते मयि जलपूर्णमुखेन फूत्कार्षीः ॥ १७९ ॥
स्मरसि च कपोतपोतस्वरमनुकलयेति वदति मयि यदिह ।
त्रपिता सस्मितमवदः कुपितेव न पौरुषं तवाहमिति ॥ १८० ॥
स्मरसि किमवचिन्वती सुमानि भ्रमरक एष विजृम्भते इतीति ।
वदति मयि विधुन्वती दुकूलं सरयमगाः किल चम्पको यदत्र ॥ १८१ ॥

---

१. अपिदधती आच्छादयन्ती.

स्मरस्यपि चलेक्षणे प्रतिकृतिं तवाम्भोरुहा-
द्रमामिव परिच्युतां सरसि वीक्षमाणे मयि ।
भृशं किल विशङ्किताद्भुतमुपेत्य दृष्ट्वा सर-
स्त्रपाविवशिता शनैरपससार यत्त्वं पुनः ॥ १८२ ॥
स्मरस्यम्भोजाक्षि त्वमयि सुमनःकन्दुकहता
मया मध्ये वक्षोरुहमखिलगात्रोद्गतजला ।
विमुह्यन्तीवेषन्मुकुलितदृगालम्बति मयि
प्रबुद्धा मद्धस्तं रुष इव यदाभूनयदिह ॥ १८३ ॥
स्मरसि किमु चाटुवाक्यं मयि लापयति त्रपाकुला त्वमिह ।
यत्केलिशारिकायै व्यतरस्तुष्टेव शिखरिबीजानि ॥ १८४ ॥
स्मरस्यप्यक्षकेलौ मां विजित्यापि यथापणम् ।
अवाप्तुं पौरुषं नालमभूर्यदिह कामिनि ॥ १८५ ॥
इति प्रदर्शयंस्तांस्तान्विलासविषयान्विधुः ।
शनैः शनैस्तया साकमगारमगमन्निजम् ॥ १८६ ॥
वक्षोजौ मेचकाग्राविव जनितकिणौ रिङ्गणैरङ्गुलीना-
मीषत्पाण्डू कपोलाविव मुषितकलौ डम्बरैश्चुम्बनानाम् ।
चित्रैर्नाभी चपेटैरिव निभृतमुदं मध्ययष्टिं च किंचि-
त्पुष्टां चक्रे प्रियायाः कतिपयदिवसैरेव मित्रं स्मरस्य ॥ १८७
तस्यां कदाचिन्निकटस्थितायां मुख्यैः सुहृद्भिः सहितः सितांशुः ।
दूतं गिरीशस्य गिरोपयातमुवाच मन्दस्मितलाञ्छितास्यः ॥ १८८ ॥
रूपानुरूपगुणविभ्रमलोभनीया-
मेतां कथं कथमपि प्रयतो विधाता ।
निर्माय हन्त निगमाध्ययनालसस्य
हस्ते चकार सुरलोकपुरोहितस्य ॥ १८९ ॥
समित्कुसुमपल्लवच्छदपवित्रदर्भाङ्कुर-
भ्रमाकुलितचेतनः क्व सुमनःपुरोधा गुरुः ।

---

१. शाडिमबीजानि.

पटीरहिमवालुकामृगमदस्त्रगुल्लासिनी
क्व चेयमसमाशुगागमकृतव्रता कामिनी ॥ १९० ॥
अभिज्ञानामाद्यो निरुपममहाः प्रौढिमानिधि-
र्महैश्वर्यावासः सरसहृदयः प्रीतिजननः ।
तथापि श्रौतार्थव्यसननिरतो मे पतिरिति
ध्रुवं शोचन्त्येषा समजनि कृशाङ्गी सुवदना ॥ १९१ ॥
दीपिकेवाकुलदृशो दरिद्रस्य मणीव च ।
परं परोपभोगाय वैदिकस्य विलासिनी ॥ १९२ ॥
तदेतया विलासिन्या तस्य किं नु पुरोधसः ।
भजेति चेटिकां ब्रूहि कामकण्डूतिशान्तये ॥ १९३ ॥
भ्रातुः परिग्रहपरिग्रहणप्रवृत्तो-
ऽप्यास्तां गुरुः स विरहार्तिविमूढचेताः ।
किं दारुकावनवधूं गिरिशोऽप्यहल्या-
मिन्द्रो नहि स्मरति गोपमतीरुपेन्द्रः ॥ १९४ ॥
अस्त्वेतदखिलं लोकः स्वदोषं नैव पश्यति ।
वदेन्द्रोपेन्द्रसहितं भवभक्तिवशं गुरुम् ॥ १९५ ॥
समानहृदयामिमां श्रितवतः स्वयं संगतां
किमत्र मम दुष्कृतं कथमियं विसृज्या च मे ।
अयुक्तमभिभाषसे यदि तवाद्य कण्डूः परा
द्रुतं पशुपते स मे ह्यचलतेजसं मामिति ॥ १९६ ॥
ततस्तस्मिन्गते दूते समीकाय पिनाकिनम् ।
आह्वयन्तमभिप्रागाच्छुक्रशिष्यैर्वृतः शशी ॥ १९७ ॥
आसीद्देवासुराणामथ युगविगमादित्यसंभेदशङ्का-
कारिक्रूरास्त्रशस्त्रप्रभवहुतवहज्वालजालोल्बणं तत् ।
घोरं तारामयाख्यं रणमुदधिपरिक्षोभसंभृतवीची-
घोषत्रस्यद्दिगन्तद्विरदवरशिरश्चालितक्षोणिचक्रम् ॥ १९८ ॥
स्वस्वास्त्राभ्यां रुद्रसोमौ समेतौ दृष्ट्वा धाता तौ जगन्नाशशङ्की ।
आविर्भूयावार्य युद्धं मृदूक्त्या जीवाय द्राग्दापयामास ताराम् ॥ १९९ ॥

पराहितं गर्भमये त्यजेत्यथो तारा धवेनाभिहिताभ्यसूत सा ।
शिशुं तमालोक्य मनोहरं गुरुः शशी ममेति व्यवजह्रतुस्तदा ॥ २०० ॥

कस्यैष बाल इति सा बहुभिश्च पृष्टा
मौनं यदा न विजहौ स शिशुस्तदात्वे ।
क्रुद्धो जगाद जननीमयि दुर्विदग्धे
घोरं शपामि यदि नो वदसीति शीघ्रम् ॥ २०१ ॥

शिशोर्वाक्यं तदाकर्ण्य सर्वे सुमनसस्तदा ।
विस्मिताः समपद्यन्त साक्षाद्विष्णुं स्म तं विदुः ॥ २०२ ॥

तारा तदनु विधात्रा विजने कस्यैष बाल इति पृष्टा ।
चन्द्रस्येति शनैः सा मन्दाक्षभरानमन्मुखी न्यगदत् ॥ २०३ ॥

शिशुरेष महाबुद्धिर्बुध इत्यभिधीयताम् ।
इति जल्पन्विरञ्चिस्तं विततार सितांशवे ॥ २०४ ॥

लब्ध्वा सुतं सितांशुः सर्वो च वाचस्पतिस्तदा हृष्टः ।
स्वं गृहमगमन्सर्वे सुरासुरास्तत्कथां प्रशंसन्तः ॥ २०५ ॥

श्रीकृष्णराजकरुणैकनिकेतनेन
कृष्णेन भागवत इत्यभिशब्दितस्य ।
नारायणस्य तनयेन समीरितेयं
तारासुधाकरकथा विदुषां मुदेऽस्तु ॥ २०६ ॥

इति भागवतनारायणसूनुश्रीकृष्णकविप्रणीतं ताराशशाङ्कं काव्यं समाप्तम् ।

---

रामचन्द्रकविकृतं

## रसिकरञ्जनम् ।

सटीकम् ।

---

शुभारम्भेऽदम्भे महितमतिडिम्भोङ्गितशतं
मणिस्तम्भे रम्भेक्षणसकुचकुम्भे परिणतम् ।

---

१. वैराग्यशृङ्गारार्थद्वयसमानं सटीकमेतत्काव्यमयोध्यानगरे लक्ष्मणभट्टसुतो रामचन्द्रकविः १५२४ मिते विक्रमसंवत्सरे प्रणिनायेति ग्रन्थसमाप्तितो ज्ञायते. एतत्पुस्तक

अनालम्बे लम्बे पथि पदविलम्बेऽमितसुखं
तमालम्बे स्तम्बेरमवदनमम्बेक्षितमुखम् ॥ १ ॥

शुभेति । शुभानां कर्मणामदम्भे दम्भरहित आरम्भे महितं पूजितम् । बिम्बान्बालानतिक्रान्तम् इङ्गितानां चेष्टानां शतं यस्य तम् । रम्भाया ईक्षणेन सकुचकुम्भे मणिस्तम्भे परिणतं तिर्यक्प्रहारासक्तम् । अन्यगजकुम्भभ्रमेण । अनालम्बे दीर्घे पथि पदानां विलम्बेन लम्बोदरतयामितमपरिमितं सुखं यस्य । अम्बया पार्वत्या ईक्षितं मुखं यस्य । एवंविधं स्तम्बेरमवदनमालम्बे आश्रये ॥

विशिष्टश्रीभावालयनयनमुद्राविवरणे
मुखं यस्या यस्माद्विलमति मिलत्कुञ्चिकमिव ।
स तस्याः स्वारस्याकलितचरणे काव्यकरणे
कवीनां प्रावीण्यं कुवलयवतंसोऽवतु गिरः ॥ २ ॥

विशिष्टेति । तस्या गिरः कुवलयकर्णाभरणं कवीनां काव्यकरणे प्रावीण्यमवतु । कीदृशे काव्यकरणे । स्वारस्येनानायासेनाकलिताः स्फुरिताश्चरणा यत्र । यस्मादवतंसात् यस्या गिरो मुखं विशिष्टा या श्रीः शोभा भावा विलासाश्च तदालयरूपं यन्नयनं तस्य या मुद्रा तद्विवरणे तदुद्घाटने मिलन्ती कुञ्चिका यत्र तादृग् विलमति ॥

एकश्लोककृतौ पुरः स्फुरितया सत्तत्त्वगोष्ठ्या समं
साधूनां मदमि स्फुटां विटकथां को वाच्यवृत्त्या नयेत् ।
इत्याकर्ण्य जनश्रुतिं वितनुते श्रीरामचन्द्रः कविः
श्लोकानां सह पञ्चविंशति शतं शृङ्गारवैराग्ययोः ॥ ३ ॥

एकेति । स्पष्टोऽर्थः ॥

अपापघनसंवृतेरविशदस्मितात्युन्नम-
त्समस्तनरमादरग्रहणतः कृतार्थप्रिया ।
रतिर्मनसि जायते यदि कदापि शौर्याश्रया
तदैव सकलं जनुः सफलमेवमाहात्मभूः ॥ ४ ॥

अपेति । [वैराग्ये—] यदि कदापि शौर्याश्रया शौरिः कृष्ण आश्रयो यस्याः सा रतिः प्रीतिर्मनसि जायते तदैव सकलं जनुर्जन्म सफलमित्यात्ममूर्धन्या आह । कीदृशी रतिः । अपापघनसंवृतेरविशदस्मिता पापानिबिडसंवरणव्यतिरेकाम विमन्ती अस्मिता अहं

---

चाल्यामि: १७०३ मितविक्रमसंवत्सरे लिखितमधिगतम्, एतत्कविप्रणीतं टीकाबली शतकमप्युपलभ्यते.

कारी यस्यां सा। पुनः। अत्यन्तमुभमन्तः समस्ता ये नरा अम्बरीषादयस्तेषां यत्सादरं ग्रहणं ततः कृतार्था ये शुकादयस्तेषामपि प्रिया॥

[शृङ्गारे—] यदि शौर्यमाश्रयो यस्या एवंविधा रतिः कामवधूर्मनसि जायते मनसिज इवाचरति तदैव सकलं जन्म सफलमित्यात्मभूः काम आह। कीदृशी रतिः। अपगतापघनानामवयवानां या संवृतिराच्छादनं ततोऽविशदमव्यक्तं स्मितं यस्याः सा। पुनः। अत्यन्तमुभमन्तावुत्पतनादिना समौ यौ स्तनौ तयो रसेनावेशेनादरेण यद्ग्रहणं ततः कृतार्थः प्रियो यस्याः सा॥

अकलियुगमखर्वमत्र हृद्यं व्यचरदपापघनो यतः कुटुम्बी।
मम रुचिरिह लक्ष्मणाग्रजेन प्रभवति शर्मदशास्यमर्दनेन॥ ५॥

अकलीति। [वै०—] अत्र संसारे अकलियुगं कलिव्यतिरिक्तं त्रेतादियुगं महत् हृद्यं हृदयंगमं भवति। यतो युगात् कुटुम्बी संसारी न पापघनः सन् व्यचरत्। अत एव इह त्रेतायां लक्ष्मणाग्रजेन रामेण मम रुचिः प्रभवति शर्म सुखं च दशास्यमर्दनेन प्रभवति॥

[शृ०—] अखर्वं पीनं, हृद्यं हृदयोद्भवं, युगं युग्मं, अकलि दृष्टम्। यतो यत्र अपगतापघनः अनङ्गः कुटुम्बी रत्या सहितः सन् व्यचरत्। मम इह युग्मे रतिः प्रीतिः प्रभवति। अग्रजेनाग्रे जातेन, लक्ष्मणा चिह्नेन, कुचाग्रश्यामिकया नखक्षतेन वा। अथ च अस्य मर्दनेन शर्मदशा च प्रभवति॥

जातु सुदर्शनपाणिः श्रवणादेः किं न वाञ्छितं यच्छेत्।
दास्यति चिरानुवृत्त्या रमणीयं किमपि कामितं वस्तु॥ ६॥

जात्विति। [वै०—] सुदर्शनं चक्रं पाणौ यस्य स विष्णुः श्रवणादेः श्रवणमननादितः किं वाञ्छितं न यच्छेत्। अपि तु सर्वमपि। चिरानुवृत्त्या किमपि रमणीयं किमप्यनिर्वाच्यं मोक्षलक्षणं वस्तु किं न दास्यति॥

[शृ०—] सुष्ठु दर्शनं ययोः एवंविधौ पाणी यस्याः सा श्रवणादिना वाञ्छितं किं न यच्छेत्। इयं रमणी दास्याः अतिचिरमनुवृत्त्या किमप्यनिर्वाच्यं संभोगादि कामितं वस्तु यच्छेदेव। पूर्वत्रसंबन्धः॥

घनस्तनभरालसा व्रजति गौरवन्ध्येह ते
विधेहि कटिपार्श्वयोर्नखमुखेन कण्डूयनम्।
इतः सुखपरम्परा मिलति संप्रति श्रेयसा
सदा न खलु संगतिर्भवति गर्भसंभूतये॥ ७॥

घनेति। [वै०—] घनस्तनभरेण अलसा अवन्ध्या प्रसूता इह ते गौर्व्रजति। त्वं नखमुखेन कटिपार्श्वयोः कण्डूयनं विधेहि। संप्रतीदानीमेव श्रेयसा पुण्येन इतः सुखपरम्परा मिलति। अस्याः सदा संगतिः गर्भसंभूतये जन्मने न भवति॥

[शृ०—] इयं गौरवन्ध्या घनस्तनमरालसा व्रजति । ईहते वाञ्छति । अतः कटिपार्श्वयोर्नखमुखेन कण्डूयनं विधेहि । इतो वन्ध्यायाः सङ्गेन संप्रति श्रेयसा सुखपरम्परा मिलति । अस्याः सदा संगतिरपि गर्भसंभूतये न भवति ॥

कदलीकरभसमानां कलयति योरूपक्लृप्तिमतिरुचिराम् ।
सोपायाद्दृढयोगं गमितोरसिकोपकरणविषयतया ॥ ८ ॥

कदेति । [वै०—] यः पुरुषः रूपाणां नानाविधानां क्लृप्तिं कल्पनाम् अत्यन्तं रुचिरां मनोहरां कुत्सितालीकरभसाहंकारां कलयति जानाति । स इदानीमपगतेन्द्रियविषयत्वेनारसिको दृढयोगं योगाभ्यासं गमितो गुरुणा अपायात् अपगतः ॥

[शृ०—] या कदलीकरभयोः समानां ऊर्वोरुपक्लृप्तिं कलयति । सा उपायात् कोपकरणविषयत्वेन उरसि दृढयोगं गमिता ॥

नर्मदामनु तपस्यशान्तहृद्धृष्टधीरमिकतामये क्वचित् ।
संसृताविह परात्मयोगकृत्किं तदन्यदपि कर्म शर्मणे ॥ ९ ॥

नर्मेति । [वै०—] हे धृष्ट धीर नर्मदानदीमनु क्वचित् सिकतामये सैकते शान्तहृद् भूत्वा तपस्य तपः कुरु । इह संसृतौ परात्मयोगकृत् ततोऽपि किमन्यत् कर्म शर्मणेऽस्ति॥

[शृ०—] अहं तपसि माघे अशान्तहृत् शीतासहिष्णुतया नर्म ददातीति नर्मदा ताम् अनुगम्य हृष्टधीः सन् क्वचिदेकान्ते रसिकतां रमिकत्वम् अये प्राप्नोमि । इह संसारे परया अन्यया आत्मनो योगं सम्बन्धं करोति यत् कर्म तत् किं एतद्व्यतिरिक्तं अस्ति यच्छर्मणे भवतीति ॥

योगमितो मधुरतया पौरोभाग्यं व्यनक्ति विषयेषु ।
धन्यः स एव मान्यः संसारेऽस्मिन्नसाधुताभिज्ञः ॥ १० ॥

योगमिति । [वै०—] यः मधुरतया मनोहरत्वेन अग पर्वतं इतः प्राप्तः सन् विषयेषु स्रगादिषु पौरोभाग्यं दोषैकदृक्त्वं व्यनक्ति प्रकटयति मधुरत्वेन योगाभ्यासं इतः प्राप्तः इति वा । स एव धन्यः संसारेऽस्मिन् असाधुतामभिजानाति ॥

[शृ०—] यः पौरो नागरिकः रतयानुरक्तया मधु गमितः प्रापितो विषयेषु भाग्यं व्यनक्ति । स एव धन्यो मान्यश्च । संसारेऽस्मिन् साधुताभिज्ञो न मान्य इति ॥

आसाद्य सोमभुवमास्वहि यत्र नित्यं
मङ्क्षु प्रलोभयति सैकतमंशुकाभम् ।
तत्तत्र निर्वहति संप्रति नित्यकृत्य-
मेतस्य विस्मृतगृहस्य परानुभूत्या ॥ ११ ॥

आसाद्येति । [वै०—] सोमभुवं नर्मदां आसाद्य आवां आस्वहि । यत्र नित्यं मङ्क्षु

अंशुकाममुज्ज्वलं सैकतं प्रलोभयति। तस्माद्धेतोरावयोर्मध्ये एतस्य परानुभूत्या परत्रानुभवेन विस्मृतगृहस्य नित्यकृत्यं तत्र निर्वहति॥

[शृ०—] त्रयाणां मध्ये द्वयोरेकं प्रति वचनम्—उमा अतसी तत्सहितां भुवमासाद्यावामास्वहि। यत्र सा ज्ञाता स्त्री शुकाभं शुकदेवसमानमेकतममावयोर्मध्ये प्रलोभयति। तत्तस्माद्धेतोरेतस्य संप्रति नित्यकृत्यं निर्वहति। परस्या अनुभूत्या अनुभवेन विस्मृतगृहस्य॥

आसाद्य कृष्णपक्षानत्रसतः सर्वदाभीकान्।
परयात्मनि रतचित्तान्विभाव्य तत्कर्म कुर्वतः क्व भयम्॥ १२॥

आसाद्येति। [वै०—] अत्र संसारे कृष्णः पक्षो येषां तान् सर्वदा अभीकान् निर्भयान् सतः पुरुषान् आसाद्य उपगम्य परे आत्मनि रतचित्तान् विभाव्य तत्कर्म तेषां कर्म कुर्वतः पुरुषस्य क्व भयम्॥

[शृ०—] कृष्णपक्षान् प्राप्य सर्वदा अत्रसतोऽभीकान् कामुकान् परयान्यया आत्मनि रतमनसो विभाव्य त्वमपि तत् कर्म कुरु। अतस्ते क्व भयम्॥

असौ समरसाहसं वितनुतेऽग्रिमश्रेयसे
मुकुन्दममुमात्मनि स्थिरयितुं न किं वाञ्छति।
अतः परतरं कुतः प्रतरणाय वारां निधे-
र्निदानमिह संसृतेः सुखसृतेश्च किं कारणम्॥ १३॥

असाविति। [वै०—] असौ पुरुषोऽग्रिमश्रेयसे समरसाहसं वितनुते संमुखयुद्धेन तनुं त्यक्त्वा मुक्तो भवेयमिति इच्छति। अमुं मुकुन्दम् आत्मनि हृदये स्थिरयितुं किं न वाञ्छति। अग्रे स्पष्टम्॥

[शृ०—] असौ स्त्री समो रसो यस्याः सा हसं हास्यं वितनुते अग्रिमश्रेयसे संभोगाय आत्मनि स्वशरीरे अमुं मुरहितं मुकुन्दम् अर्थात् कुन्दं स्थिरीकर्तुं किं न वाञ्छति। इयं हासेन स्वदेहे कुन्दपुष्पं स्थिरीकरोतीव। अतो हेतोः संसारसिन्धुतरणाय किं निदानं सुखमार्गस्य वा किं कारणमस्ति॥

चिरमीक्षेमहि लास्यं मायाया दीर्घसीमनि स्वप्ने।
यद्वासनया वासितमात्मानं वेद नापि वेदज्ञः॥ १४॥

चिरमिति। [वै०—] दीर्घसीम्नि स्वप्ने संसारे मायाया लास्यं नृत्यं चिरं वयमीक्षेमहि। वेदज्ञोऽपि यद्वासनया वासितमात्मानं न वेद॥

[शृ०—] दीर्घसीमनि स्वप्ने चिरमनुवर्तमाने मायाया महिलायाः स्त्रिया आस्यं मुखम् ईक्षे पश्यामि। यस्य मुखस्य वासनया वासितमात्मानम् अहं वेदज्ञोऽपि न वेद, इति विरहिणो वचनम्॥

आसादितव्योऽस्ति करालकेशः सखेदयार्हः समयोपकारी ।
तदुत्तमश्लोककथानुबन्धस्तावद्यथा स्यात्प्रयते तथाहम् ॥ १५ ॥

आसादीति। [वै०—] हे सखे, कराला भीषणाः केशा यस्मिन् दयार्हः अपकारी समयो वार्धकसमयः मया आसादितव्योऽस्ति । तस्माद्धेतोरुत्तमश्लोकस्य कृष्णस्य कथानुबन्धः तावत्पर्यन्तं यथा स्यात्तथा प्रयते यत्नं करोमि ॥

[शृ०—] सखेदया सदुःखया मया उपकारी करेण अलकेशः कुबेरः अर्थाद्द्रव्यदाता अर्हो योग्यः स पुरुष आसादितव्योऽस्ति । तादृक्तस्यैव उत्तमश्लोककथानुबन्धे उत्तमयशःकथानुबन्धो यथा भवति तथा यते यत्नं करोमि ॥

सैवाद्रियेत रत्यै पुंसः परमस्य यानवाचर्चा ।
तस्मात्तदेकनिष्ठं चित्तं कृत्वा सुखं समासीत ॥ १६ ॥

सैवेति । [वै०—] परमस्य पुंसः कृष्णस्य या नवा चर्चा सैव रत्यै प्रीतये आद्रियेत । अग्रे स्पष्टम् ॥

[शृ०—] यतः सैव रत्यै रताय त्वाम् आद्रियेत । परं त्वस्य पुंसस्तत्पतेर्यानवाचा गमनवचनेन ऋचा ऋक्रूपया । सत्यमेत्यर्थः । तस्मिन् प्रोषिते सैवागमिष्यतीत्यर्थः । तस्मात्तस्यामेवैका निष्ठा यस्यैवंविधं मनः कृत्वा सुखेनासीत ॥

दृष्ट्वा सागरलङ्घनं कलयते रामायते श्लाघते
लोको यः स न वेदनामपरतः प्राप्नोति भीतिं यतः ।
क्व स्यान्मे पुनरङ्गसंगतिरिति ध्यायन्नयं त्वादरा-
त्कोऽहं कुत्र कुतः कदा कथमिति स्मृत्या परित्यज्यते ॥ १७ ॥

दृष्ट्वेति। [वै०—] यो लोकः दृष्ट्वा सागरस्य लङ्घनं कलयते कुर्वते रामाय ते तुभ्यं श्लाघते स्तुतिं करोति । स लोकः अपरतोऽन्यतो वेदनां दुःखं न प्राप्नोति भीतिं च यतो न प्राप्नोति । अतो हे राम मम पुनरङ्गसंगतिः शरीरसंबन्धः क्व स्यादिति बुद्ध्या अयं लोक आदरात् त्वा त्वां ध्यायन् अहं कः कुत्रास्मि कुतः समागतोऽस्मि कदा कस्मिन् काले कथं केन प्रकारेण, इति स्मृत्या परित्यज्यते ॥

[शृ०—] कस्य नष्टयति प्रति वचनम्—हे यते, सा रामा की दृष्ट्वा दर्शनेन घनं निषिद्धं गरलं विषं कलयते क्षिपति तद्गोचरो यो लोकः श्लाघते स नामेति प्रसिद्धो न जानाति किल यतः परतः अग्रे भयं दशमावस्थापर्यन्तं प्राप्नोति । तु पुनः अयं लोक आदरात् एतदङ्गसंगतिः क्व स्यात्, इति ध्यायन् 'कोऽहं कुत्र' इत्यादिस्मृत्या परित्यज्यते ॥

अचिरात्परात्मनिष्ठा भवति यतस्तत्क्रियेत चतुरेण ।
क्लेशेन कामदमनं विवेकदारञ्जयन्तमात्मानम् ॥ १८ ॥

अचिरादिति। [वै०—] अचिरात्, परमात्मनि निष्ठा यतो भवति तदेव चतुरेण क्रियेत कामदमनमीश्वरमेकदा कदाचित् कष्टेन रञ्जयन्तं धिक्॥

[शृ०—] अचिरात् परा अन्या स्त्री यतो हेतोः आत्मनिष्ठा स्ववशा भवति। तदेव चतुरेण कर्म कार्यम्। एकदारमेकपत्नीकं क्लेशेन कामं अन्यां प्रत्युत्पन्नमपि दमयन्तम् आत्मानं जयन्तं धिक्॥

स्फुटस्फुरणमानमा सबहुमानरोषास्थिति-
भवद्विषयवासना चलतया दुरुत्सारणा।
प्रियाचरणभाग्यतो भवति सप्रसादोऽजित-
स्ततस्तदुपसेवनं तव सुखाय नान्याश्रयः॥ १९॥

स्फुटेति। [वै०—] भवतां विषयवासना चलतया दुरुत्सारणा। कीदृशी। स्फुटस्फुरणं मानसं यस्यां सा। पुनः। बहुमानेनाहंकारेण रोषेण च सहिता स्थितिर्यस्याः सा। अजितः कृष्णः प्रियस्य हितस्य आचरणं तज्जन्यभाग्यतः पुण्यात् सप्रसादः प्रसन्नो भवति। अतस्तस्यैवोपसेवनं तव सुखाय स्यात्, अन्याश्रयो न हितायेति॥

[शृ०—] हे चल चञ्चल, अन्यासक्ततया भवद्विषया वासना त्वदपराधाहितः संस्कारो नापनेतुं शक्यते। कीदृशी। बहोर्मानस्य रोषस्य च स्थित्या सहिता। पुनः। नसा नासिकया स्फुटा व्यक्ता स्फुरणमा स्फुरणलक्ष्मीर्यस्यां सा। यतो हेतोः प्रियायाश्चरणौ भजते प्रियाचरणभाक् पुरुषः जितः सन् सप्रसादः तत्प्रसादसहितो भवति। अन्यस्या आश्रयोऽन्योपाश्रयो वा न तव सुखायेति॥

दृश्येतदेव रूपं सुकृतविपाकेन केन ते दृष्टम्।
एतर्हि गर्हितं मे जन्म न तत्कर्हिचिद्यदालोचि॥ २०॥

दृश्येतेति। [वै०—] हे देव, तव रूपं पुण्यपरिपाकेण दृश्येत कर्हिचित्। अथवा केन ते रूपं दृष्टम्, न केनापि। यत् यतो हेतोस्तत्ते रूपं मया नालोचि मनसापि न शीलितम्। ततो मे जन्म एतर्हि इदानीं गर्हितम्॥

[शृ०—] हे दृश्ये दर्शनार्हे, तदेव ते रूपं श्रुतपूर्वमद्भुतमिति एतर्हीदानीं केन पुण्यपरिपाकेण दृष्टम्। तत्ते रूपं पूर्वं कदाचिदपि यन्नालोचि ततो मे जन्म गर्हितमिदानीं त्वद्दर्शनेन सफलमिति॥

प्रसीदति किलाजितः श्रितमनोजवन्ध्यायते
क्षरन्मदनवारणप्रतिकृतौ प्रयत्नं कुरु।
यतः श्रुतिशिरःशतप्रकटितप्रमोदाद्वय-
स्वरूपविषया भवेत्तव परानुभूतिश्चिरात्॥ २१॥

प्रेति । [वै०—] अजितः कृष्णः श्रितो मनोजवो मनोवेगो यस्मिंस्तथया स्यात्तथा ध्यायते पुरुषाय प्रसीदति किल। तत आदौ क्षरन् यः मदन एव वारणो हस्ती तस्य प्रतिकृतौ प्रतीकारे प्रयत्नं कुरु। किं विष्णुप्रसादेन भवतीत्यत आह—यतो विष्णुप्रसादात् श्रुतिशिरसां वेदान्तानां शतेन प्रकटितं पदद्वयं स्वरूपं तद्विषया परानुभूतिर्ब्रह्मसाक्षात्कारस्तव चिराद्भवेदिति ॥

[शृ०—] श्रितो मनोजः कामो येन। हे यते वन्ध्या स्त्री आजितः संग्रामात्कामयुद्धतः प्रसीदति किल। अतः अक्षरदस्खलत् मदनवाः कामजलं रेतो यस्यैवंविधः सन् रणप्रतिकृतौ कामरण एव प्रतीकारस्तत्र प्रयत्नं कुरु। यतो यत्नाद्वेदान्तशतप्रतिपादितानन्दाद्वयरूपात्मानुभवश्चिरात्तव भवेदिति परिहासोक्तिः ॥

साधोरजनिमहेशं किमुपर्यासीन्न तेऽतिभावयतः ।
प्रायो मयोपदिष्टो विनैव कष्टं स्वयं सुखं लभते ॥ २२ ॥

साधो इति। [वै०—] महेशमीश्वरम् अतिभावयतः अत्यन्तं चिन्तयतः साधोस्ते किं नाजनि किम् उपरि नासीत्, किं न जातं ज्ञानादिकं किमुत्कृष्टं पदं नाभूत्। अग्रे स्पष्टम् ॥

[शृ०—] रजनिमहे रात्र्युत्सवेऽधःस्थिता सा शं सुखविशेषम् अतिभावयतस्ते उपरि किं नासीत्, अपि त्वासीदेव। प्रायो मदुपदेशेन स्वयं कष्टं विनैव सुखं सुहृल्लभत इति ॥

प्रसादसुकुमारताविजितसान्द्रचान्द्रप्रभा
रसोत्तरतरस्फुरन्मधुरवृत्तवर्णोत्तमा ।
सदच्युतपदस्थितिर्भवति भारतीशस्यते
ततस्तव रसज्ञयाजनि कृतार्थया संगमात् ॥ २३ ॥

प्रसादेति। [वै०—] ईश्वरश्लोककृतं कविं प्रति वैष्णववचनम्—भवति त्वयि भारती शस्यते स्तुता भवति। ततो हेतोस्तव जिह्वया तत्संगमात्कृतार्थयाजनि जातम्। कीदृशी सा सरस्वतीत्यपेक्षायामाह—प्रसादेन सुकुमारतया च विजिता सान्द्रा चान्द्री प्रभा यया। अतिशयेन रसप्रचुरा रसोत्तरतराः स्फुरन्मधुरं वृत्तं छन्दो येषु एवंविधा वर्णोत्तमाः श्रेष्ठाक्षराणि यस्यां सा अच्युतस्य पदे चरणे स्थितिर्यस्याः सा भारती ॥

[शृ०—] हे मित्र, रतीशस्य कामस्य भा कान्तिः शरीरशोभा ते भवति। ततो हेतोस्तव संगमाद् रसज्ञया रसं जानत्या कृतार्थयाजनि। कीदृशी कान्तिः। प्रसादेन मुखप्रसादेन सुकुमारत्वेन च विजिता सान्द्रा चान्द्री प्रभा यया। पुनः। रसोत्तरा मूलोत्कटतिमा अतिशयेन रसोत्तराणि स्फुरन्ति मधुराणि वृत्तानि चरित्राणि वर्णोत्तमो गौरिमा यस्यां सा। पुनः। सती अच्युतास्खलिता पदे स्थाने त्वत्स्थाने स्थितिर्यस्याः ॥

आसाद्यते कथं वा शौर्याश्रयणे न गौरवध्वंसः।
तत्तत्र दत्तचित्तश्चित्तजसंतापभाजनं न जनः॥ २४॥

आसेति। [वै०—] शौरेः कृष्णस्य आश्रयणे कथं वा गौरवध्वंसः आसाद्यते। तत् तत्र दत्तचित्तो जनश्चित्तोत्पन्नसंतापभाजनं न स्यात्॥

[शृ०—] गौर्या वध्वा अंसः स्कन्धः शौर्याश्रयणे शृगावलम्बने सति कथं वा नासाद्यते न प्राप्यते। तस्मात् तत्र साहसे दत्तचित्तश्चित्तजेन कामेन यः संतापस्तद्भाजनं जनो न स्यात्॥

प्राप्तः कांचनसंपदा विपुलयाहंभावसीमामिमां
को जानाति जनोऽमनागपिहितो मायामयोग्राधिना।
एतच्चित्तफलं मनुष्यजनुषो यत्प्रेम रामाश्रितं
किंचोरस्थलशायिनः कुशलतो याता निशा हैमनी॥ २५॥

प्राप्त इति। [वै०—] विपुलया संपदा कांचन अनिर्वचनीयाम् अहंभावसीमां प्राप्तः मायामयेन उग्राधिना अमनाक् अधिकम् अपिहित आच्छादितः कः पुरुषो जन्मफलं स्वकीयं जानाति, अपि तु न कोऽपि। एतदेव मनुष्यजन्मनः फलं चित्तस्य जानीत। यद् रामं आश्रितं प्रेम। दृष्टान्तः—चोरस्थलशायिनः हैमनी हेमन्तसंबन्धिनी निशा कुशलतः किं कस्यापि याता॥

[शृ०—] भावानां बिब्बोकादीनां सीमां मर्यादाम् इमां स्त्रियम् अहं विपुलया सुवर्णसंपत्त्या प्राप्तः उग्राधिना मया अपिहित आच्छादितः को जनो मम माया जानाति मनुष्यजन्मनो देहिन एतदेव फलं चित्तस्य यद् रामां श्रितं प्रेम। किं च अस्या उरःस्थले शयनोपशीलस्य मम हैमनी निशा सुखेन याता॥

कार्येहानुसरणतो वारंवारं परं पुमांसमनु।
यतमानस्यानुदिनं भवति यतः प्रेमलक्षणं भजनम्॥ २६॥

कार्येति। [वै०—] वारंवारं परं पुमांसं परमेश्वरम् अनु लक्षीकृत्य ईहा स्पृहा कार्या यतः स्पृहातोऽनुदिनं यतमानस्य प्रेमलक्षणं भजनं भवति॥

[शृ०—] इह संसारे वारंवारम् अनुसरणतः परं पुरुषम् अनु का स्त्री आर्या साध्वी। अतोऽनुदिनं यत्नं कुर्वतः प्रेम्णो लक्षणं चिह्नरूपं भजनं भवतीति॥

न कर्म रामाप्तिकरं कृतं मया न वाचिरम्भारतवर्णनं श्रुतम्।
वृथैव पूर्वः समयः समापितो न चेदिदं किं नु कृतं किमु श्रुतम्॥ २७॥

नेति। [वै०—] रामस्य प्राप्तिकृत् कर्म न कृतम्। न वा भारतस्य वर्णनं चिरं श्रुतम्। ततः पूर्वः समयो वृथैव समापितः। इदं कार्यद्वयं न कृतं चेत् किं कृतम्, किं नु श्रुतम्॥

[शृ०—] रामा स्त्री तत्प्रापिकरं कर्म किमपि मया न कृतम् । क्वापि वचने रम्भाया रतस्य वर्णनं न श्रुतम् । ततः पूर्वः समयः तारुण्यवयःक्रमो वृथैव समापितः । इदं कर्म-द्वयं चेन्न कृतम्, तदा किं कृतम्, किं श्रुतम् ॥

स्पृशति स्वरूपमुग्धं शश्वदसत्यद्वितीयभावेन ।
भ्रमयति विकलयतीदं दृश्यञ्जनमात्ममायया कलितम् ॥ २८ ॥

स्पृशतीति । [वै०—] इदं दृश्यं विश्वं स्वरूपे परमात्मभावे मुग्धं जनं शश्वन्निरन्तरम् असत्यो यो द्वितीयभावस्तेन स्पृशति । यत आत्मन एव मायया कलितं कल्पितम् । ततो जनं भ्रमयति भ्रान्तं करोति विकलयति च ॥

[शृ०—] असती स्वरूपेण मुग्धं शश्वदद्वितीयेन भावेन कटाक्षादिना स्पृशति चक्षुः-प्रीतिमुत्पादयति । इदं दृशि अस्या नेत्रे आत्मनो मायया वशीकरणौषधादिमेलनेन क-लितं निहितम् अञ्जनं भ्रमयति विकलयति च तमेव ॥

पूर्वमेव शिवसन्निधौ वने द्वन्द्वपीडनमुदेति सर्वथा ।
कोऽपवर्गभजनेऽतिनिःस्पृहोयत्नतः सुखमवाप्यते यदि ॥ २९ ॥

पूर्वमिति । [वै०—] शिवस्य संनिधौ वने पूर्वमेव द्वन्द्वपीडनं सर्वथोदेति अयत्नत एव यदि सुखमवाप्यते । तदा अपवर्गभजनं मोक्षभजनं को निःस्पृहः स्यात्—इति कश्चि-दुपदिशति ॥

[शृ०—] निश्च धुश्च निधू पूर्वमेव आदावेव शिवौ शुभौ सन्तौ निधू वर्णौ यस्यैवंविधे वने निधुवन इत्यर्थः । तत्र सर्वथा सुरते द्वन्द्वपीडनम् अर्थात् कुचानितम्बादिपीडनमुदेति । यदि यत्नतः सुखमवाप्यते । तदा अपवर्गभजने पवर्गरहिते भजनशब्दे अर्थात् जने को अतिनिःस्पृहोऽस्ति । सर्वोऽपि सुखार्थं यतेत इत्यर्थः ॥

अतिरुचिरङ्गजकृत्या क्षोभितदक्षं भवन्तमेव भजे ।
यस्मिन्प्रसादसुमुखे सद्यो वामापि भवति मम तुष्ट्यै ॥ ३० ॥

अतीति । [वै०—] गजकृत्या गजचर्मणा अत्यन्तभव्यं तं भवं शिवमेव भजे । क्षो-भितो दक्षः प्रजापतिर्येन तम् । यस्मिन्प्रसादसुमुखे सति सद्यस्तस्य वामा गौर्यपि मम तुष्ट्यै भवेत् ॥

[शृ०—] अङ्गजस्य कामस्य कृती रत्यभिलाषादिरूपा तया अतिरुचिरत्यन्तप्रीतिमान् अहं क्षोभितचतुरं भवन्तं त्वामेव भजे । यस्मिंस्त्वयि प्रसादसुमुखे सति सद्य एव वामा-पि प्रतिकूलापि सा मम तोषाय भवति—इति कस्यचिन्मानिनीप्रसादकं प्रति वचनम् ॥

विना किमात्यन्तिकमङ्गनाशं श्रेयो भवेदत्र भवे विशिष्टम् ।
अतस्तदर्थं प्रयतेत धीमान्कुतोऽन्यथा निस्तृतिरस्ति पुंसः ॥ ३१ ॥

विनेति । [वै०—] अत्र भवे संसारे आत्यन्तिकम् अङ्गस्य देहस्य नाशं विना विशिष्टं श्रेयो मोक्षः किं भवेत् । अतो धीमान् पुमान् आत्यन्तिकशरीरनाशाय प्रयतेत ।

[शृ०—] अत्र भवेऽत्यन्तम् अङ्गनायाः शं सुखं विना विशिष्टं श्रेयः किं भवेत् । अतो धीमान् अत्यन्ताङ्गनासुखाय प्रयतेत । अन्यथा पुंसः कुतो निस्तारः ॥

तुदति हिमालयपवनो माधवपरिशीलने न योगजुषम् ।
यस्मादयोगभाजां प्रभवन्ति पदे पदे विपदः ॥ ३२ ॥

तुदेति । [वै०—] हिमालयपवनो माधवस्य कृष्णस्य परिशीलने योगजुषं न तुदति अग्रे स्पष्टम् ॥

[शृ०—] हि निश्चयेन मालयपवनो दक्षिणानिलो वैशाखस्य परिशीलने स्त्रीयोगसेविनं न तुदति । यतो यस्माद्दक्षिणानिलाद् अयोगभाजां विरहिणां पदे पदे विपदः प्रभवन्ति ।

विद्याधनाभिजनकाममदेषु पुंसां
दुर्वार एष चरमस्तदहं ब्रवीमि ।
रामात्मकं जगदिदं हृदि भावयन्तः
कंदर्पमेकमवलम्बितुमुत्सहेरन् ॥ ३३ ॥

विद्येति । [वै०—] विद्याधनकुलकामजन्यमदचतुष्टये चरमः काममद एव दुरपनेयः ततोऽहं ब्रवीमि इदं जगद् राममयं हृदि भावयन्तः सन्तः कम् एकं दर्पम् एतेष्वन्यतमम् अवलम्बितुम् उत्साहं कुर्युः । नैकमपि ॥

[शृ०—] काममदः सर्वेषु मदेषु दुर्वारस्ततोऽहं ब्रवीमि जगदिदं स्त्रीमयं भावयन्तः कामिन एकं कंदर्पमेव अवलम्बितुम् उत्सहेरन् ॥

नारदरुचिसंदीपनचतुराननवादतो मुहुः स्पृहयन् ।
आश्लिष्टशेषशय्यां धन्यो रामाकृतिं चिरं भजते ॥ ३४ ॥

नारेति । [वै०—] धन्यः कोऽपि पुरुषः ईश्वरं रामस्य विष्णोराकृतिमाकारविशेषम् आलिङ्गितशेषशयनीयां भजते । नारदस्य मुने रुचिः प्रीतिस्तत्संदीपनं यच्चतुराननस्य ब्रह्मणो वचनं तस्मान्मुहुः स्पृहां कुर्वन् ॥

[शृ०—] धन्यो ना पुरुषो रामायाः स्त्रियाः कृतिं संभोगलक्षणां चिरं भजते । कीदृशीं कृतिम् । आश्लिष्टा आलिङ्गिता शेषा अवशिष्टा शय्या तदेकदेशो यस्यां सा । किं कुर्वन् नारदरुचेर्दन्तकान्तेः संदीपनं यत् चतुरायास्तस्याः 'न न' इति वचनं ततो मुहुरतिशयेन स्पृहयन् । नकारस्य दन्त्यत्वात् ॥

भवनेत्रकृशानुभूतियोगात्परमैश्वर्यमवाप्यदत्तचेताः ।
यत वेदजनो निजां गतिं न प्रतिपद्येत कथं परात्मतत्त्वम् ॥ ३५ ॥

भवेति । [वै०—] अयं जनो लोकोऽस्मरारेः शिवस्य त्रिनयनविभूतेः कामस्य योगात् प

रमैश्वर्यं प्राप्य दृप्तचित्तः सन् निजां गतिं न वेद । सांसारिकीमपि गतिं कामधनमदेन न जानाति । परस्य ब्रह्मण आत्मनो जीवस्य तत्त्वमैक्यलक्षणं कथं प्रतिपद्येत जानीयात् । न कथमपीत्यर्थः ॥

[शृ०—] अत्र भवने अस्मिन्गृहे कृशा कृशाङ्गी अनुभवसंबन्धात् परमुत्कृष्टम् ऐश्वर्यं मुक्तामणिकाञ्चनादिलक्षणम् अत्रापि प्रापिता । द्रव्यदानेनेयं प्रलोभ्य भुक्ता । अर्थान्मयेति शेषः । एतद्गृहे पुंव्यक्तिबाहुल्यात् कथं कोऽपि नाज्ञासीत् इत्यपेक्षायामाह—अदृप्तचेता उन्मादरहितः वेदजनो वेदपाठको जनो निजामपि गतिम् अशनाच्छादनादिरूपां न जानाति । परेषामात्मनो हृदयस्य तत्त्वं कथं प्रतिपद्येत ॥

श्रितपरमहंसकरणाद्यस्मात्प्रतिभाति चित्ररचनेयम् ।
अनुगतपङ्कजरागो बत रागी तत्पदं समेतु कथम् ॥ ३६ ॥

श्रितेति । [वै०—] श्रितानि परमहंसानां संन्यासिनां करणानीन्द्रियाणि येनैवंविधाद्यस्माद्विष्णोरियं चित्ररचना विचित्रा विश्वस्थितिः प्रतिभाति तत्पदं तस्य विष्णोः पदं चरणं स्थानं वा रागी जनः अनुगतः पङ्कः पापलक्षणो यया एवंविधां जरां गच्छतीति अनुगतपङ्कजरागोऽपि कथं समेतु ॥

[शृ०—] श्रितः परमो हंसकस्य नूपुरस्य रणोऽतिशब्दो येनैवंविधाद्यस्मात् पदश्चरणाद् इयं चित्रमेव रचना कृतिर्यस्याः सा चित्ररचना चित्रिणी प्रतिभाति । 'चित्रिणी चित्ररक्ता' इति प्रसिद्धेः । अनुगतोऽनुकृतः पङ्कजस्य कमलस्य रागो वर्णो येन सः तत्पत् स चासौ पच्च सचरणः तस्याः पत्, इति वा अंसं स्कन्धं कथम् एतु ॥

असौजन्यश्चेतो भवसमुचितं भावयति त-
द्वृथासंसारेऽस्मिन्नहह समयं किं गमयसि ।
चिराद्भूयोभूयः कलयसि सखेदो भवसुखं
ततो मन्ये त्यागात्प्रभवति परा निर्वृतिरिति ॥ ३७ ॥

असाविति । [वै०—] चेतः संसारोचितमसौजन्यं दुर्वृत्तत्वं भावयति तदस्मिन् संसारे समयं वृथा किमिति गमयसि । अहह खेदे । चिरादनादौ संसारे भूयोभूयः सखेदोऽपि भवसुखं वाञ्छसि ततस्त्यागादेव निवृत्तिमार्गादेव परा निर्वृतिर्भवेदिति मन्ये ॥

[शृ०—] असौ स्त्री कामोचितं जन्यं युद्धं रतं भावयति । तद्वृथास्मिन्संसारे समयं त्वं किमिति गमयसि । अहहेति खेदे । हे सखे, भवः संसारसुखं चिराद्भूयोभूयः परदारगमनजन्यं कलयसि वाञ्छसि । ततस्त्यागाद्द्रव्यदानात् परा या निर्वृतिः परस्त्रीसुखं प्रभवति ॥ यद्वा परिणेयां कन्यां भविष्यत्स्वयंवरां विलोक्य सुन्दरं स्वमित्रमुद्दिश्य स एवाह—असौ जनी परिणेया कन्या समुचितं योग्यं वरं विचारयति । तत् त्वमत्र चल, इतो भव अस्यां [illegible] प्रवर्तस्व । सुन्दरतया त्वामेव वरीष्यते । अपि अहमपि वृथा आसं अभवोऽभवम् । इयदवधि त्वदनुपदेशेनेति शेषः । सारे सारभूते अस्मिन्कन्यारत्ने किं समयं गम-

यसि। अहह सखे, अदो भवसुखं चिरात् भूयोभूयः पतिवराप्तिरूपं वाञ्छसि। ततो मन्ये प्रभवति प्रभौ त्वयि परा निर्वृतिः सुखानुभूतिः अत्यागात् अतिशयेनागतेति॥

यद्भजनमत्र सारं वयस्यसौहार्दतश्चिरासक्त्या।
हृदयं गोपजनुर्मे हरति सदूर्वाभया तन्वा॥ ३८॥

यदिति। [वै०—] हे वयस्य, सौहार्दतः प्रेम्णश्चिरमासक्त्या च यस्य विष्णोर्भजनमत्र संसारे सारम्। स गोपजनुर्हरिः दूर्वासमकान्त्या तन्वा मे हृदयं हरति॥

[शृ०—] असौ गोपजनुर्गोपकन्या सती ऊर्वांगभा कान्तिर्यस्या एवंविधया तन्वा देहेन मे हृदयं हरति। हार्दतः प्रेमतः चिरासक्त्या वयसि तारुण्ये यद्भजनं सारभूतम्॥

सदातिकलुषाशया भवसमुद्भवत्पद्धतिः
प्रसिद्धनरकामिता कथमनेनसा गम्यते।
क्व सिध्यति समीहितं फलमनन्तचर्चामुचा-
मतोऽजितविचारणापरमनोभिरानन्द्यते॥ ३९॥

सदेति। [वै०—] अनेनसा निष्पापेण पुरुषेण भवे समुद्भवतां जन्मिनां पद्धतिर्मार्गः कथं गम्यते। कीदृशी। सदा अतिकलुष आशयो यस्यां सा। तथा पुनः प्रसिद्धा नरकाः कुम्भीपाकादयो यस्यां सा। अमिता अपरिच्छिन्ना। अनन्तस्य कृष्णस्य चर्चां मुञ्चन्तीति ते तथा। तेषां समीहितमभीष्टं फलं क्व सिध्यति, न क्वापि। अतोऽजितस्य विष्णोर्विचारणायां परा निष्ठा यस्यैवंविधं मनो येषां तैरानन्द्यते॥

[शृ०—] सा स्त्री अनेन कथं गम्यते, यतः सा प्रसिद्धैर्नरैः प्रभुभिः कामिता वाञ्छिता। अथ च सदा अतिकलुषाशया भवे संसारे समुत्सु सानन्देषु भवन्ती पदाहतिर्यस्याः सानन्दानपि पदा हन्तीत्यतिदुर्लभा अनन्ता अपरिमिता चर्चा योषिद्विषया तन्मुचां क्व समीहितं सिध्यति। अतो अजितं विचारणापरं मनो यैस्तैरानन्द्यते॥

संसारिणापि सुलभं शश्वद्रामाश्रयेण नित्यसुखम्।
अच्युतरसेन सद्यःफलवत्कालत्रयोगतः क्व भयम्॥ ४०॥

समिति। [वै०—] रामस्याश्रयेण संसारिणापि नित्यसुखं ब्रह्मानन्दं सुलभमेव। अच्युतरसेन विष्णुविषयप्रेम्णा सद्यःफलवत् कालत्रयं यस्य स पुमान् क्व भयं गतः॥

[शृ०—] रामाया आश्रयेण शश्वत्संसारिणापि दैनंदिनं सुखं सुलभम्। अच्युतोऽस्खलितो यो रसस्तेन सद्यःफलवान् यः कलत्रः श्रोणिसंबन्धो योगस्ततः क्व भयं कामादेरिति शेषः॥

प्रमदाय निरत्ययाय पुंसां मिलिताष्टाङ्गविधिः समाधियोगः।
अनुकूलकलत्रकोटिकण्ठग्रहणेनापि कुतः सुखं तथा स्यात्॥ ४१॥

प्रमेति। [वै०—] मिलितः अङ्गानामष्टानां यमादीनां विधिर्यत्रैवंविधः समाधियोगो

निरत्ययाय सुखाय ब्रह्मानन्दाय भवति । अनुकूलानां कलत्राणां या कोटिस्तत्कण्ठग्रहणेनापि तथा सुखं कुतः स्यात् ॥

[श्लो०—] समः समान आधिर्यस्यास्तस्याः परस्त्रिया योगः संबन्धो मिलितोऽष्टानामङ्गानां विधिर्न्यासविशेषो यत्र एवंविधो निरवधये सुखाय भवति । अग्रे स्पष्टम् ॥

पदयुगलं पद्मदृशो हृद्यारोपयति यः स्मरातिसमये ।
स कथं स्वर्गसुखान्यपि धन्यो मन्येत न तृणेभ्यः ॥ ४२ ॥

पदेति । [वै०—] पद्मदृशः पुण्डरीकाक्षस्य पदयुगलं यो हृद्यारोपयति, समये चरमावस्थायां स्मरति च, स धन्यः स्वर्गापवर्गसुखान्यपि तृणेभ्यो न मन्येत ॥

[श्लो०—] यः पुरुषः पद्माक्ष्याश्चरणद्वयं रतिसमये हृद्यारोपयति स्म । अग्रे स्पष्टम् ॥

मधुरिपुमधरं शिवं वरेण्यं वदति जनोविदितैतदीयतत्त्वः ।
तदहमिह महानुरागभूमावहरहरस्मि रहस्युदीततृष्णः ॥ ४३ ॥

मध्विति । [वै०—] अविदितमज्ञातमेतदीयं विष्णुसंबन्धि तत्त्वं येन एवंविधः शैवो जनो मधुरिपुम् अधरमपकृष्टं शिवं तु वरेण्यं श्रेष्ठं वदति ॥ यद्वा विदितशिवतत्त्वः शैवो जनो मधुरिपुमधरं शिवं वरेण्यं वदति । तत्तस्मादहमिह मधुरिपौ शिवे वा महानुरागस्थाने उत्पन्नतृष्णोऽस्मि एकान्ते तद्ध्यानतृष्णोऽस्मि ॥

[श्लो०—] विदितमेतदीयम् अधरसंबन्धि तत्त्वमत्यन्तमधुरस्वरूपत्वं येन सः अधरं मधुनो रिपुं वदति । शिवं मङ्गलरूपं वरेण्यं श्रेष्ठं वदति । तदहमिहाधरे आरुण्यस्य प्रेम्णो वा भूमौ उत्पन्नतृष्णोऽस्मि ॥

परपुरुषजीवनार्यासङ्गोत्रसतां मिलत्यसत्त्यागात् ।
तस्मादपहाय भयं तदाप्तये तत्परः प्रवर्तेत ॥ ४४ ॥

परेति । [वै०—] अत्र संसारे परः पुरुषः परमेश्वर एव जीवनं येषां तेषामार्याणां सतामासङ्गः असतां खलानां त्यागान्मिलति । अग्रे स्पष्टम् ॥

[श्लो०—] अत्रसतां त्रासमकुर्वतां पुरुषाणाम् असत्त्यागादसद्भयत्यागात्परे पुरुषे जीवो यस्यास्तस्या नार्याः सङ्गो मिलति । अग्रे स्पष्टम् ॥

साकं मनोभवमदेन भजेत कम्रं
लक्ष्म्या बलेन यदि कोऽपि लभेत तत्त्वम् ।
लभ्येत पुष्कलपुरातनपुण्यपुञ्ज-
पाकेन केवलमिदं भजनं जनेन ॥ ४५ ॥

सेति । [वै०—] कोऽपि कश्चिद्ब्रह्मापि वा तत्त्वं लभेत विष्णो रहस्यं प्राप्नुयात् । लक्ष्म्याः कम्रं कामुकं हरिं यदि बलेन बलभरेण हठेन वा साकं मनोभवमदेनोपलक्षितो

भजेत। कामुकोऽपि हरिभजनेन तत्त्वं प्राप्नुयात् इदं भजनं (अस्य विष्णोर्भजनं) पुष्कल-पुरातनपुण्यपुञ्जपरिपाकेनैव केवलं लभ्येत॥

[शृ०—] सा स्त्री मनोभवमदेन स्वद्रविणेन वा कं कम्रं कामुकं भजेत। अपि तु न कमपि। यदि कश्चित्कामी लक्ष्म्या बलेन द्रव्यव्ययसामर्थ्येन तत्त्वं तस्याः स्वरूपं लभेत। इदंभजनमस्या भजनं पूर्वपुण्यपुञ्जपरिपाकेनैव लभ्यते॥

आकलितोरुक्रमपदपद्मालंकृत्यनल्पपुण्यभवम्।
निजगुणगुरुस्वरूपं काव्यञ्जयाति प्रसन्नमतिमधुरम्॥ ४६॥

आकेति। [वै०—] आकलिता स्वीकृता उरुक्रमस्य विष्णोः पदपद्ममेवालंकृतिर्येन। अनल्पात्पुण्याद्भवति तादृशम्। निजैर्गुणैः श्लेषप्रसादादिभिर्गुरु गरिष्ठस्वरूपं शब्दार्थरूपं यस्य तथाविधं प्रसन्नमतिमधुरं काव्यं कवित्वं जयति॥

[शृ०—] इयं का स्त्री प्रसन्नमधुरं स्वरूपं व्यञ्जयति। कीदृशम्। आकलितः स्वीकृत उरुः श्रेष्ठो हंसादीनामिव क्रमो विक्षेपो येन तादृशं यत् पदपद्मं तदेवालंकरणं यत्र। आकलित ऊर्वोः क्रमः अङ्घ्रिकमलालंकृतिर्नूपुरादिश्च यत्रेति वा। बहुपुण्यभवं निजैः सहजैर्गुणैर्गुरु गरिष्ठम्॥

मनोभवध्यानपरायणानां तदन्यमिच्छाविषयं न वेद।
अतस्तदामोदरसे निमग्नाः कथं नु संसारभयं लभन्ताम्॥ ४७॥

मेति। [वै०—] भवस्य ध्यानमेव परमयनं येषां तेषां मनः तदन्यमिच्छाविषयं न वेद। अतस्तद्ध्यानरसे निमग्नाः कथं संसारभीतिं लभन्ताम्॥

[शृ०—] मनोभवः कामस्तद्ध्यानासक्तानां तदन्यमिच्छाविषयमहं न वेद। अग्रे स्पष्टम्॥

प्राप्तैव निर्वृतिश्रीः सत्यं सामानि गायतानेन।
तद्गानमेव मन्ये स्त्रीहृदयग्रन्थिभेदने हेतुः॥ ४८॥

प्राप्तैवेति। [वै०—] सामानि गायतानेन सामगेन निर्वृतिश्रीः सुखसंपत् प्राप्तैव। तस्माद्धृदयग्रन्थेरहंकारस्य भेदने हेतुर्गानमेव अस्त्री छुरिकेति मन्ये॥

[शृ०—] गायतानेन निर्वृतिश्रीः सुखसंपद्रूपा निर्गतावृतिरवगुण्ठनाद्यावरणशोभा वा यस्याः सा सत्यं प्राप्तैवामानि। अग्रे स्पष्टम्॥

गृहमधममुपेक्ष्य कृष्णपक्षातिरागै-
रविभुवनमुपेयं सद्गिरादौ निसर्गात्।
क इह गतिमितोऽन्यां वक्तु कामातुराणां
तदहमुपदिशामि श्रेयसे भूयसे यत्॥ ४९॥

गृहेति। [वै०—] कृष्णः पक्षो येषां तेषु अतिरागैः कृष्णपक्षपातिभिः गृहम् अधम-

मित्युपेक्ष्यम् सद्भिरादौ निसर्गात्स्वभावात् अविधु चन्द्रांशुदीपनरहितं वनम् उपेयं गन्तव्यम्। कामैरभिलाषैरातुराणां क्लेशभाजाम् इतोऽन्यां गतिं को वक्तु । अहं तु तद्ब्रवीमि यद्भूयसे श्रेयसे ॥

[शृ०—] कृष्णपक्षे अधिकरागैः सद्भिरधमं स्वायत्तं गृहं कलत्रमुपेक्ष्यम् । विगतो धुर्यत्र तद्विधु, न विधु अविधु, धुसहितं वनं धुवनम्, आदौ निसर्गात् नेर्वर्णस्य सर्गात्सृष्टेः निधुवनं भवति तदुपेयं प्राप्तव्यम् । अन्यत्रेति शेषः । इतोऽन्यां कामातुराणां गतिं क इह कृष्णपक्षे वक्तु । अहं तु भूयः श्रेयोहेतुमुपदिशामि ॥

त्यक्तान्यविषयवृत्तिर्ध्यायति सारं श्रुतं मतं पुरुषम् ।
तदसौ कथं न विन्देत्परमानन्दं प्रयत्नपरचेताः ॥ ५० ॥

त्यक्तेति । [वै०—] असौ पुरुषस्त्यक्तान्यविषयवृत्तिः सन् श्रुतं श्रुतिवाक्येभ्यो मतमुपपत्तिभिः सारं सारभूतं पुरुषं परमात्मानं ध्यायति । अग्रे स्पष्टम् ॥

[शृ०—] सा स्त्री त्यक्तान्यविषया वृत्तिर्यया सा श्रुतं दूत्यादिमुखेन मतमभीष्टं पुरुषं ध्यायति । अरं शीघ्रं तत्तस्मादसौ पुरुषस्तस्याः संमतः कथं परमानन्दं न विन्देत् ॥

गाङ्गेयमुख्यमिततुङ्गसमस्तनीति-
गुप्तापि विश्रुतकथाभरणाचितापि ।
अत्येति कामरणवेगमियं तनुस्त-
दस्यामहोरुचिरभाग्यजनादितः स्यात् ॥ ५१ ॥

गाङ्गेति । [वै०—] गाङ्गेयमुख्यैर्भीष्मप्रभृतिभिर्मिता या तुङ्गा समस्ता नीतिस्तया गुप्तापि रक्षितापि विश्रुता प्रसिद्धा या कथा कीर्तिस्तद्रूपाभरणसहितापि का तनुः किं राजादिशरीरं मरणवेगमत्येति अतिक्रामति । अपि तु न । तत्तस्मादस्यां तनौ इतोऽस्मादभाग्यजनाद्रुचिः स्यान्न भाग्यवतः ॥

[शृ०—] तनुः कृशाङ्गीयं कामरणे कंदर्पयुद्धे वेगमतिक्रामति लघुदेहत्वेन विपरीतरतेऽतिवेगवतीत्यर्थः । तस्मादस्या मह उत्सवो रुचिरभाग्यादितो मत्सक्षणाज्जनात्स्यात् । यद्वा अस्या महतोरुर्वोश्चिरं बहुकालं भजते महोरुचिरभाक् यजनादितः पुण्यात्स्यात् ॥

अतिविशदानन्तपदप्रवृत्तदृष्टिर्न मधुरवीक्षणतः ।
तुष्यत्यर्चितुकामः प्रातस्तनकमलमुकुलवीक्षणतः ॥ ५२ ॥

अतीति । [वै०—] मधुरवीक्षणतो वसन्तादित्यदर्शनादतिविशदेऽतिनिर्मलेऽनन्तस्य विष्णोः पदे चरणे प्रवृत्तदृष्टिः कः पुरुषोऽर्चितुकामोऽर्चनं कर्तुकामः प्रातस्तनानां प्रातःकालिकानां कमलमुकुलानां दर्शनान्न तुष्यति ॥

[शृ०—] वसन्तादित्यदर्शनादतिनिर्मले आकाशस्थाने दत्तदृष्टिः प्रातरर्चितुकामो यातुकामः कः कामी स्तनकमलमुकुलयोर्दर्शनेन न तुष्यति ॥

---

१. आदर्शपुस्तकेऽस्य श्लोकोत्तरार्धस्य शृङ्गारपक्षे टीका त्रुटितास्ति.

इह यादववंशकृष्णवर्त्मानुगतिः साङ्गतया मयान्वभावि।
अधुना तदवाप्तिचेतसे मे मधुराकामधुरापि रोचते किम् ॥ ९३ ॥

इहेति। [वै०—] इह सतां समाजे यादववंशो यः कृष्णस्तस्य यद्वर्त्म मार्गस्तदनुगतिः साकल्येन मयान्वभावि। इदानीं तत्प्राप्तिचित्ताय मे मधुरा कामस्य धूः किं रोचते। अपि तु न॥

[शृ०—] अङ्ग हे, दवेऽरण्ये वेणुघर्षणजन्यो यः कृष्णवर्त्मा वह्निस्तदनुगतिर्या तत्र निपातरूपा सा तया मया चान्वभावि अनुभूता। अधुना तत्प्राप्तिमनसेऽपि मे मधुरापि मधुराका वसन्तपूर्णिमा न रोचते॥

रुचिरजनिसौरभासावह्निविधुश्रीः पयोधराकलिता।
विदितोऽस्तिमार्गणादेरात्मभुवोऽस्याः पितृप्रसूसमयः ॥ ९४ ॥

रुचीति। [वै०—] सायां सूर्यसंबन्धिन्या भामा पयोधरैर्मेघैराकलिता वह्निविध्वोरिवारुणा श्वेता च रुचिरजनि जाता। अतोऽस्या रुचेरात्मभुवो ब्रह्मणः। उपलक्षणमिदम्। अर्थाद्ब्राह्मणस्य। पितृप्रस्वाः सायंसंध्यायाः समयो विदितः। किंभूतस्यात्मभुवः। आ समन्तादृचां गणा आर्गणाः। अस्ति विद्यते मा लक्ष्मीर्येभ्य एवंविधा अस्तिमास्ते च ते आर्गणाश्च तेषामादिभूतस्य। उपलक्षणमिदम् ऋगादिसकलवेदमूलस्य। ब्राह्मणस्य संध्यावन्दनसमयो जातस्ततो विधिनिषेधज्ञहत्तालैर्भाव्यम्॥

[शृ०—] असौ स्त्री पयोधराभ्यामाकलिता उद्गतस्तनी अह्नि दिवसे एव विधोरिव श्रीर्यस्या एवंविधा सुन्दरी रुचिरा जनिरुत्पत्तिर्यस्यैवंविधं सौरभं पद्मगन्धः स्वाभाविको यस्याः सा तथा। अतः पद्मिनीत्यवगम्यते। किं ततः। अस्याः पितृप्रसूः पितामही तत्समयः स्नानाद्यर्थं गमनकाल आत्मभुवो मार्गणादेः स्वकल्पितयाचकचारणशिल्पिविशेषादिच्छद्मदूतादेः सकाशाद्विदितो ज्ञातोऽस्ति॥

नव्यस्तनीतिपरिशीलयतो न सौख्य-
साम्राज्यमस्तु कथमात्मभुवातिसृष्टम्।
नात्रापि मर्दितमुरो यदि किं ततः स्या-
त्तस्मान्निरन्तरमिदंभजनेन भाव्यम् ॥ ९५ ॥

नव्येति। [वै०—] न व्यस्ता नीतिर्यस्मिन्कर्मणि यथा स्यात्तथा आत्मभुवा ब्रह्मणातिसृष्टं निर्मितं सौख्यस्य साम्राज्यं राज्यप्रासादादिजन्यं कथं नास्तु। अपि तु भवतु। अत्रापि राज्यादिसौख्ये सत्यपि मर्दितो मुरो येन मुरजिद्वासुदेवो यदि न आराधित इति शेषः। ततः क्षयशीलेन सौख्येन किं स्यात्। अग्रे न किंचित्॥

[शृ०—] इयं नव्यस्तनी परिशीलयतः पुंस आत्मभुवा कामेन अतिसृष्टं दत्तं सौख्यसाम्राज्यं कथं नास्तु। अत्रापि तत्परिशीलनेऽपि उरो यदि न मर्दितम्, ततः किं स्यात्। तस्मान्निरन्तरमिदंभजनं उरोमर्दनात्मकस्तत्र भाव्यम्॥

जानामि दुःखहेतुं स्मरस्य दुर्वारतान्तेषु ।
सद्यः सखे विरक्तिः प्रभवति विषयानुबन्धिनी यत्र ॥ ९६ ॥

जानेति । [वै०—] यत्र येषु पुरुषेषु विषयानुबन्धिनी विरक्तिः सद्यः प्रभवति परंतु हे सखे, तेषु स्मरस्य दुर्वारतां दुःखहेतुं जानामि तस्मात्कामजये मति विरक्तिर्दृष्टा भवति॥

[शृ०—] हे सखे, रतसमाप्तिषु स्मरस्य दुर्वाः दृष्टमुदकं वीर्यं दुःखहेतुं जानामि । यत्र येषु रतान्तेषु सद्य एव विषयानुबन्धिनी विरक्तिर्भवति । अतः स्तम्भनाद्युपायं शिक्षयतो यावदिच्छं रतं निर्वहेत् ॥

कलितोरुचिरं न कर्म चेत्क्रियतेऽनङ्गकृतेः कुतः फलम् ।
स्मरतो हृदि पुण्डरीकदृग्भजतेऽसौ सफलस्ततः श्रमः ॥ ९७ ॥

कलीति । [वै०—] कलितः कलियुगादुरुचिरं साङ्गं कर्म चेन्न क्रियते अनङ्गकृतेः अङ्गहीनाया यज्ञादिकृतेः कुतः फलं स्यात् । अत्रैकोऽस्त्युपायः । स्मरतः पुरुषस्य यज्ञादिकर्मकृतो हृदि पुण्डरीकदृक् पुण्डरीकाक्षः भजते । ततः श्रमः सफलः ॥

[शृ०—] कलितौ दृष्टावूरू यत्र तत्कर्म रतं चिरं चेन्न क्रियते तदा अनङ्गकृतेरनङ्गकार्यस्य चुम्बनालिङ्गनादेः फलं कुतः । असौ पद्माक्षी स्मरतः 'कामशास्त्रोक्तं रतविधिम्' इति शेषः । तस्य पुरुषस्य हृदि भजते हृदयंगमा भवति । ततः श्रमोऽपि सफल एव ॥

अतिपरमाद्भुतवेषा काप्येषा जयति सृष्टिरात्मभुवः ।
तत्किं न वाञ्छितं स्यादस्या यदि विधुरवीक्षणः पाता ॥ ९८ ॥

अतीति । [वै०—] अतिपरमा अत्युत्कृष्टा महीमहीधरसमुद्रादिरूपा अद्भुत आश्चर्यकारी वेषो मुखवैलक्षण्यादिः प्राणिनां यत्र तादृशी काप्यनिर्वाच्या आत्मभुवो ब्रह्मणः सृष्टिर्जयति । यदि अस्याः सृष्टेर्विधुरवी चन्द्रसूर्यौ ईक्षणे नेत्रे यस्य स विष्णुः पाता तदा किं वाञ्छितं न स्यात् ॥

[शृ०—] अतिपरमोऽद्भुतो वेषो यस्याः सा काप्येषा आत्मभुवः कामस्य सृष्टिर्जयति । यदि अस्याः पाता रक्षकः पतित्वा विधुरं वीक्षणं यस्यैवंविधस्तदा समीहितं मम किं न स्यात् । स्यादेव ॥

सर्वागमान्तप्रमितान्धकारे निवार्य कार्यान्तरचारि चेतः ।
अये दयालुर्मयि चेत्प्रसीद सीदन्तमिष्टोरुपदं नयाशु ॥ ९९ ॥

सर्वेति । [वै०—] सर्वैरागमान्तैर्वेदान्तैः प्रमित ज्ञात अन्धकारे महेश, कार्यान्तरचारि मम चेतो अये शुभावहविधौ निवार्य मयि दयालुश्चेत् प्रसीद प्रसन्नो भव सीदन्तं माम् इष्टं उरु श्रेष्ठं पदं स्वं चरणं नय पदं स्थानं वा आशु प्रापय ॥

[शृ०—] कार्यान्तरचारि चेतो निवार्य सर्वे येऽगमा वृक्षास्तेषामन्ते मध्ये प्रमिते

योऽन्धकारस्तत्र अये प्रिये यदि मयि दयालुस्तर्हि त्वद्विरहात् सीदन्तं मां पदिष्टमभिमतं यदूरुपदमूरुस्थानं तदाशु नय ॥

सत्यं समर्तुकामः पुत्री भवति स्वयं कुतः पुत्री ।
मत्वा विषमातिथिं यदि विद्वान्परिहरति विधिनिषेधज्ञः ॥ ६० ॥

सत्यमिति । [वै०—] स्वयं विद्वान्विधिनिषेधज्ञः सन् यद्यतिथिं विषं मत्वानिष्टं ज्ञात्वा परिहरति विमुखं करोति तदा स गृहस्थः सत्यं मर्तुकाम आसन्नमृत्युः पुरुषोऽपि अप्रयोजकत्वेन पुत्री भवति कन्येव स्वापितुर्भवति । स्वयं कुतः पुत्री पुत्रवान् भवेत् । अतोऽतिथिसत्कारोऽवश्यं कार्यः ॥

[शृ०—] स्वयं विद्वान् पण्डितो विधिनिषेधज्ञो यदि विषमां तिथिं मत्वा पुत्रकामश्चेन्न परिहरति 'युग्मासु संविशेत्' इति विधेः । तदा सत्यं पुत्री पुत्रवान् भवति पुत्री कन्या कुतः स्यात् । यतोऽसौ स्वयं समे ऋतौ कामो यस्यैवंविधस्त्वमपि पुत्रकामश्चेत्तथा कुरु ॥

नरीनृत्यमानं भुजंगोत्तमाङ्गे समाकर्ण्य तुष्यन्ति ये वर्ण्यमानम् ।
त एवात्र संसारिणो मुक्तबन्धा यदेषां विमोक्षाधिकानन्दलक्ष्मीः ॥ ६१ ॥

नरीति । [वै०—] स्पष्टोऽर्थः ।

[शृ०—] भुजंगस्य विटस्य उत्तमेऽङ्गे सुखसाधनत्वेन अर्थान्मेहने नरी मानुषी तस्या नृत्यस्य मानं नानाविधं परिमाणं वर्ण्यमानमाकर्ण्य ये कामिनस्तुष्यन्ति त एवात्र संसारिणः संसारसुखभाजः । यतो मुक्ता बन्धा नानाविधासनविशेषा यैस्ते तथा यत एषां विमोक्षाधिकानन्दसंपत् ॥

ननु सर्वतो निवृत्तिः स्मर्तुः संभवति पुण्डरीकदृशः ।
द्वित्राण्यहानि जीवनमिह दुर्लभमित्यवेत्य विरतोऽस्मि ॥ ६२ ॥

नन्विति । [वै०—] पुण्डरीकाक्षस्य स्मर्तुः सर्वतो निवृत्तिर्भवति इह संसारे जीवनं द्वित्राण्यप्यहानि नैयत्येन दुर्लभमित्यवेत्य विरतोऽस्मि ॥

[शृ०—] पद्माक्ष्यास्तस्याः ऋतुः संभवति स्म । किं तत इयत आह—सर्वतश्चुम्बनालिङ्गनादेरपि निवृत्तिः । अतोऽस्पृश्यत्वात् द्वित्राण्यहानि मम जीवनं दुर्लभमिति विरतोऽस्मि ॥

क्षेत्रज्ञे कमलाकरार्पितपदे सर्वागमान्तायने
नित्यं दर्शनकाङ्क्षिभिः सुकृतिभिर्दृष्टे कथंचित्क्वचित् ।
सत्वारम्भपयोधरोन्नतिभवश्रीशालिनि श्रीधरे
चेतश्चेन्मम वर्तते त्वयि कथं न स्यात्कृपा ते मयि ॥ ६३ ॥

क्षेत्रेति । [वै०—] हे कृष्ण, श्रीधरे लक्ष्मीनिवासे त्वयि मम चेतो वर्तते चेत्कथं तव कृपा मयि न स्यात् । किंभूते क्षेत्रज्ञे । कमलायाः करे अर्पितं पदं येन सर्वे ये

आगमान्ता वेदान्तास्तत्रायनं यस्य नित्यं दर्शनकाङ्क्षिभिः पुण्यवद्भिः कथंचिद्योगाभ्यासादिना क्वचिद्दृष्टे ऋतोर्वर्षर्तोरारम्भे मेघानां या उन्नतिस्तद्भवा या श्रीस्तच्छालिनि ॥

[शृ०—] कस्यचित्कांचित्प्रति संकेतनिवेदकं वचनम्—हे क्षेत्रज्ञे इक्ष्वादिक्षेत्रज्ञानवति, कमलाकरे सरसि अर्पितं पदं यया तद्गमनशीले, सर्वेषामगमानां वृक्षाणामन्तेऽयनं गमनं यस्यास्तथाविधे । सबोधनत्रयेणैव संकेतस्थलत्रय मया गन्तव्यमिति सूचितम् । नित्यं दर्शनकाङ्क्षिभिर्धन्यैः कथंचित्क्वचिद्दृष्टे ऋतौ ऋतुसमयस्यारम्भे या पयोधरयोरुन्नतिरुत्थानं तद्भवा या श्रीः शोभा तच्छालिनि मयि तव कृपा कथं न स्याचेत् मम चेतो निरन्तरं त्वयि वर्तते ॥

तव पुण्डरीकदृष्टे क्व स्मरतां ते भवन्ति नहि कामाः ।
किं त्वा विनास्ति मेऽन्यत्तत्त्वमुदर्काय सपदि संपर्कात् ॥ ९४ ॥

तवेति । [वै०—] हे पुण्डरीकाक्ष, तव स्मरतां पुंसां ते प्रसिद्धाः स्वर्गापवर्गाद्यभिलाषा हि निश्चयेन क्व न भवन्ति त्वां विना किमन्यन्मे तत्त्वमस्ति यत्सपदि संपर्कादुदर्कायोत्तरफलाय स्यात् ॥

[शृ०—] हे पद्माक्षि, तव क्व कस्मिन् रतान्ते रतसमाप्तौ कामाः पुना रतोद्योगा न भवन्ति त्वां विना त्वद्व्यतिरेकेण मे किमन्यदस्ति तत्तस्मात्त्वमेव सपदि संपर्कादुदर्कायोत्तरफलाय ॥

श्रुता गीता लोकैर्जगति बहुशोभारतकथा
यदीया लीलास्ते मम हृदि महोरूपचयभृत् ।
नरे सारथ्यादावुदितपरमार्थव्यवहृतिः
समानात्मा साक्षात्कृतिविषयतामेष्यति कदा ॥ ९५ ॥

श्रुतेति । [वै०—] महोरूपयोस्तेजोलावण्ययोश्चयः समूहः । यद्वा महसां ज्योतिषां रूपाणां महीमहीधरसागरादीनां चयस्तं बिभर्तीति तथा विश्वरूपादिप्रसङ्गे तथात्वात्तथाविधा भारतकथारूपा यदीया लीला गीता लोकैर्जगति बहुशः श्रुता मम हृदि आस्ते । नरे अर्जुने सारथ्यादिसमये उदित उक्तः परमार्थो व्यवहृतिर्व्यवहारश्च येन सः मानात्मा प्रमाणरूपः स्वप्रकाशो भगवान्कृष्णः कदा साक्षात्कृतेर्विषयतामेष्यति ॥

[शृ०—] यदीया रतकथा लोकैर्विटजनैर्जगति बहुशोभा श्रुता गीता स्तुता च । यदीया लीला महान्त ऊर्वोरुपचय पीनत्वं बिभर्ति । तादृशी मम हृदि आस्ते सा वेश्या रथ्याया आदौ मुखे उदित उक्तः परमस्य महतोऽर्थस्य धनस्य व्यवहार आदानलक्षणो यया सा समानो मानसहित आत्मा यस्यास्तादृग्धनलाभमन्तरेणानङ्गीकुर्वाणा साक्षात्प्रत्यक्षीभूय मे कृतेर्विषयत्वं गोचरत्वं कदा एष्यति ॥

चक्षुरपाङ्गाहितदृक्चेतश्चरतीशसङ्गरमितं ते ।
ननु भाविनीविमुक्तौ विचिकित्सा केन हेतुनेदानीम् ॥ ९६ ॥

चक्षुरिति । [वै०—] हे सखे, तव चक्षुरपाङ्गस्यापगतदेहस्य कामस्याहितं शिवं पश्यतीति तथा चेतश्च ते ईशसङ्गेन रमितं चरति । ननु इदानीं केन हेतुना ते विमुक्ता विचिकित्सा संशयः भाविनी ॥

[श०—] अपाङ्गयोर्नेत्रान्तयोराहिता दृष्टिर्यैनैवंविधं ते चक्षुश्चेतश्च ते रतीशसंगरं इतं प्राप्तम् । ततः केन हेतुनेदानीं भाविन्यां नाविमुक्ता संशयः ॥

स्फुरति निरुपमानवर्तुलाभा मम हृदि गोपसुताधिकाननश्रीः ।
कथमिव न लभेय शर्म तस्याविशदविचारनिरन्तरानुवृत्त्या ॥ ६७ ॥

स्फुरतीति । [वै०—] गोपसुतस्य नन्दसूनोरधिका आननश्रीर्मम हृदि स्फुरति । निरुपमाना वर्तुला आभा यस्याः । ततो विशदो निर्मलो यो विचारस्तेन निरन्तरमनुवृत्त्या शर्म सुखं कथं न लभेय प्राप्नुयाम ॥

[श०—] निरुपमा उपमारहिता नव ऋतुलाभो यस्या एवंविधा अतएवाधिका आननश्रीर्यस्या एवंविधा गोपसुता स्फुरति मम हृदि वर्तते । विशतां तद्गृहं दूत्यादीनामविचारेण निरन्तरं चिरं या अनुवृत्तिस्तया तस्याः सकाशात् शर्म रतसुखं कथमिव न लभेय ॥

यास्यति वयस्य कस्मादस्मितया ममतया कृतः क्लेशः ।
विदितमनन्योपायादच्युतचरणाम्बुजग्रहादेव ॥ ६८ ॥

यास्येति । [वै०—] हे वयस्य, अस्मितयाहंकारेण ममतया ममत्वेन च कृतो यः क्लेशः स कस्माद्यास्यति । अथवा विदितं स्पष्टम् ॥

[श०—] हे वयस्य, अस्मितया स्मितशून्यया तया कृतो यो मम क्लेशः स कस्माद्यास्यति । अथवा विदितं स्पष्टम् ॥

तां काञ्चनस्वर्गलतामवाप्य किमप्ययं गेहसुखं व्यनक्ति ।
करोति चेदेष परात्मनिष्ठां जीवन्विमुच्येत चिरात्कथंचित् ॥ ६९ ॥

तामिति । [वै०—] काञ्चन अनिर्वचनीयां सुष्ठु अर्गला यन्त्रणा श्रुतिस्मृत्युक्ता यस्यासौ तस्य भावस्तत्ता तां प्राप्यायं पुमान् किमप्यनिर्वाच्यं गेहसुखं प्रकटयति । एष पुरुषः परे आत्मनि विष्णौ निष्ठामासक्तिं चेत्करोति तदा चिरात्कथंचिज्जीवन्नेव विमुच्येत॥

[श०—] काञ्चननिर्मिता स्वर्गस्येव लता या तां स्त्रियं प्राप्यायं किमपि गृहसुखं प्रकटयति चेदेष परस्या आत्मनि शरीरे निष्ठामासक्तिं कुर्यात्तदा कथंचिन्महता कष्टेन चिरान्महता कालेन जीवन् विमुक्तो भवेत् । तस्याः शासनादिति शेषः ॥

अचिरेण रोचते मे दिवसानेवं वृथातिवाहयते ।
श्रितकृष्णपक्षगतये वयस्य काम्यस्तनोविरहः ॥ ७० ॥

अचिरेणेति । [वै०—] एवं वृथादिवसान्गमयते आश्रितवैष्णवगतये मे हे वयस्य, मनोहरतन्वा विरहोऽचिरेण शीघ्रमेव रोचते ।

[शृ०—] हे वयस्य, अद्यावधि एवमेव कालक्षेपं कुर्वते कृष्णपक्षे समाश्रितगमनाय मे अचिरेण कामिना अस्ता क्षिप्ता नीविर्यत्रैवंविधं रह एकान्तस्थलं रोचते ॥

परपुरुषविवादे लौकिकी मानचर्चा
भवति न खलु युक्ता जाग्रति स्वप्रकाशे ।
तदिह मधुविरोधिन्यश्रुते साक्षिरूपे
प्रभवति कुरु चेतोवृत्तिनिष्ठां गरिष्ठाम् ॥ ७१ ॥

परेति । [वै०—] परपुरुषस्य ब्रह्मणो विवादे प्रसक्ते सति लौकिकी लोकसिद्धा मानचर्चा अनुमानादिप्रमाणोपन्यासरूपा खलु निश्चयेन न युक्ता भवति । स्वप्रकाशे चैतन्यलक्षणे प्रमाणे जाग्रद्रूपे सति । तत्तस्मादिहास्मिन्मधुरिपौ साक्षिस्वरूपे अश्रुते इयदवधि तत्र वेदान्तश्रवणरूपप्रथमप्रतिपत्त्यगोचरे त्वं चेतोवृत्तिनिष्ठां गरिष्ठां कुरु ॥

[शृ०—] हे भवति, परपुरुषेण समं विवादे कलहे सति खलु निश्चयेन अलौकिकी लोकमर्यादोल्लङ्घिनी मानचर्चा स्वप्रकाशे ज्ञाने जाग्रति सति न युक्ता । अज्ञा परमेवं मानं करोति । त्वं तु ज्ञानसंपन्ना इत्यर्थः । तत्तस्मात् हे साक्षिरूपे नेत्रसौन्दर्यसहिते, मधुर्वसन्तो विरोधी यस्याः । विरहादिति शेषः । एवंविधे, अश्रु नेत्रोदकं ते प्रभवति । चेतोवृत्तेर्निष्ठामिहास्मिन्पुरुषे गरिष्ठां कुरु ॥

सहचर मम भालतले विधिना लिखितास्ति चित्ररचनेयम् ।
यामेनवरतमहिता मनोरथातिक्रमेण संजाता ॥ ७२ ॥

सहेति । [वै०—] हे सहचर मित्र, मम भालतले ललाटपट्टे इयमेवंविधा चित्रा अद्भुता रचना लिखितास्ति । या मे मनोरथानामतिक्रमेण नैष्फल्यसंपादनेन अनवरतं सदा अहिता संजाता । यत्परलोकसाधनं न जातमिति ॥

[शृ०—] हे सखे, चित्रमेव रचना यस्याः सा चित्रिणी स्त्री धात्रा मे ललाटतले लिखितास्ति 'त्वयोपभोग्येयम्' इति मनोरथस्य चातिक्रमेण वेगवत्तयेति शेषः । यामे प्रहरे सर्वस्मिन्नपि नवरतेन नूतनेनोपरिरतेन महिता पूजिता उत्सवयुक्ता वा संजाता ॥

कासारे पद्मिनीयं मुकुलयुगमनत्यन्तरं यत्र हृद्यं
यस्मिन्सद्यःसमुद्यद्ग्रहपतिकरजव्यापृतिः श्लाघनीया ।
तस्मादेतद्विशेषस्मृतिकलितमिह प्रेक्ष्य साक्षादुपेक्ष्यं
वर्यं शौर्यं च नादौ न गमय समयं त्वं व्रजस्त्रीहितज्ञः ॥ ७३ ॥

केति । [वै०—] कासारे सरसि इयं पद्मिनी कमलिनी । वर्तत इति शेषः । यत्र यस्यां हृद्यं मनोहरम् अत्यन्तरहितम् एकदेश एव वर्तमानं मुकुलयुगलमस्तीति शेषः । यस्मिन्मुकुलयुग्मे सद्यः समुद्यन् यो ग्रहपतिः सूर्यस्तस्य करेभ्यो जाता व्यापृतिः सा श्लाघनीया स्तुत्या । तस्मात् शौरेः कृष्णस्यार्चनादौ पूजादौ विशेषस्मृत्या स्मृतिवचनेन 'मुकुलैर्नार्चयेद्विष्णुं विना कमलकोरकैः' इत्यादिना । वर्यं श्रेष्ठम् इह साक्षात् प्रत्यक्ष-

नेत्रेण दृष्ट्वा स्वयं नोपेक्ष्यम्। व्रजस्त्रीभ्यो हितं कृष्णं जानातीति तथाविधस्त्वं समयं गमय॥

[शृ०—] इयं पद्मिनी कासारे तिष्ठतीति शेषः। यद्वा। अरे सेयं का पद्मिनीति विशेषप्रश्नः। यत्र यस्यां हृयं हृदयोद्भवम् अनत्यन्तरं मिथःसंगतं मुकुलयुगमर्थात् पद्मकोशमानं स्तनयुगलमस्तीति शेषः। यस्मिन् सद्यः समुद्भवन् ग्रह आग्रहो ग्रहणं वा यस्यैवंविधो यः पतिर्भर्ता तस्य करजानां नखानां व्यापारः श्लाघनीयः। तस्मादेतत्स्तनयुगं विशेषस्मरणे कलितं सदा चिन्तितं कदा द्रक्ष्यत इति इह स्थले साक्षात् प्रत्यक्षतः प्रेक्ष्य वर्ये श्रेष्ठं शौर्यं च प्रस्तावमेवंविधं न गमय न यापय। स्त्रीकृतमीहितं जानातीति स्त्रीहितज्ञस्त्वं व्रज एनां गृहाण॥

नव्याहारभृदधिकं धन्या मृदुभाषिणी रसज्ञेयम्।

सद्यःफलदनवरतं संभाषणमच्युतास्पदं यस्याः॥ ७४॥

नेति। [वै०—] अधिकं न व्याहारं भाषणं बिभर्तीति मृदुभाषिणी च इयं रसज्ञा जिह्वा धन्या। यस्या जिह्वाया अच्युतास्पदं विष्णुविषयं निरन्तरं संभाषणं सद्यःफलवद्वर्तत इति शेषः॥

[शृ०—] इयं रसज्ञा नव्या नूतना हारभृत् धन्या अधिकं यस्या अच्युतमास्पदं स्थलं यत्र तत्संभाषणं सद्यःफलदं नवरतं यस्मात्॥

कृष्णाभीरवधूरतस्य लभते दास्यङ्गतस्ते सुखं

लब्ध्वात्यन्तिकमङ्गनाशमसकौ विन्देत्कथं देवनम्।

तस्मात्त्वामधुनाशनं स्वभजनं दातुं परं प्रार्थये

नैतच्चेन्मम चेतसि स्फुरति न स्वर्गापवर्गादिकम्॥ ७५॥

कृष्णेति। [वै०—] हे कृष्ण, आभीरवधूरतस्य ते दास्यं गतः सुखं लभते। असकौ असौ पुरुषः आत्यन्तिकमङ्गस्य नाशं लब्ध्वा देवनं त्वच्चरिताकर्णनकीर्तनगाननृत्यादिलक्षणं क्रीडनं कथं विन्देत्। मोक्षे पाषाणवद्भवनमनर्थकमित्यर्थः। तस्मात् परं परमात्मानं मधुनाशनं त्वा त्वां स्वभजनं दातुं प्रार्थये। एतच्चेत्त्वद्भजनं न प्राप्तं मम चेतसि स्वर्गापवर्गादिकमपि न स्फुरति॥

[शृ०—] कृष्णा श्यामा आभीरवधूस्तद्रतस्य तेऽङ्गतः पक्षाच्छरीराद्वा दासी सुखं लभते॥ यद्वा आभीरवधूः दास्या अङ्गतः दासीं कुट्टनीं प्राप्यते रतस्य सुखं लभते। असकौ अङ्गना ते स्त्री आत्यन्तिकं शं सुखं लब्ध्वा पूर्वमिदानीं देवनं क्रीडनं त्वया सह कथं विन्देत्। भोजनमात्रेऽपि यतस्तस्याः संदेहस्तस्मादधुना त्वां अशनं स्वभजनं च दातुं प्रार्थये। चेदिदं मदुक्तं न करोषि तदा मम चेतसि स्वर्गापवर्गादिकं अर्थात्तव न स्फुरति॥

दृष्टा मनो हरति या सायोध्यारामवसतिराकलिता।

तस्मादधिवसतैनां नित्यानन्दो मयानुभूयेत॥ ७६॥

दृष्टेति । [वै०—] स्पष्टम् ॥

[शृ०—] आरामे उपवने वसतिः स्थितिर्यस्याः दृष्टा सती मनो हरति या सा मयायोधि योधिता निष्ठुररतेन तोषिता । तस्मादेनाम् अधिवसता मया नित्यमानन्दः प्रात्यहिकः प्रमोदोऽनुभूयेत ॥

विशिष्टा नवायौवनश्रीस्तदस्यामवाप्या कथं सौमनस्यादिवृद्धिः ।
भवत्वत्र वागर्हणा यादवीया ततो वारिणैवास्तु पूजा तदीया ॥ ७७ ॥

विशीति । [वै०—] वायौ वहति सति वनश्रीर्विशिष्टा न । तत्तस्मादस्यां वनलक्ष्म्यां सौमनसी पुष्पसंबन्धिनी आदिर्वृद्धिः इदानीं वातान्दोलनतया तथा नास्ति । ततो यादवस्य विष्णोः संबन्धिनी वागर्हणा वाचा अर्हणा पूजा भवतु । तदीया पूजा वारिणैव वा अस्तु ॥

[शृ०—] अस्यां विशिष्टा अतिशयिता नवा नूतना यौवनश्रीरस्तीति शेषः । तदस्यां सौमनस्यादेः प्रीत्यादेरभिवृद्धिः कथं प्राप्या । अनया सह सौमनस्ये कृते शत्रवो निन्दां यदि कुर्युरित्यत आह—तत एतत्सौमनस्यसिद्धेरत्र अरिणा शत्रुणा गर्हणा निन्दा वा भवतु या निन्दा दवीया दवाग्निसंबन्धिनी । तद्वत्संतापहेतुत्वादित्यर्थः । अथवा अरिणा तदीया एतत्संबन्धिनी पूजास्तु । वस्तुनि योगे प्रसक्त इति ॥

स्वादितरवैपरीत्यं सद्यो माद्यन्ति हन्तये लब्ध्वा ।
मन्ये त एव धन्या मान्यानन्यायमार्गमुज्झन्तः ॥ ७८ ॥

स्वेति । [वै०—] स्वात् धनात् इतरवैपरीत्यमन्यवैलक्षण्यं लब्ध्वा ये सद्यो माः श्रियो द्यन्ति खण्डयन्ति विभज्यार्थिभ्यः प्रयच्छन्ति । हन्त हर्षे । त एव न्यायमार्गं न उज्झन्तो धन्या मान्या इति मन्ये ॥

[शृ०—] सुः आदिर्यस्य तत्स्वादि तत् 'तर'वैपरीत्यं रत सुरतमित्यर्थः । तत्कृतश्रिलब्ध्वा ये सद्यो माद्यन्ति तुष्टा भवन्ति त एव धन्या इति मन्ये ॥

मनोहरवयोन्विते तनुनिरस्तशीतातपे
कदा सदलकानने भवतु योगसिद्धिस्तव ।
अये शृणु मयोदितं परमयोगिना दुर्लभं
हृदा कलय माधवं सुमनसां यतो वैभवम् ॥ ७९ ॥

मेति । [वै०—] हे सखे, योगसिद्धि चेद्वाञ्छसि तदा सदले कानने निबिडपर्णाच्छादिते वने योगसिद्धिस्तव भवतु । किंभूते वने । मनोहरैर्वयोभिः पक्षिभिरन्विते । तथा तन्वा शरीरेण निरस्तं शीतातपादिकं यत्र । कथं कदा । योगस्ते सिध्येद् । अये मित्र, मयोदितमुक्तं शृणु परमयोगिनापि दुर्लभं दुष्प्रापं यत्तदुपदिशामि । माधवं लक्ष्मीकान्तमेव हृदा कलय यतो विष्णोः सुमनसां तदेकचित्तानां वैभवं भवति ॥

[शृ०—] मनोहरेण वयसा तारुण्येनान्विते । तन्वा शरीरेण निरस्तो शीतातपौ यया तथाविधे । तरुणीतनुः शीतकाले उष्णा, उष्णकाले शीतला । यतः सन्तोऽलकाभूर्भंकु-

न्तला यस्मिन् एवंविधमाननं यस्याः हे युवते, तव योगसिद्धिस्त्वत्संसर्गलाभः कदा भवतु। अये मयोदितमुक्तं शृणु परमुत्कृष्टम् अयोगिना विरहिणा दुष्प्रापं माधवं वैशाखं वसन्तं पश्यतः सुमनसां पुष्पाणां वैभवं समृद्धिस्तस्मान्मामङ्गीकुरु ॥

नित्यं निरञ्जनकथं साक्षिज्योतिः स्वतः प्रकाशसुखम् ।

गमयति यतिमनुगमयति रमयति शमयति च सपदि संतापम् ॥८०॥

नित्यमिति। [वै०—] नित्यमविनाशि निरञ्जनकथं निर्लेपवार्तं साक्षिरूपं ज्योतिःस्वरूपं ब्रह्म विष्णुलक्षणं यतिं संन्यासिनं स्वतःप्रकाशं यत्सुखं चिदानन्दरूपं तद्गमयति अनुगमयति रमयति सपदि सांसारिकं संतापं शमयतीति ॥

[शृ०—] सा विधवा, नित्यं निर्गता अञ्जनकथा कज्जलकथा यस्मात् स्वतःप्रकाशेन स्वाभाविकेनैव कान्तिविशेषेण सुखं सुखकारि अक्षिज्योतिर्नेत्रप्रभां गमयति प्रापयति यतिमनुगमयति अनुगतं करोति रमयति सपदि संतापं च शमयति ॥

चिरप्रेमस्थेमस्थगितहृदये पद्मनयने

समानारम्भेऽस्मिन्भवति न मयागोपि किमपि ।

उदस्ताक्षी रागं नयसि दृशमेनां च यदि मां

हृदा वाचा श्रीमत्यचलनमिदं तत्त्वमुदितम् ॥ ८१ ॥

चिरेति [वै०—] पद्मनयने कृष्णे चिरं प्रेम्णः स्थित्या स्थगितं हृदयस्यैवंविध अये मित्र, समान आरम्भ उद्यमो यस्यैवंविधे भवति अस्मिन् त्वयि समानशीले विष्णुभक्ते मया किमपि न अगोपि गुप्तम्। त्वं रागमनुरागं विषयेषु उदस्ताक्षीरुत्सृष्टवान्। दृशं दृष्टिं नयसि प्रापयसि। आन्तरं रागं दृष्टौ न्यस्यसि। यदि एनां सरागां दृष्टिं मां नयसि प्रापयसि अनुरक्तो मां पश्यसि तदा हृदा वाचा श्रीमति वासुदेवे अचलनमिदमेव तत्त्वमुदितमुक्तम् ॥

[शृ०—] चिरप्रेमस्थित्या छादितहृदये पद्माक्षि हे भवति, अस्मिन्नेवंविधे मानसहिते आरम्भे किमपि आगोऽपराधो न यदि उदस्ते अक्षिणी यस्याः एवंविधा त्वं दृशं रागं नयसि एनां दृशं रक्तां मां नयसि तदा हृदा वाचा श्रीमत्यां त्वयि अचलमिदं मया तत्त्वमुदितमुक्तम् ॥

स्तम्भितमनोभवमदो धन्यो भजते सनर्मदारोधः ।

नित्यं तपस्यतो निशि किं नानन्दाद्वयानुभूतिः स्यात् ॥ ८२ ॥

स्तम्भितेति। [वै०—] स्तम्भिता मनोभवाश्चित्तजा मदा विद्यादिजन्या येनैवंविधो धन्यः स नर्मदाया रोधस्तटं भजते। निशि नित्यं तपस्यतोऽस्य किमानन्दाद्वयानुभूतिर्न स्यात् ॥

[शृ०—] स्तम्भितो मनोभवमदो वीर्यं येन सनर्मदारो नर्मसहितस्त्रीको धन्यः पुरुषोऽयो भजते। अतस्तपसि माघे आनन्दाद्वयस्यानुभूतिः किं न स्यात् ॥

सप्तसामनुत ईश्वरो भवान्कि ददाति न वृथा विलम्बते ।
तत्त्वदीयभजनं हिताय नः स्वाव्ययत्वमिह न प्रकाशय ॥ ८३ ॥

सप्तेति । [वै०—] सप्तभिः सामभिः स्तुतो भवान् ईश्वरो नियन्ता किं स्वभजनं न ददाति वृथैव विलम्बते तत्त्वदीयभजनं नोऽस्मभ्यं हिताय । इह स्वाव्ययत्वं न प्रकाशय अव्ययत्वं शब्दच्छलात्कार्पण्यं न प्रकाशय । भजनं देहीति ॥

[शृ०—] कामपि द्रव्यदानेनाभिलष्यन्तं प्रति वचनम्—सा सप्त मनुते । भवान् ईश्वरो धनाढ्यः । अतः सप्तापि न ददाति किं वृथा विलम्बते । किं ततस्तवेत्याह—तस्यास्त्वदीयभजनं तत्त्वदीयभजनं नो हिताय इह स्वाव्ययत्वं कार्पण्यं न प्रकटय ॥

रम्भास्फुटोपमानामुत्क्षेपस्पष्टमूलवरदोषाम् ।
करजानुशीलितानां हरिणाक्षीणां स्मराद्यबाणभुजाम् ॥ ८४ ॥

रम्भेति । [वै०—] हे सखे, अद्य त्वं बाणस्य बाणासुरस्य भुजां स्मर । जात्यैकवचनम् । अवशिष्टबाहुद्वयातिरिक्तबाहून्स्मरेत्यर्थः । कीदृशीम् । रम्भायाः कदल्याः स्फुटा उपमा यस्यास्ताम् । पुनः । उत्क्षेपे दर्पणोर्ध्वक्षेपे स्पष्टं मूलं वरो महेश्वर एव दोषो यस्यास्ताम् । पुनः । करश्च जानु च तच्छीलि तानं दीर्घता यस्याः । पुनः । हरिणा कृष्णेन क्षीणाम् ॥

[शृ०—] हे सखे, हरिणाक्षीणां मृगदृशां स्मर । कीदृशीनाम् । आद्यो बाणोऽर्थात्स्मरस्य तं भुञ्जत इति आद्यबाणभुजस्तासाम् । रम्भाया अप्सरोविशेषस्य स्फुटोपमासु । पुनः । उत्क्षेपे स्पष्टमूला वराः श्रेष्ठा दोषो बाहवो यासाम । करजैर्नखैरनुशीलितानाम् ॥

नवोन्नतपयोधरस्फुटतराम्बराभ्यन्तर-
श्रिया हृदयहारितां वहति नीलिमोत्कर्षतः ।
स्मराहितगलप्रभातिशयशालिनि श्रीधरे
मनो मम किरीटिनः कपटमानवेश्यालके ॥ ८५ ॥

नवेति । [वै०—] मम मनः किरीटिनोऽर्जुनस्य श्यालके कृष्णे वर्तते । किंभूते । कपटमानवे स्मरस्याहितो भवस्तस्य या गलप्रभा तच्छालिनि । श्रीधरे । नीलिम्न उत्कर्षतोऽतिशयात् नवा उन्नता ये पयोधरा मेघास्तैः स्फुटतरं यदम्बरस्याभ्यन्तरं तस्य श्रिया हृदयहारितां मनोहरत्वं वहति दधाने ॥

[शृ०—] किरीटिनः किरीटयुक्तस्य मम मुकुटवर्धनस्यापि मनः कपटमाना या वेश्या तस्या अलके चूर्णकुन्तले वर्तते । किंभूते । नवयोरुन्नतयोः पयोधरयोः स्फुटतरं यदम्बरं सूक्ष्मं वस्त्रं तस्याभ्यन्तरे या श्रीस्तया नीलिमोत्कर्षतो हृदयहारितां वहति । स्मरेण कामेन आहितो यो गले प्रभातिशयस्तच्छालिनि ततः श्रीधरे शोभां वहति ॥

कलयसि वयस्यकस्मात्त्वं रुचिरम्भारतीशास्त्रम् ।
अत्रोक्तिप्रत्युक्तौ कलय मिथो भूरिशस्त्रपातरणम् ॥ ८६ ॥

कलेति । [वै०—] हे वयस्य, त्वं भारती सरस्वत्येव । कस्मात् । शास्त्रं रुचिरं मीमांसादिकं कलयसि । अत्र शास्त्रे मिथः परस्परम् उक्तिप्रत्युक्तौ भूरिः शस्त्रपातो यत्रैवंविधं रणं युद्धं कलय जानीहि ॥

[शृ०—] वयसि तारुण्येऽकस्माद् रुचौ कान्तौ लावण्ये रम्भा रम्भेव । रतीशस्य कामस्यास्त्रं कलयसि तद्गोचरीभवसि । अत्र मिथः एकान्ते मम उक्तेः प्रत्युक्तावुत्तरवचने भूरिशः त्रपाया लज्जायास्तरणं विजयं कलय लज्जां विजित्योत्तरं देहि ॥

नासंन्यासितया मयानवरतानन्दस्तथैवाप्यते
तन्मे नाद्यवयस्य निश्चलतया चेतोन्यदाकाङ्क्षति ।
तामासाद्य सदा हिमर्तुमनसोनेहा वृथा यास्यति
श्रेयः स्यादथवेत एव कलितादाकृष्टपद्माकरात् ॥ ८७ ॥

नेति । [वै०—] हे वयस्य, असंन्यासितया तथैव यथा पूर्वं गार्हस्थ्येनैव अनवरतानन्दो न प्राप्यते तत्तस्मान्मे चेतो निश्चलतया अन्यन्नाकाङ्क्षति । तामसंन्यासितामासाद्य हि निश्चयेन मर्तुमनसो मर्तुकामस्य सांसारिकदुःखार्माहिष्णोरनेहा समयो वृथा यास्यति । अपुरुषार्थत्वेनैव । अथवा इत एव असंन्यासितायाः एव आकृष्टः पद्माया लक्ष्म्याः करो येन तस्मात्कृष्णात्कलिताच्चिन्तितात् श्रेयो मोक्षलक्षणं संपत्स्यते ॥

[शृ०—] मया संन्यासितया तत्समानेन ब्रह्मचर्येण तथैवाद्यमं विनापि नवरतजन्यो य आनन्दः स न प्राप्यते । तत्तस्मान्मे चेतो निश्चलतया नवरतैकनिष्ठतया अन्यत् किमप्याद्यवयसि नवयौवने नाकाङ्क्षति । अथवा तां स्त्रियं कथंचिदासाद्य लब्ध्वा सदा सर्वदा हिमर्तौ शीतकाले मनो यस्य तत्र दत्तचित्तस्य ईहा स्पृहा न वृथा यास्यति । आकृष्टः पद्मानामाकरो येन तस्मात्कलिताच्चिन्तिताद्धिमर्तोरेव श्रेयः स्यात् । संभोगपर्याप्तरात्रित्वादिति भावः ॥

सहजौ यौवनवृत्ती सार्वदिकासक्तिशालिनौ हृद्यौ ।
हृदि तौ निरुध्य दधतः कथमात्मभुवोऽपि संभवति भीतिः ॥ ८८ ॥

सहेति । [वै०—] देवकीगर्भस्यैवाकर्षणेन संकर्षणोत्पत्तेः सहाजावेकोदरौ यौ बलकृष्णौ एकपरभागजन्यत्वेन सहजौ रामलक्ष्मणौ वा वनवृत्ती वृन्दावनदण्डकारण्यवासिनौ । सार्वदिकी यासक्तिरेकत्र वासस्तच्छालिनौ । हृद्यौ मनोहरौ । तौ हृदि निरुध्य दधत आत्मभुवो ब्रह्मणोऽपि कथं भीतिः संभवति ॥

[शृ०—] यौ हृद्यौ हृदयंगमौ । सहजौ कुलप्रसूतौ । यौवने वृत्तिर्ययोः । सार्वः

दिक्की निरन्तरा यासक्तिस्तच्छालिनौ तौ स्तनौ हृदि निरुध्य दधतः पुंसस्य आत्म-भुवोऽपि कामादपि भीः कथं संभवतीति ॥

विषयाद्यविषक्तमानसानां बहुशोभाविरहोऽपि नः सुखाय ।
परिहृत्य तदन्यदत्र कृत्यं कृतरामोरुपदस्मृतिः कृती स्यात् ॥ ८९ ॥

विषेति । [वै०—] विषयादावविषक्तमनासक्तं मानसं येषामेवंविधानां नो बह्वी या शोभा तद्विरहोऽपि सुखायैव । तत्तस्मादन्यत्कृत्यं परिहृत्य कृतं 'राम' इत्युरुणः श्रेष्ठस्य पदस्य नाम्नः स्मृतिर्येन स कृती स्यात् ॥

[शृ०—] विषयेषु आद्यविषक्तं मानसं येषामीदृशां नो बहुशः भावि रहोऽपि एकान्तोऽपि सुखाय । तदन्यत्कृत्यं परिहृत्य कृता रामाया ऊरुपदस्य स्मृतिर्येन एवंविधः सुखी स्यात् ॥

नव्याप्टताकुचेष्टा हरिणाक्षीणामुरस्थितिः श्लाघ्या ।
यस्याः श्रुतिस्मृतिभृतो बिभ्रति रोमाञ्चमुत्तमाः पुरुषाः ॥ ९० ॥

नेति । [वै०—] नव्या नूतना पृताकोः सर्पस्य कालियस्य चेष्टा मुरस्य दैत्यस्य स्थितिश्च श्लाघ्या यतो हरिणा कृष्णेन क्षीणा । यस्या हरिणाक्षीणायाः श्रुतिस्मृतिभृतः श्रवणस्मरणकृत उत्तमाः पुरुषा रोमाञ्चं बिभ्रति ॥

[शृ०—] हरिणाक्षीणां उरःस्थितिर्वक्षःस्थितिः श्लाघ्या । कोदृशी । न व्यापृता मर्दनादिव्यापारमप्राप्ता अभुक्ता । कुचाभ्यामिष्टा । अतः स्तुत्या । यस्याः श्रुतिस्मृतिभृत उत्तमा रसिका रोमाञ्चं बिभ्रति ॥

विषमेषुभवेषुवेदनामनुभूयाप्यकृतप्रतिक्रियः ।
पुरुषो लभतां कथं सुखं यदि सामान्यतनुः करोतु किम् ॥ ९१ ॥

विषेति । [वै०—] विषमेषु उच्चनीचेषु नानाविधेषु भवेषु वेदना दुःखमनुभूयापि अकृतप्रतिक्रियः पुमान् कथं सुखं लभताम् । यदि पुनः सामान्यतनुः सामान्यशरीर एव पश्वादिरेव तदा किं करोतु । अविवेकित्वात् ॥

[शृ०—] विषमेषुः कामस्तद्भवा या इषुवेदना तामनुभूयापि अकृततत्प्रतीकारः पुरुषः कथं सुखं लभताम् । यदि सा स्त्री अमानि प्रतीकारत्वेन ज्ञाता । तदा अतनुः कामः किं करोतु ॥

करकलितदारनरकेशेरत इह ये सजन्ति भवसिन्धौ ।
रसिकास्त एव मान्या मन्यन्तां धन्यमात्मानम् ॥ ९२ ॥

करेति । [वै०—] करकलितो दारस्भो नरको यत्र तत्र भवसिन्धौ शेरते स्वपन्ति सज-न्त्यासक्ताश्च भवन्ति तत्र रसिका मान्या आत्मानं धन्यं मन्यन्ताम् इति कामिन्यामुपहासः ॥

[शृ०—] इह भवसिन्धौ ये करकलित हस्तेन गृहीता दाराणां नरस्य च केशा

यस्मिन्नेवंविधे रते केशाकेशिमदनयुद्धे सजन्त्यासक्ता भवन्ति। त एव रसिका मान्या धन्यमात्मानं मन्यन्तां नान्ये॥

विद्येते द्वे सर्वतः श्लाघनीये याभ्यां कष्टं तत्र नात्रापि लोके।
तस्मादेने वर्तितात्मश्रुतिस्मृत्याह्वाने न त्यक्तुमीशे वयस्य॥ ९३॥

विद्येत इति। [वै०—] ते द्वे सर्वतः श्लाघनीये विद्ये। याभ्यामत्र तत्रापि लोके इह परत्र च न कष्टम्। हे वयस्य तस्मात् एने, वर्तितं आत्मनः श्रुतिः स्मृतिः इत्याह्वानं याभ्यां ते न त्यक्तुमीशे नोत्सहे॥

[शृ०—] ये द्वे सर्वतः श्लाघनीये स्तुत्ये विद्येते स्तः। याभ्यां कष्टं न। अत्र तत्र वा। अत्र वा तयोरागमनमस्तु। तत्र वा मम गमनम्। उभयथापि न कष्टं लोके। यद्वा तत्र लोके पितृसंबन्धिजने याभ्यां कष्टं यथा स्यात्तथा न। अत्रापि न लज्जितमतिधृष्टत्वात्। तस्माद्वर्तितानि आत्मनः श्रुतिः श्रवणं स्मृतिः स्मरणं आह्वानं नाम च एतानि याभ्यां ते एने त्यक्तुं न प्रभवामि। ताभ्यामेव स्वश्रवणादीनि दूत्यादिद्वारा ख्यापितानि। अतः कष्टमपि लोके न। तस्मादेने द्वे अपि न त्यक्ष्यामि॥

न यथारुचिरम्भारतमाकर्णितमेवमन्यदिह किंचित्।
तदिदं हृदि चिन्तयतां यतमानानां कदाचिदपि सिध्येत्॥ ९४॥

नेति। [वै०—] आकर्णितं श्रुतं भारतं यथा रुचिरम् एवम् अन्यद् इह संसारे न। तस्मादिदं हृदि चिन्तयतां यतमानानां यतो मानोऽहंकारो यैस्तेषां कदाचिदपि सिध्येत्॥

[शृ०—] यथारुचि रम्भाया अप्सरोविशेषस्येव रतं समाकर्णितम्। एवमिहान्यत् किंचित्तस्मादिदं हृदि चिन्तयतां यत्नं कुर्वतां कदाचिदपि सिध्येत्॥

मुक्तात्मरोचिरतिदीप्रगुणप्रपञ्चं
साक्षिप्रमाणकमनावरणं कुतश्चित्।
हृष्यन्महाशयपरिग्रहयोग्यमूर्ति
तद्वस्तु सद्वयमिदं हृदि भावयामः॥ ९५॥

मुक्तेति। [वै०—] मुक्तं नित्यमुक्तस्वभावं आत्मरोचि स्वप्रकाशरूपं अत्यन्तं दीप्रः प्रकाशमानो गुणानां सत्त्वादीनां प्रपञ्चो यत्र त्रिगुणात्ममायाप्रपञ्चोपादानं साक्षि प्रमाणं यत्र तत्साक्षिप्रमाणकं स्वप्रकाशचैतन्यमेव यत्र प्रमाणं कुतश्चिदनावरणं मायावरणरहितं हृष्यन्तो ये महाशया भक्ताः तत्परिग्रहयोग्या मूर्तिर्यस्य तदिदं सद्वस्तु स्वरूपतः सत् परमार्थरूपं अद्य वयं हृदि भावयामः॥

[शृ०—] इह हृदि अस्या वक्षसि सद्वयं द्वितयसहितं तद्वस्तु स्तनरूपं भावयामः। कीदृशं तत्। मुक्तानां मौक्तिकानामात्मनश्च रोचिषा अतिदीप्रो गुणप्रपञ्चो यत्र। अक्षिप्रमाणं तत्सहितं साक्षिप्रमाणकम्। स्वार्थे कः। साक्षादेवाक्षिभ्यां दृश्यम्। यतः कुचिदना-

वरणं कञ्चुकाञ्चलावरणशून्यम् हृष्यन् रोमाञ्चमञ्चन् आनन्दजडो भवन् यो महाश् शयो हस्तस्तत्परिग्रहयोग्या मूर्तिर्यस्य ॥

आलिङ्गदाप्य गोपीं तद्बाहुं सह रिरंसयाधाय ।
श्रुत्वेति निश्चिनोम्यहमङ्गिषु दुर्वारतामनङ्गस्य ॥ ९६ ॥

आलीति। [वै०—] स हरिर्गोपीमाप्य तद्बाहुमंसे स्कन्धे आधाय आलिङ्गत् इति श्रुत्वा पुराणादौ अङ्गिषु देहिषु अनङ्गस्य दुर्वारतामहं निश्चिनोमि ॥

[शृ०—] कश्चन कामपि गोपीमाप्य रिरंसया सह तद्बाहुमाधायालिङ्गत् अतोऽहमङ्गिषु स्मरस्य दुर्वारतां निश्चिनोमि ॥

अनुभूतभवव्यवस्थितिर्जनता का नरताभिलाषिणी ।
तदवैमि सुखेन संसृतौ कलितानङ्गतयैव निस्तृतिः ॥ ९७ ॥

अन्विति। [वै०—] अनुभूता भवस्य संसारस्य व्यवस्था यया सा का जनता नरताभिलाषिणी। तर्हि कलिता या अनङ्गता अशरीरता तत एव चिराय निस्तार इत्यवैमि॥

[शृ०—] अनुभूतसंसारव्यवस्था का जनता रताभिलाषिणी न यतस्ततो हेतोः संसृतौ कलितः स्वीकृतोऽनङ्गो येन स तथा तस्य भावस्तत्ता तयैव चिराय निस्तारो नान्यथेति ॥

असकृन्ननेतिसावधिनिषेधबोधिश्रुतिर्मया कलिता ।
गमयति परमनवरतं या तमखण्डार्थरूपमानन्दम् ॥ ९८ ॥

असेति। [वै०—] असकृत् 'इदमिदं न' इति सावधिनिषेधस्य बोधिका श्रुतिर्मया कलिता श्रुता। या श्रुतिः परं ब्रह्मलक्षणमुत्कृष्टं अनवरतं अखण्डार्थरूपमानन्दं गमयति॥

[शृ०—] असकृदनेकदा न न इति अवधिनिषेधबोधिनी श्रुतिर्वाग्यस्याः सा मया कलिता रमिता। या परमं नवरतं तमखण्डमर्थरूपं पुरुषार्थरूपमानन्दं गमयति प्रापयति। सा स्वयमेवागतेत्यर्थः ॥

अहह सहजमोहा देहगेहप्रपञ्चे
नवरतमतिमग्ना कामिनीविग्रहाप्तिः ।
तदहमिह विहर्तुं संततामोदमुग्धा
स्वहितमहितकृत्यं हन्त नान्तः स्मरामि ॥ ९९ ॥

अहहेति। [वै०—] देहस्य गेहस्य च प्रपञ्चे मार्जनानुलेपनादिरूपे अनवरतं निरन्तरमतिमग्ना कामिनीविग्रहस्य स्त्रीशरीरस्याप्तिः प्राप्तिस्तस्मादिह स्त्रीशरीरप्राप्तौ विहर्तुं क्रीडितुं संततमामोदे सुखे मुग्धा। वस्तुगत्या सुखाभावात्। हन्त खेदे स्वहितेन स्वस्यातिशयसुखहेतुना महितं पूजितं कृत्यं कर्म विष्णुपूजनादिकम्। अथवा सुष्ठु अहितमः सर्पश्रेष्ठः शेषस्तस्य हितो विष्णुस्तत्कृत्यं तच्चरितमन्तर्न स्मरामीति ॥

[शृ०—]कामिना योऽयं नीविर्वसनग्रन्थेर्ग्रहो ग्रहणं तदासिस्तत्प्राप्तिः सा गेहस्य देहस्य च प्रपञ्चे सहजो मोहो यस्या एवंविधास्ति। अहहेति हर्षे । नवरते या मतिस्तत्र मग्ना च। तत्तो हेतोरहमिह नीविग्रहासौ विहर्तुं क्रोडितु संततमामोदो येनानन्देन परिमलेन वा मुग्धा मोहयुक्ता सुन्दरी वा स्वहितमहितानां शत्रूणां च कृत्यं अन्तः किमपि न स्मरामि हिताहितविचारो मम नास्ति ॥

परपुरुषभजनमेकं त्रिजगति सारं वदन्ति धर्मविदः।
यस्मादानन्दमयी मद्योमोक्षानुबन्धिनीविरतिः ॥ १०० ॥

परेति। [वै०—] धर्मविदः परपुरुषस्य कृष्णस्य भजनमेकं त्रिजगति सारं वदन्ति। यस्मात्सद्यो मोक्षानुगता विरतिर्वैराग्यं भवति ॥

[शृ०—] कामधर्मविदः परपुरुषस्य भजनमेकं सारं त्रिजगतीति वदन्ति। यस्माज्जारभजनात्सद्यः मोक्षानुबन्धिनीविः मोचनानुबन्धसहिता नीविर्वसनग्रन्थिर्यत्रैवंविधा रतिर्भवति ॥

निरन्तरगुणोल्लसद्रुचिरकाम्यमुक्ताफल-
प्रपञ्चविषयस्पृहोपगतलौकिकानन्दभूः।
रतीशसमराधिकारमणमात्रलक्ष्यास्थितिः
परात्मरतधीरसावतिकृशोदरीदृश्यते ॥ १०१ ॥

निरेति। [वै०—] परे आत्मनि ब्रह्मणि रता धीर्यस्यासावतिकृशः पुरुषो दरीदृश्यति भूयो भूयो दृश्यते। कीदृशः। निरन्तरं संततं गुणेषु साधुसंमतेषु उल्लसन्तो रुचिः प्रीतिर्यस्य। अकाम्या अनाशास्या अत एव मुक्ता त्यक्ता निष्फलप्रपञ्चविषया स्पृहा येन। अपगतालौकिकानन्दभुवः प्रमदादयो यस्मात्। रतीशसमः कन्दर्पकोटिलावण्यो यो राधिकारमणस्तन्मात्रे लक्ष्ये स्थितिर्यस्य ॥

[शृ०—] परेण पुरुषेण आत्मनो रते धीर्यस्या असौ स्त्री अतिकृशोदरी दृश्यते। निरन्तराणि घनानि गुणे सूत्रे उल्लसन्ति रुचिराणि काम्यानि आशास्यानि यानि मुक्ताफलानि तत्प्रपञ्चस्तदाभरणाधिक्यं तद्विषया या स्पृहा तयोपगता लौकिकानन्दभूमिर्मर्यादा यया। रतीशस्य समरे कामयुद्धे अधिका। रमणश्च माता च श्वश्रूस्ताभ्यामलक्ष्या स्थितिर्यस्याः सा अतिचतुरा कथमपि निरोद्धुं न शक्यते ॥

ममत्वरयतः समागमरहस्यमान्विष्यतः
स्फुटीभवति नान्वितश्रुति तदात्मतत्त्वं क्वचित्।
विचित्रमधुनामनागियमनादिमाया न मा
समुत्सुकमनारतं कलयितुं सुखं मुञ्चति ॥ १०२ ॥

ममेति। [वै०—] ममत्वस्य ममताया रयतो वेगात् तत्समिद्धमात्मतत्त्वं श्रीमत्प्रोक्त-

लक्षणम् अन्विताः समन्विताः श्रुतयो यत्र। 'तत्तु समन्वयात्' इति सूत्रोक्तेः। तत्त्वमस्यादिवाक्यविषयम् । समा ये आगमा वेदान्तास्तेषां रहस्यम् । समं यदागमरहस्यं वा । तदन्विष्यतो मम न स्फुटीभवति । विचित्रमाश्चर्यम् । एवमनिशं विचारेऽपि न तत्त्वबोधः । यतः अधुनेदानोमियमनादिर्माया अनारतं सुखं नित्यानन्दरूपं ब्रह्म कलयितुं लब्धुं समुत्सुकं मा मां मनागपि न मुञ्चति ॥

[शृ०—] त्वरयतस्त्वरां कुर्वतः समागमाय रहस्यं संकेतस्थलं अन्विष्यतो मम तस्या आत्मनो हृदयस्य तत्त्वं यदप्यन्विता श्रुतिः श्रवणं यत्र दूतीद्वारकवचःश्रवणेन यद्यपि ज्ञातप्रायं तथापि न स्फुटीभवति विचित्रेण मधुना वसन्तेन अमनाक् अधिकम् अनादिमा आदिमा न प्रौढा यद्यपि प्रथमा तथापि वसन्तकुसुमानिलादिवैचित्र्यवशात्प्रौढेव या रतं कलयितुं सुखं समुत्सुकमना मा मां न मुञ्चति ॥

वर्णालंकृतिकाम्या साकाङ्क्षायोग्यतासत्तिः ।
एषा कलितरसज्ञा ननु बहुशोभारतीहितं कुर्यात् ॥ १०३ ॥

वर्णेति। [वै०—] वर्णैर्मधुरैरलंकृतिभिरुपमादिभिः काम्या। आकाङ्क्षायोग्यतासत्तिभिः पदधर्मैः सहिता । कलिता निवासत्वेन रसज्ञा जिह्वा यया । यद्वा कलितास्तोषिता रसज्ञा रसिका यया । यद्वा कलितो रसज्ञः परमात्मा कृष्णो यया । एवंविधा एषा भारती ननु निश्चयेन हितमभीष्टं कृष्णकीर्तनादिकं कुर्यात् ॥

[शृ०—] वर्णेन शरीरकान्त्या अलंकृत्यालंकारेण काम्या कमनीया । आकाङ्क्षाभिलाषः, योग्यता संभोगयोग्यता, आसत्तिः संनिधिः परिशीलनं वा, तत्सहिता । कलितो रसज्ञो रसिको यया । बह्वी शोभा यस्याः सैषा स्त्री ननु निश्चयेन रतिरूपमीहितमभीष्टं कुर्यात् ॥

वृथाश्रमपरिग्रहो यदि वयस्यशून्यो धनैः
सुखेन खलु वर्तनं तव सदैव दास्यन्तिके ।
इदं मम मतं सखे सकलगोपदाराभिकं
विनोदय मनो मनोभवकृताधिभाराधिकम् ॥ १०४ ॥

वृथेति। [वै०—] हे वयस्य, यदि त्वं धनैः शून्यो निर्धनस्तदा तवाश्रमपरिग्रहो गार्हस्थ्यस्वीकारो वृथैव सदैव सुखेनानायासेन वर्तनं तव जीवनं के दास्यन्ति। तस्मात् हे सखे, ममेदं मतं संमतम्—मनोभवकृतेनाधिभारेण अधिकं मनः सकलः कलया बलभद्रेण सहितः समग्रो वा सर्वमयो वा गोपस्त्रीकामुकः कृष्णो यत्रैवंविधं विनोदय ॥

[शृ०—] यदि वयसि तारुण्ये त्वं धनैरशून्यः सहितः तदा वृथाश्रमः परिग्रहो वधूर्यस्यैवंविधस्त्वम् । धनसमृद्धावपि तव स्त्रियाः श्रमो गृहकृत्यनिर्वाहेण वृथैव । कुत इत्यत आह—तव सदैव नैरन्तर्येण दास्या अन्तिके निकटे सुखेन रात्रिदिवा वर्तनं

स्थितिर्यतः। हे सखे, ममेदं मतं शृण्विति शेषः। सर्वगोपवधूकामुकं मनोभवकृताधिभाराधिकं मनो विनोदय विश्रमय॥

वेत्ति सारतयात्मानं परं चेन्न कदाचन।
संसाररसमग्नत्वं तत्कथं विजहात्वसौ॥ १०५॥

वेत्तीति। [वं०—] सारतया सारत्वेन परमात्मानं चेन्न वेत्ति तर्हि असौ पुमान् संसाररसमग्नत्वं कथं विजहातु। परमात्मनः सारत्वेन ज्ञानमन्तरेण संसारमज्जनान्न निस्तारः॥

[शृ०—] सा स्त्री रते रतमग्ने परमन्यम् आत्मानमपि च चेन्न वेत्ति कदाचित्तदासौ स्त्री एतच्छीलो पुरुषो वा संसारसौख्यमग्नतां कथं त्यजतु॥

विधत्ते सोत्कम्पं स्फुटयति सरोमाञ्चमुदितं
कथं मज्जन्माघे पततु निरयप्रापणपथे।
यदि स्यान्मासेऽस्मिन्नसितसितकल्लोलघटना-
चला दृष्टिस्तत्कः सुकृतमिदमीयं गणयिता॥ १०६॥

विधत्त इति। [वं०—] स्फुटा व्यक्ता यतयो यत्रैवंविधमिदं सरो मां सोत्कम्पमुद्गतकम्पसहितं मुदितं संतुष्टं च करोति। अत्र माघे मज्जन् पुरुषः कथं निरयप्रापणपथे नरकगमनमार्गे पततु। यद्यस्मिन्मासे माघे दृष्टिः असिताः सिताश्च ये कल्लोला यमुनाया गङ्गायाश्च तेषां घटना परस्परसंबन्धस्तत्राचला निश्चला स्यात् तर्हि क इदमीयं सुकृतं पुण्यं गणयिता। को ब्रह्मा वा॥

[शृ०—] सा स्त्री उत्कम्पमुद्गतं कम्पं सात्त्विकभावं शीतजन्यकम्पगोपितं विधत्ते। स पुरुष उदितं रोमाञ्चं स्फुटयति स्फुटं करोति। सात्त्विकभावमपि शीतजन्यत्वेन प्रकटयति। माघस्नानं कुर्वन एवंविधा चेष्टा कथं [न] नरकाय स्यादित्यत आह—माघे मज्जन् स्नानं कुर्वन् कथं निरयप्रापणपथे पततु अस्मिन्मासे यदि दृष्टिः असिताः सिताश्च ये कल्लोलास्तद्घटना तद्व्यतिकररूपा अचला अस्मिन्पुरुषे स्थिरा स्यात्तदा इदमीयं सुकृतं को गणयिता॥

अतिचारुचन्द्ररोचिः कुर्वन् कुसुमेषुकेलिकेतनताम्।
सुरभिः कदानुयास्यति समुकुलरुचिरस्तनीहारः॥ १०७॥

अतीति। [वं०—] अतिचारु चन्द्ररोचिश्चन्द्रिका यत्र। कुसुमेषु पुष्पेषु केलिकेतनतां क्रीडावासत्वं कुर्वन्। सुरभिर्वसन्तः कदा यास्यति। नु वितर्के। चित्तविक्षेपहेतुत्वात्पञ्चरतो न निस्तार इति। कीदृशः। समुकुलरुचिः कमलादिकोरककान्तियुक्तः। अस्तनीहारो निरस्तहिमः॥

[शृ०—] सुरभिर्वसन्तः कदा अनुयास्यति अनुगतो भविष्यति। कामिन इति शेषः। अतिचारुचन्द्ररोचिः। कुसुमेषुकेलेः कामक्रीडायाः केतनतां स्थानरूपं पताकात्वं वा कुर्वन्। मुकुलसमस्तन्या हारेण सह वर्तते इति तथा॥

हेया कामधुरा दुराग्रहवता संसारचक्रभ्रमे
वार्ताभिः प्रसभं प्रवर्तयति या मोहान्धकूपे बुधान् ।
नाकोपाधिकृतिं समीक्ष्य न ततः कुर्याद्विरक्तिं कथं
तत्को नाम निकाममत्र पुरुषं दध्यादनादिं हृदि ॥ १०८ ॥

हेयेति । [वै०—] संसारचक्रभ्रमे संसारे चक्रे यो भ्रमस्तत्र दुराग्रहवता पुंसा कामधुरा कंदर्पभारः हेया त्याज्या । या प्रसभं बलान्मोहान्धकूपे बुधान्पण्डितानपि वार्ताभिः स्वकथाभिः प्रवर्तयति । ना पुरुषः अकोपाधिकृतिं अकस्य पापस्य दुःखस्य वा य उपाधिः प्रयोजकस्तत्कृतिं तत्करणं समीक्ष्य ततः पापसाधनात्कथं विरक्तिं न कुर्यात् । तत्तस्मात्को नाम पुमानत्र कामधुरायां निकामं अनादिपुरुषं विष्णुं हृदि कुर्यात् । यद्वा कोपजन्यो य आधिर्मनःपीडा तत्कृतिं समीक्ष्य ततः कोपाधिकृतेर्विरक्तिं न कुर्यात् । तत्तस्मात्कामक्रोधावुभावपि दुःखहेतू ज्ञात्वा निकामं पुरुषं च शब्दं अनादिमादिवर्णरहितं कामं पुरुषं च हृदि को नाम दध्यादिति ॥

[शृ०—] मधुरा मनोहरा का स्त्री संसारचक्रे भ्रमे दुराग्रहवता पुंसा हेया परिहार्या । या वार्ताभिर्नानाविधाभिश्चातुर्यमर्यादाभिः प्रसभं हठात् बुधान्विदुषोऽपि मोहान्धकूपे प्रवर्तयति । तत्तस्मात्तस्याः सुन्दर्याः सकाशान्नाकस्य स्वर्गस्योपाधिः प्रयोजकस्तत्कृतिं समीक्ष्य को नाम कथं विरक्तिं विशेषेण रक्तिं रागं न कुर्यात् । अत्र निकामं निर्गतः कामो यस्मादेवंविधं अनादिं पुरुषं महेशं को नाम कथं हृदि दध्यात् ॥

भवार्णवस्योत्तरणे सरोजदृक्चकास्ति नौकेयमहो पुरःस्थिता ।
सखे सखेदोऽहमनन्यजभ्रमादमूं विहातुं न ततः समुत्सहे ॥ १०९ ॥

भवेति । [वै०—] भवार्णवस्य संसारसिन्धोरुत्तरणे सरोजदृक् पुण्डरीकाक्ष एव इयं पुरःस्थिता नौका चकास्ति प्रकाशते । ततोऽनन्यजः स्वाभाविको यो भ्रमः अहं ममेति देहगेहादौ ततः सखेदः क्लेशवानहं हे सखे, अमुं कृष्णनावं विहातुं नोत्सहे ॥

[शृ०—] इयं पद्माक्षी आवयोः पुरःस्थिता भवार्णवस्योत्तरणे उत्तरणनिमित्तं चकास्ति शोभते । अतोऽहमनन्यजभ्रमात्कामकृतमोहादमूं त्यक्तुं नोत्सहे । इयं सरोजदृक् भवार्णवस्योत्तरणे नौकेति वा पूर्ववत् ॥

साधयति धरमपूर्वं पातालं कश्चिदेति कमलार्थी ।
न खलु सहजानुरागाद्विरमति तृष्णैतयोः कदाचिदपि ॥ ११० ॥

साधेति । [वै०—] कमलार्थी लक्ष्मीकामः कश्चिदपूर्वमदृष्टपूर्वं धरं पर्वतं असाध्यमपि साधयति । कोऽपि पातालमेति । सहजः स्वाभाविको योऽनुरागो धनविषयस्तस्मात् खलु निश्चयेन एतयोरुभयोरपि तृष्णा कदाचिदपि न विरमति ॥

[शृ०—] सा स्त्री अपूर्वं अकारपूर्वं धरं अधरं धयति पिबति । कश्चित्कमलार्थी द्रव्यलिप्सुरस्याः सकाशादलमतिशयेनाधरं पातेत्यागच्छति । अग्रे स्पष्टम् ॥

१५

सामानिनीत्वा सलिलात्पयोधेरजिग्रहत्कंजभुवा दृशा यः।
भजन्सखे तच्चरणारविन्दे विन्देस्तमानन्दममन्दमाशु ॥ १११ ॥

सामेति। [वै०—] पयोधेः समुद्रस्य सलिलात् सामानि। उपलक्षणमेतत्। सर्वान्वेदान् दैत्याहृतान् यः कृष्णः कंजभुवा ब्रह्मणा दृशा दृष्ट्या अजिग्रहत् ग्राहयामास। हे सखे। अग्रे स्पष्टम् ॥

[शृ०—] सा मानिनी स्त्री कंजानि कमलानि भवन्त्यस्या इति कंजभुवा कमलपरम्पराजनिकयारुणया दृशा त्वा त्वां अयो लोहं अजिग्रहत् लोहितदृष्टिच्छलात्फालमेव ग्राहयामासेत्यर्थः। अतस्तत्फालानिभारुणदृष्टिग्रहेण शुद्ध एव त्वमपि तस्याश्चरणारविन्दे भजन्तममन्दमानन्दं भजेः ॥

सर्वत्र साक्षिभावं कलयन्ती सपदि शर्म संदधती।
संमोहयति मनो मे मूर्तिर्गोपालवंशजन्मापि ॥ ११२ ॥

सर्वेति। [वै०—] नन्दगृहजातापि कृष्णमूर्तिः परब्रह्ममयी मे मनः संमोहयति ध्याने मुग्धं करोति। कीदृशी। सर्वत्र क्षेत्रे साक्षिभावं कलयन्ती। सपदि शर्म यच्छन्ती ॥

[शृ०—] सा स्त्री सर्वत्र अक्ष्णोर्भावं कलयन्ती सपदि शर्म यच्छन्ती आभीर्यपि मूर्तिर्मे मनः संमोहयति ॥

निवसति हृदये स मेघरूपो न तदुपपत्त्यवलम्बि कृत्यमन्यत्।
अत उचितमिहैतदेव यत्तत्सुदृढनियन्त्रणमन्तरङ्गसाध्यम् ॥ ११३ ॥

निवसतीति। [वै०—] मेघरूपो मेघश्यामः कृष्णो हृदये निवसति। तस्य उपपत्तिः प्राप्तिस्तदवलम्बि नान्यत्कृत्यम्। अस्तीति शेषः। अत इहैतदेवोचितं यदन्तरङ्गसाध्यं मनःकार्यं तस्य विष्णोः सुदृढं नियन्त्रणम्। मनसि दृढतया विष्णुः स्थाप्य इति ॥

[शृ०—] अघरूपः पापरूपोऽपराधरूपो वा स पुमान् मे हृदये वसति सचासावुपपतिर्जारस्तदवलम्बि अन्यत्कृत्यं कर्तव्यं न। अत इहैतदेवोचितं यत्स्वान्तरङ्गेण हृदयेन गुह्यप्रदेशेन वा साध्यं तस्य सुदृढनियन्त्रणमिति ॥

असत्यमेतद्विदितं समस्तमकार्यकारीति मृषा प्रपञ्चः।
कुचापलापक्रममेव कर्तुमाच्छादनं ते हृदयस्य शश्वत् ॥ ११४ ॥

असत्येति। [वै०—] एतद्विश्वं समस्तं असत्यं विदितं ज्ञातम् अकार्यकारि अर्थक्रियाकारि न भवति। अयं प्रपञ्चो मृषा मिथ्या। कुत्सितं चापलं चपलत्वमेव अपक्रममन्यायं कर्तुं ते हृदयस्य शश्वत् निरन्तरमाच्छादनमिति ॥

[शृ०—] एतत्त्वयोक्तम् असत्यं मिथ्या। समस्तं विदितं त्वचरितं सर्वं ज्ञातम्। अकारि अकारीति प्रपञ्चो मृषा। एतावत्परिणामौ कुचाविति कोऽपि न वेत्त्विति कुच-

योरपलापक्रममेव कर्तुं ते शश्वत् हृदयाच्छादनं न तु मृषावादेन स्वाभिप्रायगोपनमपि कर्तुमिति ॥

नानाबन्धप्रभेदे प्रथमकलितहृत्कञ्चुकग्रन्थिभेदै-
रत्यन्तानन्दमन्दीभवदपरभिदं नित्यमात्मानमीहे ।
स्मारं स्मारं भवाम्भोनिधिमधिकतया दुस्तरं निस्तरीतुं
नान्यं पश्याम्युपायं कमपि तदितरं मत्स्वरूपोपलब्ध्यै ॥ ११९ ॥

नानेति । [वै०—] नानाविधा ये बन्धप्रभेदाः कामक्रोधादयस्तत्र प्रथमकलिता ये हृत्कञ्चुकस्याहंकारस्य ग्रन्थेर्भेदा विदारणानि विमोचनानि तैरत्यन्तानन्देन मन्दीभवन्ती अपरभिदा प्रपञ्चभेदो यत्र तमेवंविधं नित्यमात्मानं ब्रह्म ईहे वाञ्छामि । भवाम्भोनिधिं स्मारं स्मारं अधिकतया दुस्तरं निस्तरीतुं तदितरमुपायं न पश्यामि । मत् सत्तामात्रं यत्स्वरूपं तस्योपलब्ध्यै ॥

[शृ०—] अहं नित्यं प्रत्यहं नानाप्रकारा बन्धभेदा यस्मिंस्तस्मिन् सुरते प्रथममादौ कलिताः कृता ये कञ्चुकस्य कूर्पासस्य ग्रन्थीनां भेदा विमोचनानि तैरत्यन्तं य आनन्दस्तेन मन्दीभवन्ती अपरभिदा अन्यभेदो यत्र तथाविधमात्मानं वाञ्छामि । अरं शीघ्रं स्मारं स्मरसंबन्धिनं दुस्तरं भवाम्भोनिधिं निस्तरीतुं तदितरमुपायं न पश्यामि स्म नापश्यम् । कस्यै । सत्स्वरूपं यस्यास्तस्याः सुन्दर्या उपलब्ध्यै प्राप्त्यै ॥

काश्यामाकृतिमीशितुर्न लभते हृद्याहितातत्त्वधी-
र्यस्य श्रीरिव साभवत्प्रियतमा या सर्वदाराधिका ।
शश्वत्तद्रतचेतसस्तव पुरापुण्यान्यगण्यानि य-
द्ब्रह्माद्वैतसुखेऽपि तद्भजनतो मन्दादरं ते मनः ॥ ११६ ॥

काश्यामिति । [वै०—] काश्यां हृदि आहिता अतत्त्वधीर्येनैवंविध ईशितुः शिवस्याकृतिं विश्वेश्वरादिशिवलिङ्गमूर्तिं न लभते न प्राप्नोति । यस्य शिवस्य का सा प्रियतमा अतिशयेन प्रियाभवत् श्रीरिव या सर्वदा आराधि । लोकैरिति शेषः । शश्वत्सदा तत्र शिवे रतं रक्तं चेतो यस्यैवंविधस्य तव पुरापुण्यानि पूर्वजन्मकृतानि अगण्यानि गणयितुमशक्यानि । यद्यस्माद्धेतोर्ब्रह्माद्वैतसुखेऽपि तद्भजनतस्ते मनो मन्दादरम् । अस्तीति शेषः । विष्णुपक्षे वा हृदि आहिता आरोपिता हृद्या मनोहरा, हिता इष्टा, का तत्त्वबुद्धिरीशितुः कृष्णस्य भगवतः श्यामाकृतिं गोपालमूर्तिं न लभते । अपि तु लभत एव । तत्त्वबुद्ध्या सांख्योक्तानां पञ्चविंशतितत्त्वानां गणनायां प्रसक्तया मत्या षड्विंशको विष्णुरिति षड्विंशत्वेन लभ्यतैव । यस्य कृष्णस्य या राधिका सा श्रीर्लक्ष्मीरिव प्रियतमा अभवत् । अग्रे समानम् ॥

[शृ०—] हृदि हृदये वक्षसि आरोपिता तस्य पुरुषस्य भावस्तत्त्वं तत्र धीर्बुद्धिर्यस्याः पुरुषायितुमनाः ईशितुः प्रियस्य कृतिं प्रियकर्तृकरतव्यापारं तद्वत्स्वयमेव का श्यामा

षोडशवार्षिकी युवतिर्न लभते। अपि तु लभत एव। यस्य भगवतः श्रीरिव लावण्येन सा युवतिर्भवतः प्रियतमा अतिशयेन प्रिया। या सर्वेभ्यो दारेभ्योऽधिका शश्वत्तस्या रते चेतो यस्य तदासक्तचित्तस्य वा तव पुरापुण्यानि अगण्यानि। यद्यतस्तस्या भजनतो ब्रह्मानन्देऽपि मनो मन्दादरम्॥

यदस्ति मे किंचन तत्समस्तं दास्यामिहास्यामितरेयमेवम्।
अकिंचनासक्तिजुषो न लज्जा भवेद्धनं तन्न समर्पितं चेत्॥ ११७॥

यदिति। [वै०—] यत्किंचन मेऽस्ति धनदारादिकं तत्समस्तं दास्यामि, हास्यामि त्यक्ष्यामि। एवं सति नेयम्। संसारमित्यर्थः। तद्धनं चेन्न समर्पितं तदा अकिंचनानां निष्परिग्रहाणां विरक्तानामासक्तिं सेवमानस्य मे लज्जा न भवेत्। अपि तु भवेदेव॥

[शृ०—] इह मे यत्किंचनास्ति द्रव्यादिकं तत्समस्तं अस्यां दास्याम्। इतरा इयं स्त्री ऊढा एवमकिंचनैव तिष्ठति। तत्तस्माद्धनं न समर्पितं चेत् तदा अकिंचनाया ऊढाया आसक्तिं सेवमानस्य मे लज्जा न भवेत्, अपि तु भवेदेवेति काकुः। इदानीमूढाप्युपभोगक्षमा वृत्ता। तस्मादियदवधि उपभुज्यमानदासीहस्तस्थं द्रव्यं गृहीत्वाभरणादिदानेनेयमपि संमाननीयेति॥

सपटघटसमस्तन्यायतत्त्वोल्लसद्दृ-
ग्विरचितविविधात्मप्रक्रियामोहितस्य।
कथमभिनिविशेत स्वान्तमन्यद्बुभुत्सो-
स्तव नयमनयं वा वीतबुद्धेर्विवेक्तुम्॥ ११८॥

सेति। [वै०—] उदाहरणत्वेन पटघटकुड्यादिसहितः समस्तो यो न्यायो न्यायशास्त्रं तस्य यत्तत्त्वं साधर्म्यवैधर्म्यादिना प्रमाणादिषोडशपदार्थविवेचनं तत्रोल्लसन्ती या दृग् दृष्टिर्बुद्धिस्तया विरचिता या विविधानां नानाविधानामात्मनां प्रक्रिया तया मोहितस्य नयं सच्छास्त्रं अनयमसच्छास्त्रं बुभुत्सोर्बोद्धुमिच्छोर्विवेक्तुं वीतबुद्धेस्तव स्वान्तं चित्तं अन्यन्नयं वेदान्तशास्त्रं एकात्मप्रतिपादनरूपं कथमभिनिविशेत॥

[शृ०—] सपटौ साञ्चलपरिधानौ घटसमौ स्तनौ यस्यास्तस्या आयतत्वेन विशालत्वेन उल्लसन्ती या दृग् नेत्रं तया विरचिता या आत्मनः प्रक्रिया नानाविधो विलासस्तया मोहितस्य नयं नीतिम् अनयमनीतिं बुभुत्सोर्विवेक्तुं वीतबुद्धेस्ते स्वान्तमन्तः कथमन्यत्पदार्थमभिनिविशेत॥

श्रुतो जगति योधरो मधुपवर्गवर्णोद्धृतेः
स मेऽतिरुचिरो हृदि स्फुरति साधु गोवर्धनः।
द्विजातिपरिशीलनक्रमविदा मयासाद्यते
सविद्रुमरुचिः स्फुरन्मृदुपलामृतश्रीधरः॥ ११९॥

श्रुतेति । [ वै०—] मधुपवर्गस्य भ्रमरसमूहस्य वर्ण इव वर्णो यस्य स वासुदेवस्ते-नोद्धृतेरुद्धरणादुत्पाट्योन्नयनाज्जगति विश्रुतः ख्यातो यो धरः पर्वतो गोवर्धनः अतिरुचिरोऽतिमनोज्ञः स मे हृदि साधु यथा स्यात्तथा स्फुरति । अतो द्विजातीनां ब्राह्मणादीनां परिशीलनक्रमविदा यात्राक्रमज्ञेन मया आसाद्यते आसादयिष्यते । कीदृशः । वीनां पक्षिणां द्रुमाणां या रुचिस्तत्सहिता स्फुरन्ती या मृदः, उपलानाम्, अमृतस्य जलस्य च, श्रीः शोभा तां धारयतीति तथा । ततो मयावश्यं गन्तव्य इति ॥

[शृ०—] योऽधरोऽधरोष्ठः श्रुतो जगति मधु, मत्मारे मधुस्वरूपः । पवर्गवर्णानां पफबभमानामुद्धृतेरुच्चारणाद् गोवर्धनो वचनवर्धनशीलः । अतिरुचिरो मम हृदि साधु सम्यक्प्रकारेण स्फुरति । द्विजानां दन्तानामतिपरिशीलनं मणिमालादिनामकक्षतदानं तत्क्रमज्ञेन मया सोऽधर आसाद्यते प्राप्यते । कीदृशः । विद्रुमस्य प्रवालस्य रुचिरिव रुचिर्यस्य स्फुरन्ती स्फुटीभवन्ती मृदुनि पक्ष्ये मांसे अमृतश्रीस्तां धारयतीति ॥

यासौ संसृतिनिर्वृतिस्थितिरतिक्लिष्टा कुचेष्टाकृति-
स्तामेवानुदिनं विचारयति यः स्यादेष दोषानुगः ।
अस्मिन्सारमते निधाय हृदयं निर्द्वन्द्वपीडः स्थिरा-
मन्दानन्दचिरानुभूतिरभजद्योगेन सद्यः फलम् ॥ १२० ॥

येति । [वै०—] या असौ संसृतिनिर्वृतेः संसारसुखस्य स्थितिः अतिक्लिष्टा क्लेशा-नुषङ्गवती । कुत्सिता या चेष्टा तत्कृतिः पश्वादिसाधारणरतजन्या । तामेव योऽनुदिनं विचारयति एष पुमान् दोषानुगो रागादिदोषकिंकरः स्यात् । अयं पुमानस्मिन् सारमते सारभूते मते योगाभ्यासलक्षणे हृच्चित्तं निधाय निर्गता द्वन्द्वपीडा शीतोष्णादिबाधा य-स्मादेवंविधः सन् स्थिरामन्दानन्दस्य ब्रह्मावाप्तिसुखस्य चिरमनुभवो यस्यैवंविधो योगेन सद्यः फलमभजत् ॥

[शृ०—] यासौ स्त्री संसारसुखस्थानरतिक्लिष्टा कुचाभ्यामिष्टा मनोज्ञा आकृतिरा-कारो यस्यास्तामेव योऽनुदिनं विचारयति एष पुमान् दोषा रात्रिस्तदनुगस्तदनुसरणशीलः स्यात् । सा स्त्री अस्मिन्पुंसि रमते । किं कृत्वा । हृद्धृदयं मनो वक्षो वा निधाय । अयं पुमा-न्नितरां द्वन्द्वस्यार्थात्कुचयुग्मस्य पीडा यस्मात् सः । तथा स्थिरा अमन्दानन्दस्याधिक-सुखस्य चिरमनुभूतिर्यस्यैवंविधो योगेनास्याः संबन्धेन सद्यः फलमभजदिति ॥

वसन्ते संजाते धरणिभृदपत्योत्सवविधा-
वसावङ्गीकुर्यान्नवरणमनङ्गस्य भवतः ।
विहायेहान्येहां कलितसुमना माधवपदे
विधेहि स्वं धीरं प्रथममथवेदं कथय नः ॥ १२१ ॥

वसन्तेति । [वै०—] वसन्ते संजाते चैत्रे समागते धरणिभृतो हिमवतोऽपत्यस्य दुर्गाया उत्सवविधौ असौ यजमानः अनङ्गस्य अङ्गहीनस्य ते वरणं नाङ्गीकुर्यात् तस्मा-

न्मदुक्तं शृणोषि चेत्तदाहमुपदिशामि इहोत्सवे अन्येहां द्रव्यप्राप्तिवाञ्छां विहाय माधवस्य कृष्णस्य पदे कलितं स्थापितं सुष्ठु मनो येनैवंविधः सन् प्रथममादौ स्वमात्मानं धीरं विधेहि। अथानन्तरं नोऽस्मभ्यं वेदं कथय विष्णुप्रीत्यै अस्मदग्रे वेदपाठं कुर्विति॥

[शृ०—] असौ त्वं वसन्ते वैशाखे प्राप्ते धरणिभृतो राज्ञो यदपत्यं कन्या तदुत्सवविधौ तद्विवाहसंमर्दे भवतस्ते अनङ्गस्य कामस्य नवरणं नूतनरतमङ्गीकुर्यात्। इह प्रसङ्गे अन्यस्यामीहां स्पृहां विहाय माधवपदे वसन्तस्थाने उपवनादौ कलिता दृष्टाः सुमनसो नानाकुसुमानि चित्तविक्षोभहेतुभूतानि येन एवंविधस्त्वं स्वमात्मानं प्रथममादौ धीरं विधेहि। अथवा इदं स्वमतं नः कथयेति॥

प्राज्ञैरनन्तपथपान्थतयामितव्यं
नैवान्यथा भवति कामनयोपयोगः।
तन्मृग्यतामिह परत्र च सारसाक्षी
यागोपि दिव्यसुखहेतुरमानि मान्यैः॥ १२२॥

प्राज्ञेति। [वै०—] अनन्तपथं विष्णुमार्गं पान्थत्वेन प्राज्ञैः सुबुद्धिभिः स्थेयम्। अन्यथा कामनया नानाविधया उपयोगः फलसंबन्धो न भवति। सर्वस्यापि नश्वरत्वात्। तर्हि इह संसारे परत्र परलोके च सारे स्थिरांशे साक्षी तदनुभववान् मृग्यतामन्विष्यताम्। स एव सारं वक्ष्यति। यागोऽपि मान्यैर्मन्वादिभिर्दिव्यसुखहेतुत्वेन अमानि अनुमतः॥

[शृ०—] प्राज्ञैश्चतुरैरनन्ता अपरिमिता ये पन्थानस्तत्र पान्थत्वेन संचरणशीलत्वेन स्थातव्यम्। अनेकानुसंधानं विधेयमित्यर्थः। तत्तस्मादिहात्र परत्रान्यत्र वा अत्र नगरे नगरान्तरे वा सारसाक्षी पद्माक्षी मृग्यतामन्विष्यताम्। यत्र क्वापि या मान्यैर्महद्भिः क्षत्रियादिभिरगोपि रक्षिता। दिव्यसुखहेतुरमानि॥

सुखं सारत्यागः कलयतु समेत्य द्विजपदा-
न्यसौ मामेत्यद्य श्रुतिमधुरवाचाहृतमनाः।
सदाम्नायार्थेनाधिकसुरभिणैक्यस्थिरमतिः
प्रपञ्चं पञ्चानां न खलु मनुते सत्यमधुना॥ १२३॥

सुखेति। [वै०—] द्विजपदानि ब्राह्मणस्थानानि समेत्य गत्वा सारस्त्यागो यस्य सम्यग्दानशीलः असौ दाता सुखं कलयतु सुखी भवतु। अद्य श्रुत्या वेदेन मधुरवाचा मधुरवेदपाठेन हृतचित्तो मामेति प्राप्नोति। त्वयापि तद्दत्तं ग्राह्यमेवेत्यत आह—सदा अधिकसुरभिणा अतिप्रसिद्धेनाम्नायार्थेनैक्ये जीवब्रह्माभेदे स्थिरा मतिर्यस्यैवंविधः पुमानस्मदादिः पञ्चानां भूतानां प्रपञ्चं देहमपि खलु निश्चयेन अधुना सत्यं न मनुते। किं पुनर्धनादिकमिति॥

[शृ०—] सारसी सेयं स्त्री अद्य द्विजपदानि दन्तक्षतान्यक्षिमालादिप्रभेदान्समेत्य मा

मा इति श्रुतिमधुरवाचाहृतमना रम्यागः सुरतापराधं सुखमेव कलयतु जानातु । अधिकं सुरभिणा कर्पूरकस्तूरीचन्दनताम्बूलादिना सदाम्ना समाल्येन मत्प्रेषितेन ऐक्ये मया सहाभिन्नभावे स्थिरा मतिर्यस्या एवंविधा या पत्नी तां दूतीसख्यादीनां प्रपञ्चं कल्पितविघटनोपायं अधुना खलु निश्चयेन सत्यं न मनुते । ततः प्रसन्ना मम मनोरथं पूरयिष्यतीति ॥

ज्योतिर्मन्ये त्रिनेत्रोद्भवमिह विहरत्कामिचक्रार्तिदं य-
द्रत्याः पत्याथ सद्यः प्रकटितमधिकं पाटवं स्वात्मभूतेः ।
एतस्यालोकतोऽमी वयमपहृतहृत्तापतामाप्तवन्तः
संतुष्टाः प्रोषितस्त्रीरतिसुखमनसो दुस्तरं निस्तरेम ॥ १२४ ॥

ज्योतिरिति । [वै०—] विहरतः क्रीडतः कामिचक्रस्य या आर्तिर्मनःपीडा तत्प्रदं त्रिनेत्रोद्भवं ज्योतिः शिवतृतीयलोचनतेजो मन्ये । यत्तेजः प्राप्य रत्याः पत्या कामेन सद्यः स्वात्मनः स्वशरीरस्य भूतिर्भस्म तस्या अधिकं पाटवं सामर्थ्यं प्रकटितम् । अमी वयमेतस्य शिवदृग्वह्निपाटवस्यालोकतो दर्शनादपहृतहृत्तापत्वं प्राप्तवन्तः संतुष्टाः प्रोषितं दूरे गतं स्त्रीरतिसुखे मनो येषामेवंविधाः सन्तो दुस्तरं संसारसमुद्रं निस्तरेम । भस्मीभूतात्कामात्कामी(?) । अतः कथं संसारसिन्धुं न तरेम ॥

[शृ०—] अत्रेर्नेत्रादुद्भूतं ज्योतिश्चन्द्रलक्षणमिह विहरतां कामिनां चक्राणां चक्रवाकाणां मनः पीडाप्रदं मन्ये । यज्ज्योतिश्चन्द्ररूपमवाप्य सद्यःकामेन स्वात्मनो भूतेरैश्वर्यस्याधिकं पाटवं प्रकटितम् । एतस्य चन्द्रस्यालोकतो दर्शनाच्चन्द्रिकाया वा अमी वयमपहृतहृत्तापत्वं प्राप्तवन्तः संतुष्टाः प्रोषितानां परदेशं गतानां या स्त्रियस्तद्रतिसुखे मनो येषामेवंविधाः सन्तो दुस्तरं कामं निस्तरेम । चन्द्राद्युद्दीपनदर्शनेनाधिककामवेगाद्वयं विदेशस्थवधूसमागमेन कृतेन सुखिनः स्यामेति ॥

हित्वा तामसतां मनोरथमितां मत्वा कुचेष्टास्थितिं
नार्यासक्तिमुपेक्ष्य तां नय निजां नो मुञ्च सीमामपि ।
भ्रातस्ते भ्रमतः कदापि न भवेदद्वैतसंविद्भवे
तस्माद्विस्मर न स्मराहितपदद्वन्द्वानुरागक्रमम् ॥ १२५ ॥

हित्वेति । [वै०—] कुत्सिता चेष्टा यस्यामेवंविधा स्थितिर्यस्या एवंविधां मत्वा मनोरथैरभिलाषैर्युक्तां तामसतां तामसत्वं हित्वा त्यक्त्वा आर्याणां सज्जनानां आसक्तिं नोपेक्ष्य तां सतामासक्तिं निजां सीमां मर्यादां नय । नो मुञ्च न त्यज । हे भ्रातः, भवे संसारे भ्रमतः संचरतो भ्रमयुक्तस्य वा भ्रमाद्वा तेऽद्वैतबुद्धिः कदापि न भवेत् तस्मात् स्मराहितः शिवस्तस्य पदद्वन्द्वेऽनुरागक्रमं न विस्मर । यथा शिवचरणद्वयेऽनुरागो भवति तथा कुरु तत एव ते ज्ञानं भवेत् ॥

[शृ०—] असतां विटानामन्येषां मनोरथमभिलाषं प्राप्तां कुचाभ्यामिष्टा स्थि-

तिर्यस्था एवंविधां तां नारीणामासत्तिमुपेक्ष्य तां प्रसिद्धां पूर्वोपभुक्तामन्यैर्विटैरज्ञातां निजां स्वकीयामेव नय । सीमां मर्यादामपि नो मुञ्च । यद्वा इमामपि नो मुञ्चसि पराभिलाषविषयानेकनारीप्रत्यासत्तिमिच्छोरिमामपि न त्यजतस्ते हे भ्रातरद्वैतबुद्धिर्भवे संसारे न कदापि भवेत् । इतस्ततो गमनेन द्वैतबुद्धिरेव भवेत् । एकावलम्बनेन द्वैतधीर्न स्यात् । तस्मादाहितो यः पदद्वन्द्वे स्थलद्वयेऽनुरागक्रमस्तं न स्मर । किं तु विस्मर । यद्वा स्मरेणाहितो यः पदद्वन्द्वेऽनुरागक्रमस्तं न विस्मर । संततं स्थलद्वयानुरागविशेषं स्मरेति ॥

रामेतिनामस्मृतिरप्यमन्दमानन्दमाधाय सुधामयीह ।
मृतायमानेऽप्यमृतायमाना व्यनक्ति साक्षादमृतात्मतां यत् ॥ १२६ ॥

रामेति । [वै०—] इह संसारे राम इति नाम्नः स्मृतिरप्यमृतमयी अमन्दमधिकमानन्दमाधाय मृतायमाने चरमावस्थां गतेऽपि अमृतायमाना मोक्षवदाचरन्ती साक्षादव्यवधानेन नित्यमुक्तात्मलाभलक्षणं मोक्षरूपत्वं व्यनक्ति प्रकटयति । अन्ते रामस्मरणेन मुक्तः स्यादिति ॥

[शृ०—] रामा स्त्री इति नाम्नः स्मृतिरपि सुधा अमृतम् इह मयि मृतायमानेऽपि अमृतायमाना साक्षादमृतात्मतां जीवतो भावं व्यनक्तीति ॥

इच्छेत्परमनुसर्तुं प्रतिमासंदर्शनेन विशदरुचिः ।
अनवाप्य येनयोगं भवतो हृदये परं निधीयेत ॥ १२७ ॥

इच्छेदिति । [वै०—] जगन्नाथप्रयागमाधवबदरीनारायणादीनां विष्णुप्रतिमानां तत्र तत्र क्षेत्रे संदर्शनेन विशदा निर्मला रुचिर्यस्यैवंविधः पुरुषस्तत्तत्तीर्थविष्णुमूर्तिदर्शननिष्पापः परं परमात्मानं प्रकृतेः परत्वान्निराकारम् अनुसर्तुमिच्छेत् । साकारस्य प्रतिमां दृष्ट्वा निर्मलकान्तिः पुमान् निराकारस्यानुसरणं कर्तुमिच्छेत् । येन पुंसा योगं समाधिमनवाप्य भवतः संसारात् अपरं न परं समारमनतीतं साकारमेव ब्रह्म हृदये निधीयेत स्थाप्येत । योगाभ्यासस्य सिद्धौ प्रकृतेः पर आत्मा लभ्येत । तदसिद्धौ प्रतिमादिरूपसाकारात्मैव हृदये स्थाप्यते तत एव तदपि सिध्यतीति ॥

[शृ०—] प्रतिमासं मासं मासं प्रति दर्शनेन अर्थादृतोः ऋतुमनु ऋतुं लक्ष्यीकृत्य सा ते प्रतिवेशिनी विशन्ती अरुचिर्यस्या एवंविधा सती परं पुरुषमिच्छेत् । अनुमासमृतुदर्शनेन दुःखमनुभवन्ती परपुरुषेच्छां कुर्यादेव । कथमियत आह—या इनस्य स्वामिनो भर्तुर्योगं विना परं केवलं भवतस्तव हृदये निधीयेत निधिरिवाचरेत् । तत्प्रतिवेशितया तवैव निधिवल्लाभो भवेदिति ॥

अध्यास्यसौरभेयं मौक्तिकरुचिरङ्गणेषु विहितगतिः ।
मान्यः स एव हृदि मे गौरी वामाङ्गमाश्रिता यस्य ॥ १२८ ॥

अधीति । [वै०—] मौक्तिकवद्रुचिरं स्निग्धं सौरभेयं वृषमध्यास्य आरुह्य गणेषु

प्रमथेषु विहिता कृता गतिर्गमनं येन । यस्य वामाङ्गे गौरी आश्रिता स सदाशिव एव हृदि मान्यः । अन्यो मास्तु, स एव शिवो हृदि मेऽस्त्विति वा ॥

[शृं०—] आस्यं मुखमधिकृत्य अध्यास्यं सौरभं परिमलः कमलादीनामिव यस्याः । सेयं पद्मिनी मौक्तिकरुचिः स्निग्धा देदीप्यमाना यस्याः । अङ्गणेषु विहिता गतिर्यया अङ्गणमात्ररिङ्गणशीला । सुकुमारत्वात् । गौरी गौराङ्गी वामा स्त्री यस्य पुरुषस्याङ्गमुरःस्थलादिकमाश्रिता स एव मे हृदि मान्य इति पक्षद्वयेऽपि सुधीभिः पदच्छेदभेदेनार्थविशेष ऊहनीयः ॥

शृङ्गारे वैराग्ये व्यधायि मद्यःस्फुरत्समग्रार्थम् ।
श्रीरामचन्द्रकविना काव्यमिदं रसिकरञ्जनं नाम ॥ १२९ ॥

शृङ्गारेति । स्पष्टोऽर्थः ॥

प्रख्यातो यः पदार्थैरमृतहरिगजश्रीसखैः श्लोकशाली
स्फीतातिस्फूर्तिरुद्यद्बुधमुदनुगिरं क्षीरधी रामचन्द्रः ।
भ्रान्तोऽस्मिन्मन्दरागः फणिपतिगुणभृज्जातु मज्जेत्कथं न
स्यादाधारोऽमुना चेदिह न विरचितः श्रीमता वाङ्मुखेन ॥१३०॥

प्रख्यात इति। अमृतं सुधा हरिगज ऐरावतस्तयोर्या श्रीस्तत्सखैर्माधुर्येण तेजसेन चामृतैरावतशोभायुतैः पदार्थैः पदैरर्थैश्च श्लोकशाली । अतिस्फूर्तिर्यस्य प्रशस्तशब्दार्थस्फुरणवान् । अनुगिरं वाणीमनु उद्यन्ती बुधानां पण्डितानां मुद्यस्मात् क्षीरवद् धीर्बुद्धिर्यस्य क्षीरनिर्मलमतिर्यो रामचन्द्रः प्रख्यातः प्रसिद्धः अस्मिन् रामचन्द्रे फणिपतेर्गुणं भाष्यव्याख्यानं बिभर्तीति स तथा वैयाकरणोऽपि भ्रान्तः सन् मन्दो रागो यस्यासौ मन्दादरो जातु कदाचित्कथं न मज्जेत् । शृङ्गारवैराग्यरूपार्थव्याख्यायां मतिकर्दमे कथं न पतेत् । चेत् इह सपञ्चविंशति शृङ्गारवैराग्यशते अमुना रामचन्द्रेण वाङ्मुखेनार्थद्वयोपन्यासेनाधारो न विरचितः स्यात् । एतत्कृतटीकाया आधारमप्राप्य मतिकर्दमे पतेदेवेत्यर्थः ॥ रामोऽपि रामचन्द्रः । यस्माद् अमृतं, हरिरुच्चैःश्रवाः, गज ऐरावतः, श्रीर्लक्ष्मीः, तत्सखैः पारिजातादिभिः पदार्थैः श्लोकशाली कीर्तिमान् अनुगिरं गिरिं मन्दरमनुगम्य स्फीता अत्यन्तं स्फूर्तिः फेनादिना यस्य उद्यन्ती बुधानां देवानां मुत् संतोषो यस्मादेवंविधो यः क्षीरधिः अस्मिन्क्षीरसमुद्रे फणिपतिर्वासुकिः स एव गुणो रज्जुस्तं बिभर्तीति स तथाभूतो मन्दरागो मन्दरपर्वतो भ्रान्तो भ्रमणं प्राप्तः जातु कदाचित्कथं न मज्जेत्। चेदिह अमुना अवाक् अधो मुखं यस्य कूर्मस्यैवंविधेन कूर्मरूपेण श्रीमता विष्णुना विरचित आधारो न स्यात् । पयःपयोधिमथनप्रस्तावे क्षीरधेरधः कूर्मावतारेण हरिणा मन्दराधारभूतभूतेनाभावि ततो न तस्य मज्जनं वृत्तमिति पौराणिकी कथेति द्वितीयो ध्वनिरूपोऽर्थः ॥

शृङ्गारवैराग्यशतं सपञ्चविंशत्ययोध्यानगरे व्यधत्त ।
अब्दे वियद्द्वारणबाणचन्द्रे श्रीरामचन्द्रोऽनु च तस्य टीकाम् ॥
श्रीरामचन्द्रकदिना काव्यमिदं व्यरचि विरतिबीजतया ।
रसिकानामपि रतये शृङ्गारार्थोऽपि संगृहीतोऽत्र ॥

इति श्रीलक्ष्मणभट्टसूनुश्रीरामचन्द्रकविकृतं सटीकं रसिकरञ्जनं नाम शृङ्गारवैराग्यार्थसमानं काव्यं संपूर्णम् ।

महाकविश्रीक्षेमेन्द्रविरचितं

# कविकण्ठाभरणम् ।

प्रथमः संधिः ।

जयति जितसुधाम्भःसंभवद्वाग्भवश्री-
रथ सरससमुद्यत्कामतत्त्वानुभावा ।
तदनुपरमधामध्यानसंलब्धमोक्षा
रविशशिशिखिरूपा त्रैपुरी मन्त्रशक्तिः ॥ १ ॥
शिष्याणामुपदेशाय विशेषाय विपश्चिताम् ।
अयं सरस्वतीसारः क्षेमेन्द्रेण प्रदर्श्यते ॥ २ ॥
तत्राकवेः कवित्वाप्तिः शिक्षा प्राप्तगिरः कवेः ।
चमत्कृतिश्च शिक्षाप्तौ गुणदोषोद्गतिस्ततः ॥ ३ ॥
पश्चात्परिचयप्राप्तिरित्येते पञ्च संधयः ।
समुद्दिष्टाः क्रमेणैषां लक्ष्यलक्षणमुच्यते ॥ ४ ॥
सुविभक्ति समन्वितं बुधैर्गुणसंयुक्तमसुक्तसौष्ठवैः ।
रचितं पदकैः सुवर्णवत्कविकण्ठाभरणं विचार्यताम् ॥ ५ ॥

अथेदानीमकवेः कवित्वशक्तिरुपदिश्यते—

प्रथमं तावद्दिव्यः प्रयत्नः, ततः पौरुषः—

ॐ स्वस्त्यङ्कं स्तुमः सिद्धमन्तरार्घमतीप्सितम् ।
उपदूर्जमदं देव्या ऋऋॢलॄनिगूहनम् ॥ ६ ॥
एकमैश्वर्यसंयुक्तमोजोवर्धनमौषधम् ।
अन्तरान्तः कलाकाखगसङ्घनमुघाङ्कितम् ॥ ७ ॥

चन्द्रोच्छलज्जलं प्रोज्झदज्ञानं ढठसंयुतम् ।
डम्बरप्रौढकिरणं तथतां दधदुन्नतम् ॥ ८ ॥
परं फलप्रदं बद्धमूलोद्भवमयं वपुः ।
रम्यं लघुवरं शर्म वर्षत्सर्वसहाक्षरम् ॥ ९ ॥
एतां नमः सरस्वत्यै यः क्रियामातृकां जपेत् ।
क्षेममैन्द्रं स लभते भव्योऽभिनववाग्भवम् ॥ १० ॥
श्वेतां सरस्वतीं मूर्ध्नि चन्द्रमण्डलमध्यगाम् ।
अक्षराभरणां ध्यायेद्वाङ्मयामृतवर्षिणीम् ॥ ११ ॥
त्रिकोणयुगमध्येतु नाडन्तुल्यां प्रमोदिनीम् ।
स्वर्गमार्गोद्गतां ध्यायेत्परामममृतवाहिनीम् ॥ १२ ॥
निर्विकारां निराकारां शक्तिं ध्यायेत्परात्पराम् ।
एषा बीजत्रयी वाच्या त्रयी वाक्काममुक्तिमूः ॥ १३ ॥

काव्यक्रियेच्छाङ्कुरमूलभूमिमन्विष्य विश्रान्तिलवेन मोक्षः ।
अन्यावधाने मदनस्य मोक्षस्तृतीयबीजे सकलेऽस्ति मोक्षः ॥ १४ ॥

अथ पौरुषः ।

तत्र त्रयः शिष्याः काव्यक्रियायामुपदेश्याः । अल्पप्रयत्नसाध्यः, कृच्छ्रसाध्यः, असाध्यश्चेति ।

तत्र प्रथमः—

कुर्वीत साहित्यविदः सकाशे श्रुतार्जनं काव्यसमुद्भवाय ।
न तार्किकं केवलशाब्दिकं वा कुर्याद्गुरुं सूक्तिविकासविघ्नम् ॥ १५ ॥
विज्ञातशब्दागमनामधातुश्छन्दोविधाने विहितश्रमश्च ।
काव्येषु माधुर्यमनोरमेषु कुर्यादखिन्नः श्रवणाभियोगम् ॥ १६ ॥
गीतेषु गाथास्वथ देशभाषाकाव्येषु दद्यात्सरसेषु कर्णम् ।
वाचां चमत्कारविधायिनीनां नवार्थचर्चासु रुचिं विदध्यात् ॥ १७ ॥
रसे रसे तन्मयतां गतस्य गुणे गुणे हर्षवशीकृतस्य ।
विवेकसेकस्वकपाकभिन्नं मनः प्रसूतेऽङ्कुरवत्कवित्वम् ॥ १८ ॥

अथ द्वितीयः—

पठेत्समस्तान्किल कालिदासकृतप्रबन्धानितिहासदर्शी।
काव्याधिवासप्रथमोद्गमस्य रक्षेत्पुरस्तार्किकगन्धमुग्रम् ॥ १९ ॥
महाकवेः काव्यनवक्रियायै तदेकचित्तः परिचारकः स्यात्।
पदे च पादे च पदावशेषसंपूरणेच्छां मुहुराददीत ॥ २० ॥
अभ्यासहेतोः पदसंनिवेशैर्वाक्यार्थशून्यैर्विदधीत वृत्तम्।
श्लोकं परावृत्तिपदैः पुराणं यथास्थितार्थं परिपूरयेच्च ॥ २१ ॥

तत्र वाक्यार्थशून्यं यथा—

'आनन्दसंदोहपदारविन्दकुन्देन्दुकन्दोदितबिन्दुवृन्दम्।
इन्दिन्दिरान्दोलितमन्दमन्दनिष्यन्दनन्दन्मकरन्दवन्द्यम् ॥'

परावृत्तिपदैर्यथा—

'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥'
'वाण्यर्थाविव संयुक्तौ वाण्यर्थप्रतिपत्तये।
जगतो जनकौ वन्दे शर्वाणीशशिशेखरौ ॥'

अथ तृतीयः—

यस्तु प्रकृत्याश्मसमान एव कष्टेन वा व्याकरणेन नष्टः।
तर्केण दग्धोऽनलधूमिना वाप्यविद्धकर्णः सुकविप्रबन्धैः ॥ २२ ॥
न तस्य वक्तृत्वसमुद्भवः स्याच्छिक्षाविशेषैरपि सुप्रयुक्तैः।
न गर्दभो गायति शिक्षितोऽपि संदर्शितं पश्यति नार्कमन्धः ॥२३॥

इति ततसुकृतानां प्राक्तनानां विपाके
भवति शुभमतीनां मन्त्रसिद्धं कवित्वम्।
तदनु पुरुषयत्नैर्धीमतामभ्युदेति
स्फुरति जडधियां श्रीशारदा साधनेन ॥ २४ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृते कविकण्ठाभरणे कवित्वप्राप्तिः प्रथमः संधिः।

द्वितीयः संधिः ।

**छायोपजीवी पदकोपजीवी पादोपजीवी सकलोपजीवी ।**
**भवेदथ प्राप्तकवित्वजीवी स्वोन्मेषतो वा भुवनोपजीव्यः ॥ १ ॥**

छायोपजीवी यथा भट्टभल्लटस्य—

'नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥'

यथा च श्रीमदुत्पलराजदेवस्य—

'मात्सर्यतीव्रतिमिरावृतदृष्टयो ये
ते कस्य नाम न खला व्यथयन्ति चेतः ।
मन्ये विमुच्य गलकन्दलमिन्दुमौले-
र्येषां सदा वचसि वल्गति कालकूटः ॥'

पदकोपजीवी यथा मुक्ताकणस्य—

'यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।
यथा विद्युज्ज्वालोल्लसनपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः ॥'

यथा चैतद्भ्रातुश्चक्रपालस्य—

"सरस्यामेतस्यामुदरवलिवीचीविलुलित
यथा लावण्याम्भो जघनपुलिनोल्लङ्घनकरम् ।
यथा लक्ष्यश्चायं चलनयनमीनव्यतिकर-
स्तथा मन्ये मग्नः प्रकटकुचकुम्भः स्मरगजः ॥'

पादोपजीवी यथामरकस्य—

'गन्तव्यं यदि नाम निश्चितमहो गन्तासि केयं त्वरा
द्वित्राण्येव दिनानि तिष्ठतु भवान्पश्यामि यावन्मुखम् ।

संसारे घटिकाप्रणालविगलद्धारा समे जीविते
 को जानाति पुनस्त्वया सह मम स्याद्वा न वा संगमः ॥'

यथा मम—

'हंहो स्निग्धसखे विवेक बहुभिः प्राप्तोऽसि पुण्यैर्मया
 गन्तव्यं कतिचिद्दिनानि भवता नास्मत्सकाशात्क्वचित्।
त्वत्सङ्गेन करोमि जन्ममरणोच्छेदं गृहीतत्वरः
 को जानाति पुनस्त्वया सह मम स्याद्वा न वा संगमः ॥'

सकलोपजीवी यथार्यभट्टस्य—

'शब्दैर्निसर्गकटुभिर्मलिनस्वभावाः
 श्रोत्रं खला निगडवत्परितस्तुदन्ति।
श्रव्यैरलुप्तपदबन्धतयातिमञ्जु-
 मञ्जीरवत्तु सुजना जनयन्ति मोदम् ॥'

यथा च भट्टबाणस्य—

'कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव।
मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव ॥'

भुवनोपजीव्यो यथा भगवान्व्यासः—

तथा चोक्तम्—

'इदं कविवरैः सर्वैराख्यानमुपजीव्यते।
उदयं प्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥'

प्राप्तगिरः कवेः शिक्षास्तावदाह—

**व्रतं सारस्वतो यागः पूर्वं विघ्नेशपूजनम्।**
**विवेकशक्तिरभ्यासः संधानं प्रौढिरश्रमः ॥ २ ॥**
**वृत्तपूरणमुद्योगः पाठः परकृतस्य च।**
**काव्याङ्गविद्याधिगमः समस्यापरिपूरणम् ॥ ३ ॥**
**सहवासः कविवरैर्महाकाव्यार्थचर्वणम्।**
**आर्यत्वं सुजनैर्मैत्री सौमनस्यं सुवेषता ॥ ४ ॥**

नाटकाभिनयप्रेक्षा शृङ्गारालिङ्गिता मतिः ।
कवीनां संभवे दानं गीतेनात्माधिवासनम् ॥ ५ ॥
लोकाचारपरिज्ञानं विविक्ताख्यायिकारसः ।
इतिहासानुसरणं चारुचित्रानिरीक्षणम् ॥ ६ ॥
शिल्पिनां कौशलप्रेक्षा वीरयुद्धावलोकनम् ।
शोकप्रलापश्रवणं श्मशानारण्यदर्शनम् ॥ ७ ॥
व्रतिनां पर्युपासा च नीडायतनसेवनम् ।
मधुरस्निग्धमशनं धातुसाम्यमशोकता ॥ ८ ॥
निशाशेषे प्रबोधश्च प्रतिभा स्मृतिरादरः ।
सुखासनं दिवा शय्या शीतोष्णप्रतिक्रिया ॥ ९ ॥
आलोकः पत्रलेख्यादौ गोष्ठीप्रहसनज्ञता ।
प्रेक्षा प्राणिस्वभावानां समुद्राद्रिस्थितीक्षणम् ॥ १० ॥
रवीन्दुताराकलनं सर्वर्तुपरिभावनम् ।
जनसंघाभिगमनं देशभाषोपजीवनम् ॥ ११ ॥
आधानोद्धरणप्रज्ञा कृतसंशोधनं मुहुः ।
अपराधीनता यज्ञसभाविद्यागृहस्थितिः ॥ १२ ॥
अतृष्णता निजोत्कर्षे परोत्कर्षविमर्शनम् ।
आत्मश्लाघाश्रुतौ लज्जा परश्लाघानुभाषणम् ॥ १३ ॥
सदा स्वकाव्यव्याख्यानं वैरमत्सरवर्जनम् ।
परोन्मेषजिगीषा च व्युत्पत्त्यै सर्वशिष्यता ॥ १४ ॥
पाठस्यावसरज्ञत्वं श्रोतृचित्तानुवर्तनम् ।
इङ्गिताकारवेदित्वमुपादेयनिबन्धनम् ॥ १५ ॥
उपदेशविशेषोक्तिरदीर्घरससंगतिः ।
स्वसूक्तप्रेषणं दिक्षु परसूक्तपरिग्रहः ॥ १६ ॥
वैदग्ध्यं पटुताभङ्गिर्निःसङ्गैकान्तनिर्वृतिः ।
आशापाशपरित्यागः संतोषः सत्त्वशीलता ॥ १७ ॥

अयाचकत्वमग्राम्यपदालापः कथास्वपि।
काव्यक्रियासु निर्बन्धो विश्रान्तिश्चान्तरान्तरा॥ १८॥
नूतनोत्पादने यत्नः साम्यं सर्वसुरस्तुतौ।
पराक्षेपसहिष्णुत्वं गाम्भीर्यं निर्विकारता॥ १९॥
अविकत्थनतादैन्यं परेषां नष्टयोजनम्।
पराभिप्रायकथनं परसादृश्यभाषणम्॥ २०॥
सप्रसादपदन्यासः समंवादार्थसंगतिः।
निर्विरोधरसव्यक्तिर्युक्तिर्व्याससमासयोः॥ २१॥
प्रारब्धकाव्यनिर्वाहः प्रवाहश्चतुरो गिराम्।
शिक्षाणां शतमित्युक्तं युक्तं प्राप्तगिरः कवेः॥ २२॥
इति बहुतरशिक्षालक्षणक्षीणदोषे
प्रभवति गतनिद्रे प्रातिभे सुप्रभाते।
कविरविरविलुप्तव्याप्तिभिः सूक्तपादै-
र्नयति नवनवत्वं भावभावस्वभावम्॥ २३॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृते कविकण्ठाभरणे [प्राप्तगिरः कवेः शिक्षाकथनं] द्वितीयः संधिः।

---

तृतीयः संधिः।

अथ शिक्षितस्य कवेः सूक्तिचमत्कारमाह—

सुकविरतिशयार्थी वाक्चमत्कारलोभा-
दभिसरति मनोज्ञे वस्तुशब्दार्थसार्थे।
भ्रमर इव वसन्ते पुष्पकान्ते वनान्ते
नवकुसुमविशेषामोदमास्वादलोलः॥ १॥

नहि चमत्कारविरहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वम्।

एकेन केनचिदनर्घमणिप्रभेण
काव्यं चमत्कृतिपदेन विना सुवर्णम्।
निर्दोषलेशमपि रोहति कस्य चित्ते
लावण्यहीनमिव यौवनमङ्गनानाम्॥ २॥

चमत्कारविरहो यथा मालवरुद्रस्य—

'वेल्लत्पल्लव संमिलल्लत लसत्पुष्प स्फुटत्कुड्मल
स्फूर्जद्गुच्छभर क्वणन्मधुकरक्रीडाविनोदाकर ।
रक्ताशोक सखे दयां कुरु हर प्रारब्धमाडम्बरं
प्राणाः कण्ठमुपागताः प्रियतमो दूरे त्वमेवंविधः ॥'

चमत्कारो यथा कालिदासस्य[1]—

'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥'

तत्र दशविधश्चमत्कारः—अविचारितरमणीयः, विचार्यमाणरमणीयः, समस्तसूक्तव्यापी, सूक्तैकदेशदृश्यः, शब्दगतः, अर्थगतः, शब्दार्थगतः, अलंकारगतः, रसगतः, प्रख्यातवृत्तिगतश्च ।

अविचारितरमणीयो यथा मम शशिवंशे—

'शूराः सन्ति सहस्रशः सुचरितैः पूर्णं जगत्पण्डितैः
संख्या नास्ति कलावतां बहुतरैः शान्तैर्वनान्ताः श्रिताः ।
त्यक्तुं यः किल वित्तमुत्तममतिः शक्नोति जीवाधिकं
सोऽस्मिन्भूमिविभूषणं शुभनिधिर्भव्यो भवे दुर्लभः ॥'

विचार्यमाणरमणीयो यथा मम पद्यकादम्बर्याम्—

'अङ्गेऽनङ्गज्वरहुतवहश्चक्षुषि ध्यानमुद्रा
कण्ठे जीवः करकिसलये दीर्घशायी कपोलः ।
अंसे वीणा कुचपरिसरे चन्दनं वाचि मौनं
तस्याः सर्वं स्थितमिति न तु त्वां विना क्वापि चेतः ॥'

---

१. अत्र कालिदासस्य नाम प्रमादेन लिखितं भाति, यतः प्रसिद्धोऽयं श्लोको यशो-वर्मणः.

समस्तसूक्तव्यापी यथा मम शशिवंशे—

'माधुर्यानुभवेऽपि ते सुवदने तीक्ष्णाः कटाक्षाः परं
पर्यन्तस्थिततारका अपि नृणां रागानुबन्धोद्यताः।
नैवोज्झन्ति विवेकिनश्चपलतामुत्सेकसंवादिनी-
माश्चर्यं श्रवणौ स्पृशन्ति च पुनर्मारं च कुर्वन्त्यमी॥'

सूक्तैकदेशदृश्यो यथा मम पद्यकादम्बर्याम्—

'नित्यार्चा हृदयास्थितस्य भवतः पद्मोत्पलैश्चन्दनै-
स्त्वद्भक्तिस्त्वदनुस्मृतिश्च मनसि त्वन्नाममन्त्रे जपः।
सर्वत्रैव घनानुबन्धकलना त्वद्भावना सुभ्रुव-
स्तस्या जीवविमुक्तिरेव दिवसैर्देव त्वदाराधनात्॥'

शब्दगतो यथा मम चित्रभारतनाटके—

'इतश्चश्चच्चूतच्युतमधुचया वान्ति चतुराः
समीराः संतोषं दिशि दिशि दिशन्तो मधुलिहाम्।
निशान्ते कान्तानां स्मरसमरकेलिश्रममुषो
विजृम्भन्ते जृम्भाकलितकमलामोदसुहृदः॥'

अर्थगतो यथा मम लावण्यवत्याम्—

'सदासक्तं शैत्यं विमलजलधारापरिचितं
घनोल्लासः क्ष्माभृत्पृथुकटकपाती वहति यः।
विधत्ते शौर्यश्रीश्रवणनवनीलोत्पलरुचिः
स चित्रं शत्रूणां ज्वलदनलतापं भवदसिः॥'

शब्दार्थगतो यथा मम पद्यकादम्बर्याम्—

'किंचित्कुञ्चितकामकार्मुकलतामैत्री विचित्रा भ्रुवो-
र्नर्मोक्तिः स्मितकान्तिभिः कुसुमिता प्रागल्भ्यगर्भा गिरः।
रागोत्सङ्गनिषङ्गिभिः सरसतासंवादिभिर्विभ्रमै-
रायुष्यं परमं तया रतिपतेः प्राप्तं मृगाक्ष्या वयः॥'

अलंकारगतो यथा मम लावण्यवत्याम्—

'स्तनौ स्तब्धौ तीक्ष्णं नयनयुगलं निम्नमुदरं
भ्रुवोर्वक्रा वृत्तिर्विहितमुनिमारोऽधरमणिः।

तथासन्ने दैवादियति विषमे दुर्जनगणे
गुणी मध्ये हारः स्पृशति तव दोलातरलताम् ॥'

रसगतो यथा मम कनकजानक्याम्—

'अत्रार्यः खरदूषणत्रिशिरसां नादानुबन्धोद्यमे
रुन्धाने भुवनं त्वया चकितया योद्धा निरुद्धः क्षणम् ।
सस्नेहाः सरसाः सहासरभसाः सभ्रूभ्रमाः सस्पृहाः
सोत्साहास्त्वयि तद्बले च निदधे दोलायमाना दृशः ॥'

प्रख्यातवृत्तिगतो यथा मम शशिवंशे—

'अग्रं गच्छत यच्छत स्वपृतनां व्यूहक्षितिं रक्षत
क्षोणीं पश्यत नश्यत द्रुततरं मा मा स्थितिं मुञ्चत ।
यत्नात्तिष्ठत पृष्ठतस्तनुभिदामुग्रा गतिः पत्रिणा-
मित्यासीज्जनभञ्जने रथपथे पार्थस्य पृथ्वी श्रुतिः ॥'

इत्युक्त एष सविशेषचमत्कृतीनां
सारः प्रकारपरभागविभाव्यमानः ।
कर्पूरवेध इव वाङ्मधुगन्धयुक्ते-
श्चैत्रासवस्य सहकाररसाधिवासः ॥ २ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृते कविकण्ठाभरणे चमत्कारकथनं तृतीयः संधिः ।

---

चतुर्थः संधिः ।

अथ गुणदोषविभागः—

काव्यैकपात्रविलसद्गुणदोषदुग्ध-
पाथःसमूहपृथगुद्धरणे विदग्धाः ।
जानन्ति कर्तुमभियुक्ततया विभागं
चन्द्रावदातमतयः कविराजहंसाः ॥ १ ॥

तत्र शब्दवैमल्यमर्थवैमल्यं रसवैमल्यमिति त्रयः काव्यगुणाः । शब्दकालुष्यमर्थकालुष्यं रसकालुष्यमिति काव्यदोषाः । सगुणं निर्गुणं सदोषं निर्दोषं सगुणदोषं च काव्यम् ।

शब्दवैमल्यं यथा मम पद्यकादम्बर्याम्—

'तत्कालोपनते वयस्यनिधने हा पुण्डरीकेति त-
न्मोहव्यञ्जनमश्मभञ्जनमलं जीवस्य संतर्जनम् ।
कुञ्जव्यापि कपिञ्जलेन करुणं निस्पन्दमाक्रन्दितं
येनाद्यापि च तैः स्मृतेन हरिणैः शष्पं परित्यज्यते ॥'

अर्थवैमल्यं यथा मम शशिवंशे—

'स्निग्धश्यामलशाद्वले फलतरुच्छायानिपीतातपे
चञ्चद्वीचिचयोच्छलत्कलकले निःसङ्गगङ्गातटे ।
अन्योन्याभिमुखोपविष्टहरिणे स्वस्थैर्यदि स्थीयते
तत्का श्रीः किमकाण्डभङ्गुरसुखैर्मोहस्य दत्तोऽञ्जलिः ॥'

रसवैमल्यं यथा मम पद्यकादम्बर्याम्—

'अथोद्ययौ बालसुहृत्स्मरस्य श्यामाधवः श्यामललक्ष्मभङ्ग्या ।
तारावधूलोचनचुम्बनेन लीलाविलीनाञ्जनबिन्दुरिन्दुः ॥'

शब्दकालुष्यं यथा भट्टश्रीशिवस्वामिनः[1]—

'उत्खातप्रखरा सुखासुखसखी खड्गासिता खेलगा
वैशृङ्खल्यखलीकृताखिलखला खे(खा)त्खेटकैः ख्यापिता ।
खेटादुत्खनितुं निखर्वमनसां मौख्यं मुखात्खक्खटं
निःसंख्यान्यनिखर्वसर्वमणिभूराख्यातु संख्यानि वः ॥'

अर्थकालुष्यं यथा तस्यैव—

'पित्रापि त्रायते या न खलु खलधृताज्ञानमात्रापमात्रा
स्योनस्योनस्थितेर्भूरनुनयविरमद्दामपाशाप्यपाशा ।
वर्षावर्षाम्बुपातात्रुटिततृणवसत्याश्रियातां श्रियातां
सौरी सौरीष्टयाग्रे सरदिह जनतां साश्रुवानांश्रुवानाम् ॥'

---

१. रत्नाकरादिसमकालीनः शिवस्वामिकविः. 'वाक्पथ(?)द्विपदीशतान्यथ महा-काव्यानि सप्त क्रमाद्भक्त्यप्रत्यहनिर्मितस्तुतिकथालक्षाणि चैकादश । कृत्वा नाटकनाटि-काप्रकरणप्राणान्प्रबन्धान्बहून्विभ्राम्यत्यधुनापि नातिशयिता वाणी शिवस्वामिनः ॥' इति [illegible] श्लोकः

रसकालुष्यं यथा भट्टनारायणस्य वेणीसंहारे—

'भानुमत्या नकुलप्राणिस्वप्नदर्शने पाण्डवनकुलस्वैरसंगमेर्ष्यासद्भावश्चक्रवर्तिमहिष्याः सामान्यनीचवनितावत् ॥'

सगुणं यथा कालिदासस्य—

'श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासा-
न्हन्तैकस्थं क्वचिदपि न ते चण्डि सादृश्यमस्ति ॥'

निर्गुणं यथा चन्द्रकस्य—

'स्तनौ सुपीनौ कठिनौ ठिनौ ठिनौ कटिर्विशाला रभसा भसा भसा ।
मुखं च चन्द्रप्रतिमं तिमं तिमं अहो सुरूपा तरुणी रुणी रुणी ॥'

सदोषं यथा भट्टश्रीशिवस्वामिनः—

'आद्यत्वावधि शिण्ढि शिण्ढि दृढतागूढानि गूढेतरां
प्रौढिं ढौकय पिण्ढि पिण्ढि च रुजं रूढापरूढां तया ।
मूढं मूढममूढयस्व हृदयं लीढ्वाथ मूढ्वा तमः
सोऽव्यूढामिति च प्रभापरिवृढाव्यूढा द्रढिम्नेस्तु वः ॥'

निर्दोषं यथा श्रीभीमसाहेः सांधिविग्रहिकस्येन्द्रभानोः[1]—

'स्नातुं वाञ्छसि किं मुधैव धवलक्षीरोदफेनच्छटा-
च्छायाहारिणि वारिणि द्युमरितो दिक्पूरविस्तारिणि ।
आस्ते ते कलिकालकल्मषमषीप्रक्षालनैकक्षमा
कीर्तिः संनिहितैव सप्तभुवनस्वच्छन्दमन्दाकिनी ॥'

सगुणदोषं यथा भट्टमयूरस्य[2]—

'अस्तव्यस्तत्वशून्यो निजरुचिरनिशानश्वरं(रः) कर्तुमीशो
विश्वं वेश्मेव दीपः प्रतिहततिमिरं यः प्रदेशास्थितोऽपि ।

---

१. सुवृत्ततिलकेऽयमेव श्लोको रिस्सुनाम्ना लिखितः, तस्मादिन्द्रभानोरेव रिस्सुरिति नामान्तरमिति भाति. २. अयं सूर्यशतककर्ता मयूरकविरुज्जयिनीप्रान्ते [illegible] समुत्पन्न इति सुप्रसिद्धमेव.

दिक्या(का)लापेक्षयासौ त्रिभुवनमटतस्तिग्मभानोर्नवाख्यां
यातः शातक्रतव्यां दिशि दिशतु शिवं शोचिषामुद्गमो वः ॥'

इति गदितगुणार्थी सक्तनिर्दिष्टदोषः
कविरुचिरपदस्थश्चक्रवर्तित्वसिद्ध्यै ।
किमपि कृतविवेकः साधुमध्याधमानां
नृप इव परिरक्षेत्संकरं वर्णवृत्तेः ॥ २ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृते कविकण्ठाभरणे गुणदोषविभागश्चतुर्थः संधिः ।

---

पञ्चमः संधिः ।

अथ परिचयचारुत्वमाह—

नहि परिचयहीनः केवले काव्यकष्टे
कुकविरभिनिविष्टः स्पष्टशब्दप्रविष्टः ।
विबुधसदसि पृष्टः क्लिष्टधीर्वेत्ति वक्तुं
नव इव नगरान्तर्गह्वरे कोऽप्यधृष्टः ॥ १ ॥

तत्र तर्कव्याकरणभरतचाणक्यवात्स्यायनभारतरामायणमोक्षोपायात्मज्ञानधातुवादरत्नपरीक्षावैद्यकज्यौतिषधनुर्वेदगजतुरगपुरुषलक्षणद्यूतेन्द्रजालप्रकीर्णेषु परिचयः कविसाम्राज्यव्यञ्जनः ।

तर्कपरिचयो यथा मम पद्यकादम्बर्याम्—

'यत्प्राप्यं न मनोरथैर्न वचसा स्वप्नेऽपि दृश्यं न य-
त्तत्रापि स्मरविप्रलब्धमनसां लाभाभिमानग्रहः ।
मोहोत्प्रेक्षितशुक्तिकारजतवत्प्रायेण यूनां भ्रमं
दत्ते तैमिरिकद्विचन्द्रसदृशं खे नूनमाशाकृषिः ॥'

व्याकरणपरिचयो यथा भट्टमुक्तिकलशस्य—

'द्विगुरपि सद्वन्द्वोऽहं गृहे च मे सततमव्ययीभावः ।
तत्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः ॥'

---

१. बिल्हणकवेः प्रपितामहो भट्टमुक्तिकलश इति विक्रमाङ्कदेवचरितेऽष्टादशे सर्गे दृश्यते.

भरतपरिचयो यथा भट्टश्रीशिवस्वामिनः—

'आतन्वन्सरसां स्वरूपरचनामानन्दि बिन्दूदयं
भावग्राहि शुभप्रवेशकगुणं गम्भीरगर्भस्थिति ।
उच्चैर्वृत्ति सपुष्करव्यतिकरं संसारविष्कम्भकं
भिन्द्याद्वो भरतस्य भाषितमिव ध्वान्तं पयो यामुनम् ॥'

चाणक्यपरिचयो यथा मम पद्यकादम्बर्याम्—

'स्वामी प्रमादेन मदेन मन्त्री कोपेन राष्ट्रं व्यसनेन कोषः ।
छिद्रेण दुर्गं विषमेण सैन्यं लोभेन मित्रं क्षयमेति राज्ञाम् ॥'

वात्स्यायनपरिचयो यथा भट्टदामोदरगुप्तस्य[1]—

'अधरे बिन्दुः कण्ठे मणिमाला कुचयुगे शशप्लुतकम्[2] ।
तव सूचयन्ति सुन्दरि कुसुमायुधशास्त्रपण्डितं रमणम् ॥'

भारतपरिचयो यथा मम देशोपदेशे—

'भगदत्तप्रभावाढ्या कर्णशल्योत्कटस्वना ।
सेनेव कुरुराजस्य कुट्टनी किं तु निष्कृपा ॥'

रामायणपरिचयो यथा भट्टवाचस्पतेः—

'जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥'

मोक्षोपायपरिचयो यथा मम मुक्तावल्याम्—

'निरासङ्गा प्रीतिर्विषयनियमोऽन्तर्न तु बहिः
स्वभावे भावानां क्षयजुषि विमर्शः प्रतिदिनम् ।
अयं संक्षेपेण क्षपिततमसामक्षयपदे
तपोदीक्षाक्षेपक्षपणनिरपेक्षः परिकरः ॥'

---

१. अयं कुट्टनीमतग्रन्थकर्ता दामोदरगुप्तः कश्मीरमहाराजस्य जयापीडस्य सचिव आसीत्. जयापीडराज्यसमयस्तु ७५५ मितख्रिस्तसंवत्सरादारभ्य ७८६ मितसंवत्सरपर्यन्तम्. २. इयमार्या कुट्टनीमते ४०२ एतत्संख्याविशिष्टा वर्तते. बिन्दुमणिमालाशशप्लुतकलक्षणं वात्स्यायनकामसूत्रे द्वितीयेऽधिकरणे चतुर्थपञ्चमाध्याययोर्द्रष्टव्यम्.

आत्मज्ञानपरिचितिर्यथा मम चित्रभारतनाम्नि नाटके—

'पृथुशास्त्रकथाकन्थारोमन्थेन वृथैव किम्।
अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम्॥

धातुवादपरिचयो यथा राजशेखरस्य—

'नखदलितहरिद्राग्रन्थिगौरे शरीरे
स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः।
बलवति सति यस्मिन्सार्धमावर्त्य हेम्ना
रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि॥

रत्नपरीक्षापरिचयो भट्टभल्लटस्य—

'द्रविणमापदि भूषणमुत्सवे शरणमात्मभये निशि दीपकः।
बहुविधोऽर्थ्युपकारभरक्षमो भवति कोऽपि भवानिव सन्मणिः॥

वैद्यकपरिचयो यथा मम पद्यकादम्बर्याम्—

'अङ्गं चन्दनपङ्कपङ्कजबिसच्छेदावलीनं मुहु-
स्तापः शाप इवैष शोषणपटुः कम्पः सखीकम्पनः।
श्वासाः संवृततारहाररुचयः संभिन्नचीनांशुका
जातः प्रागतिदाहवेदनमहारम्भः स तस्या ज्वरः॥

ज्योतिःशास्त्रपरिचयो यथा विद्यानन्दस्य—

'द्यामालोकयतां कलाः कलयतां छायाः समाचिन्वतां
क्लेशः केवलमङ्गुलीर्गणयतां मौहूर्तिकानामयम्।
धन्या सा रजनी तदेव सुदिनं पुण्यः स एव क्षणो
यत्राज्ञातचरः प्रियानयनयोः सीमानमेति प्रियः॥'

धनुर्वेदपरिचयो यथा मम कनकजानक्याम्—

'आर्यस्यास्त्रघनौघलाघववती संधानसंबन्धिनी
स्थाणुस्थानकसौष्ठवप्रणयिनी चित्रक्रियालंकृतिः।
निष्पन्देन मयातिविस्मयमयी सत्यास्थितमत्यया
संहारे खरदूषणत्रिशिरसामेषैव दृष्टा स्थितिः॥'

गजलक्षणपरिचयो यथा मम कनकजानक्याम्—

'कर्णाभ्यर्णविकीर्णचामरमरुद्विस्तीर्णनिःश्वासवा-
न्छत्रच्छत्रविराजिराज्यविभवद्वेषी विलीनेक्षणः ।
स्मृत्वा राघव कुञ्जरः प्रियतमामेकाकिनीं कानने
संत्यक्तां चिरमुक्तभोगकवलः क्लेशोष्मणा शुष्यति ॥'

तुरगलक्षणपरिचयो यथा ममामृततरङ्गनाम्नि काव्ये—

'आवर्तशोभी पृथुमन्त्वराशिः फेनावदातः पवनोरुवेगः ।
गम्भीरघोषोऽद्रिविमर्दखेदादश्वाकृतिं कर्तुमिवोद्यतोऽब्धिः ॥
उच्चैःश्रवाः शक्रमुपाजगाम स विश्वसाम्राज्यजयप्रदोऽश्वः ।
जग्राह हेलाघनशङ्खशब्दनिर्वेदिताशेषशुभं तमिन्द्रः ॥' (युग्मम्)

पुरुषलक्षणपरिचयो यथा कालिदासस्य—

'व्यूढोरस्को वृषस्कन्धः सालप्रांशुर्महाभुजः ।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥'

द्यूतपरिचयो यथा चन्द्रकस्य—

'यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्थं नेयौ रजनिदिवसौ तोलयन्द्वाविवाक्षौ
कालः काल्या सह बहुकलः क्रीडति प्राणिसारैः ॥'

इन्द्रजालपरिचयो यथा श्रीहर्षस्य—

'एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शंकरोऽयं
दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः ।
एषोऽप्यैरावणस्थस्त्रिदशपतिरमी देवि देवास्तथान्ये
नृत्यन्त्यो व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥'

प्रकीर्णे चित्रपरिचयो यथा भगवतो व्यासस्य—

'अतथ्यान्यपि तथ्यानि दर्शयन्ति विचक्षणाः ।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः ॥'

देशपरिचयो यथा मम शशिवंशे—

'भोजैर्भञ्जनभीरुभिर्विलुलितं व्यामीलितं मालवै-
मद्रैर्विद्रुतमेव यातमसकृन्मार्गादधो मागधैः ।
वङ्गानामभिमन्युकङ्कणरवैर्व्रीते पुरः सूचिते
मीनैः संकुचितं परस्परधृतैर्नीरन्ध्रमन्ध्रैः स्थितम् ॥'

वृक्षपरिचयो यथा मम कनकजानक्याम्—

'जम्बूबिम्बकदम्बनिम्बबकुलप्लक्षाक्षभल्लातक-
द्राक्षाकिंशुककर्णिकारकदलीजम्बीरकोदुम्बरैः ।
सा संतानकबिल्वतिल्वतिलकश्लेष्मातकारग्वध-
न्यग्रोधार्जुनशातनासनवनश्यामान्ददर्शाश्रमान् ॥'

वनेचरपरिचयो यथा मम तत्रैव—

'वामस्कन्धनिषण्णशार्ङ्गकुटिलप्रान्तार्पिताधोमुख-
स्यन्दच्छोणितलम्बमानशशकान्पाणिस्खलच्चामरान् ।
ज्यान्तप्रोतकपोतपोतनिपतद्रक्ताक्ततूणीरका-
न्सापश्यत्करिकुम्भभेदजनिताक्रन्दान्पुलिन्दान्पुरः ॥'

औदार्यपरिचयो यथा मम चतुर्वर्गसंग्रहे—

'मान्यः कुलीनः कुलजात्कलावान्विद्वान्कलाज्ञाद्विदुषः सुशीलः ।
धनी सुशीलाद्धनिनोऽपि दाता दातुर्जिता कीर्तिरयाचकेन ॥'

अचेतनचेतनाध्यारोपपरिचयो यथा मच्छिष्यमहाश्रीभट्टोदयसिंहस्य ललिताभिधाने महाकाव्ये—

'इह विकसदशोकास्तोकपुष्पोपकारै-
रयमतिशयरक्तः सक्तसुस्निग्धभावः ।
त्रिभुवनजयसज्जः प्राज्यसाम्राज्यभाजः
प्रथयति पृथुमैत्रीं पुष्पचापस्य चैत्रः ॥'

भक्तिपरिचयो यथास्यैव भक्तिभवनाम्नि महाकाव्ये—

'बाल्यादेव निरर्गलप्रणयिनी भक्तिर्भवानीपतौ
जन्माभ्यासविकासवासितमनःसंवाससंदायिनी ।

प्रायः प्राक्तनकर्मनिर्मितमहामोहप्ररोहापहा
भव्यानां भवभीतिभञ्जनसखी संजायते सन्मतिः ॥'

विवेकपरिचयो यथा मच्छिष्यराजपुत्रलक्ष्मणादित्यस्य—

'आशापाशविमुक्तियुक्तममलं संतोषमान्यं मनः
सेवायामविवर्जितं विहरणं मायाविहीनं वचः ।
चण्डीशार्चनमात्मशुद्धिजननी गङ्गेव सत्संगतिः
सोऽयं संतरणे परः परिकरः संसारवारां निधेः ॥'

प्रशमपरिचयो यथा मम चतुर्वर्गसंग्रहे—

'चित्तं वातविकासिपांसुसचिवं रूपं दिनान्तातपं
भोगं दुर्गतगेहबन्धचपलं पुष्पस्मितं यौवनम् ।
स्वप्नं बन्धुसमागमं तनुमपि प्रस्थानपुण्यप्रपां
नित्यं चिन्तयतां भवन्ति न सतां भूयो भवग्रन्थयः ॥'

इत्युक्ता रुचिरोचिता परिचयप्राप्तिर्विभागैर्गिरां
दिङ्मात्रेण विचित्रवस्तुरचनासंश्रीपवित्रीकृता ।
यद्यस्त्यत्र नवोपदेशविषये लेशोऽप्युपादेयता
तत्सद्भिर्गुणकौतुकादवसरः श्रोतुं समाधीयताम् ॥ २ ॥

कृत्वा निश्चलदैवपौरुषमयोपायं प्रसूत्यै गिरां
क्षेमेन्द्रेण यदर्जितं शुभफलं तेनास्तु काव्यार्थिनाम् ।
निर्विघ्नप्रतिभाप्रभावसुभगा वाणी प्रमाणीकृता
सद्भिर्वाग्भवमन्त्रपूतविततश्रोत्रामृतस्यन्दिनी ॥ ३ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृते कविकण्ठाभरणे परिचयप्राप्तिः पञ्चमः संधिः ।

काश्मीरेषु पृथुप्रतापसवितुः कीर्त्यंशुतारापतेः
प्रौढारातिवनानलस्य धनदस्येन्द्रस्य भूमण्डले ।
विश्वाकारवतः पुनः कलियुगे विष्णोरिवोत्साहिनो
राज्ये श्रीमदनन्तराजनृपतेः काव्योदयोऽयं कृतः ॥

इति कविकण्ठाभरणं समाप्तम् ।

## महाकविश्रीभल्लटकृतं

# भल्लटशतकम् ।

युष्माकमम्बरमणेः प्रथमे मयूखा-
स्ते मङ्गलं विदधतूदयरागभाजः ।
कुर्वन्ति ये दिवसजन्ममहोत्सवेषु
सिन्दूरपाटलमुखीरिव दिक्पुरंध्रीः ॥ १ ॥

बद्धा यदर्पणरसेन विमर्दपूर्व-
मर्थान्कथं झटिति तान्प्रकृतान्न दद्युः ।
चोरा इवातिमृदवो महतां कवीना-
मर्थान्तराण्यपि हठाद्वितरन्ति शब्दाः ॥ २ ॥

काचो मणिर्मणिः काचो येषां तेऽन्ये हि देहिनः ।
सन्ति ते सुधियो येषां काचः काचो मणिर्मणिः ॥ ३ ॥

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ ४ ॥

द्रविणमापदि भूषणमुत्सवे शरणमात्मभये निशि दीपिका ।
बहुविधाभ्युपकारभरक्षमो भवति कोऽपि भवानिव सन्मणिः ॥ ५ ॥

---

१. ख्रिस्तसंवत्सरीयदशमशतकसमाप्तिसमये विद्यमानेन श्रीमदभिनवगुप्ताचार्येणास्य शतकस्य बहवः श्लोका लोचनाख्यायां ध्वन्यालोकव्याख्यायामुदाहृताः सन्ति, तस्मादयं भल्लटकविः किंचिदूननवशतवर्षेभ्योऽपि प्राचीनोऽस्ति. भाति चायं काश्मीरक एव. अस्य शतकस्य श्लोकाः काव्यप्रकाशादिषु, सुभाषितावल्यादिषु, क्षेमेन्द्रग्रन्थेषु च बहवः समुपलभ्यन्ते. एतच्छतकमपहायान्यः कोऽपि ग्रन्थ एतत्कृतो न प्राप्तः. केषुचिच्छार्ङ्गधरपद्धतिपुस्तकेषु कैश्चन महापण्डितैः 'भल्लटः' इति नामाश्रुतपूर्वं पश्यद्भिः 'भट्टमल्लः', 'मल्लभट्टः' इत्यादि शोधनमपि कृतमस्ति. आसीत्कश्चन धातुपाठप्रणेता भट्टमल्लोऽपि, यो मल्लिनाथेन माघादिटीकासु स्मृतोऽस्ति. २. 'युष्माकम्' इत्यादि मङ्गलाचरणश्लोकः सुभाषितावलौ प्रमादाद्भगवतामृतदत्तनाम्ना समुद्धृतोऽस्ति. एवमन्येऽपि केचनात्रत्याः श्लोकाः सुभाषितावलि-शार्ङ्गधरपद्धत्यादिष्वन्यकविनाम्ना समुद्धृता दृश्यन्ते. ३. 'निशिदीपकः' इति सुभाषितावलीपाठः. ४. 'अभ्युपकार-' इति सुभा०.

श्रीर्विशृङ्खलखलाभिसारिका वर्त्मभिर्घनतमोमलीमसैः ।
शब्दमात्रमपि सोढुमक्षमा भूषणस्य गुणिनः समुत्थितम् ॥ ६ ॥

माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां
स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्यं गते ।
तृष्णे त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना
यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥ ७ ॥

पततु वारिणि यातु दिगन्तरं विशतु वह्निमथ व्रजतु क्षितिम् ।
रविरमावियतास्य गुणेषु का सकललोकचमत्कृतिषु क्षतिः ॥ ८ ॥

सद्वृत्तयः सदसदर्थविवेकिनो ये
ते पश्य कीदृशममुं समुदाहरन्ति ।
चोरासतीप्रभृतयो ब्रुवते यदस्य
तद्गृह्यते यदि कृतं तदहस्करेण ॥ ९ ॥

पातः पूष्णो भवति महते नोपतापाय यस्मा-
त्कालेनास्तं क इह न ययुर्यान्ति यास्यन्ति चान्ये[1] ।
एतावत्तु व्यथयतितरां लोकबाह्यैस्तमोभि-
स्तस्मिन्नेव प्रकृतिमहति व्योम्नि लब्धोऽवकाशः ॥ १० ॥

पङ्क्तौ विशन्ति गणिताः प्रतिलोमवृत्त्या
पूर्वे भवेयुरियताप्यथवा त्रपेरन् ।
सन्तोऽप्यसन्त इव चेत्प्रतिभान्ति भानो-
र्भासावृते नभसि शीतमयूखमुख्याः ॥ ११ ॥

गते तस्मिन्भानौ त्रिभुवनसमुन्मेषविरह-
व्यथां चन्द्रो नेष्यत्यनुचितमतो नास्त्यसदृशम् ।
इदं चेतस्तापं जनयतितरामत्र यदमी
प्रदीपाः संजातास्तिमिरहतिबद्धोद्धुरशिखाः ॥ १२ ॥

---

१. 'क इव न गता' इति सुभाषितावलि-शार्ङ्गधरयोः पाठः. २. 'व्यथयति यथा-लोक-' इति सुभा० शार्ङ्ग० पाठः.

सूर्यादन्यत्र यच्चन्द्रेऽप्यर्थासंस्पर्शि तत्कृतम्।
खद्योत इति कीटस्य नाम तुष्टेन केनचित्॥ १३॥

घनसंतमसमलीमसदशदिशि निशि यद्विराजसि तदन्यत्।
कीटमणे दिनमधुना तरणिकरस्थगितसितकिरणम्॥ १४॥

सत्त्वान्तःस्फुरिताय वा कृतगुणाध्यारोपतुच्छाय वा
तस्मै कातरमोहनाय महसो लेशाय मा स्वस्ति भूत्।
यच्छायाच्छुरणारुणेन खचिता खद्योतनाम्नामुना
कीटेनाहितयापि जङ्गममणिभ्रान्त्या विडम्ब्यामहे॥ १५॥

दन्तान्तकुन्तमुखसंततपातघात-
संताडितोन्नतगिरिर्गज एव वेत्ति।
पञ्चास्यपाणिपविपञ्जरपातपीडां
न क्रोष्टुकः श्वशिशुहुंकृतिनष्टचेष्टः॥ १६॥

अत्युन्नतिव्यसनिनः शिरसोऽधुनैष
स्वस्यैव चातकशिशुः प्रणयं विधत्ताम्।
अस्यैतदिच्छति यदि प्रततासु दिक्षु
ताः स्वच्छशीतमधुराः क्व नु नाम नापः॥ १७॥

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा।
पूर्वं निश्चितवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः॥ १८॥

तद्वैदग्ध्यं समुदितपयस्तोयतत्त्वं विवेक्तुं
संलापास्ते स च मृदुपदन्यासहृद्यो विलासः।
आस्तां तावद्बक यदि तथा वेत्सि किंचिच्छ्लथांसं
तूष्णीमेवासितुमपि सखे त्वं कथं मे न हंसः॥ १९॥

---

१. 'अर्थसंस्पर्शि' इति सुभा०. २. 'तरणिकरान्तरित-' इति सुभा० शार्ङ्ग०. ३. 'नाहि' इति सुभा० पाठः. ४. 'सर्वं निश्चितवानसि' इति सुभा०; 'सर्वं विस्मृतवानसि' इत्यपि पाठः. ५. 'आलापाः' इति सुभा०. ६. 'श्लथासं' इति सुभा०. ७. 'अपि' इति सुभा०.

पथि निपतितां शून्ये दृष्ट्वा निरावरणाननां
　　नवदधिघटीं गर्वोन्नद्धः समुद्धतकंधरः ।
निजसमुचितास्तास्ताश्चेष्टा विकारशताकुलो
　　यदि न कुरुते काणः काकः कदा नु करिष्यति ॥ २० ॥

नृत्यन्तः शिखिनो मनोहरममी श्राव्यं पठन्तः शुका
　　वीक्ष्यन्ते न त एष संप्रति रुषा वार्यन्त एवाधुना ।
पान्थस्त्रीगृहमिष्टलाभकथनाल्लब्धान्वयेनामुना
　　संप्रत्येत्य निरर्गलं बलिभुजा मायाविना भुज्यते ॥ २१ ॥

करभरभसात्क्रोष्टुं वाञ्छस्यहो श्रवणज्वरः
　　शरणमथवानृज्वी दीर्घा तथैव शिरोधरा ।
बहुगलबिलावृत्तिश्रान्तोच्चरिष्यति वाङ्मुखा-
　　दियति समये को जानीते भविष्यति कस्य किम् ॥ २२ ॥

अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः ।
कथं कमलनालस्य मा भूवन्भङ्गुरा गुणाः ॥ २३ ॥

किं दीर्घदीर्घेषु गुणेषु पद्म सितेष्ववच्छादनकारणं ते ।
अस्त्येव तान्पश्यति चेदनार्या त्रस्तेव लक्ष्मीर्न पदं विधत्ते ॥ २४ ॥

न पङ्कादुद्भूतिर्न जडसहवासव्यसनिता
　　वपुर्दृश्यं कान्त्या स्थलकमल रक्तद्युतिमुषा ।
व्यधास्यद्दुर्वेधा हृदयलघिमानं यदि न ते
　　त्वमेवैकं लक्ष्म्याः परममभविष्यः पदमिह ॥ २५ ॥

उच्चैरुच्चरतु चिरं झिल्ली वर्त्मनि तरुं समारुह्य ।
दिग्व्यापिनि शब्दगुणे शङ्खः संभावनाभूमिः ॥ २६ ॥

---

१. 'श्रव्यं' इति सुभा०. २. 'एतदनर्गलं' इति सुभा०. ३. 'पृथुगल–' इति सुभा०. ४. 'वपुर्दिग्धं कान्त्या स्थलनलिन रत्नद्युतिमुषा' इति सुभा०. 'न पङ्कात्' इत्यादि श्लोकः सुभाषितावलौ श्रीजयवर्धननाम्ना समुद्धृतोऽस्ति. ५. 'चीरी' इति सुभा०. अयं श्लोकः सुभाषितावलौ भागवतजयवर्धननाम्ना समुद्धृतः.

शङ्खोऽस्थिशेषः स्फुटितो मृतो वा प्रोच्छ्वास्यतेऽन्यश्वसितेन सत्यम् ।
किं तूच्चरत्येव न सोऽस्य शब्दः श्राव्यो न यो यो न सदर्थशंसी ॥ २७॥

यथापल्लवपुष्पास्ते यथापुष्पफलर्द्धयः ।
यथाफलर्द्धि स्वारोहा हा मातः क्वागमन्द्रुमाः ॥ २८ ॥

साध्वेव तद्विधावस्य वेधा क्लिष्टो न यद्व्यधात् ।
स्वरूपाननुरूपेण चन्दनस्य फलेन किम् ॥ २९ ॥

फलितघनविटपविघटितपटुदिनकर महसि लसति कल्पतरौ ।
छायार्थी कः पशुरपि भवति जरद्वीरुधां प्रणयी ॥ ३० ॥

ग्रथित एव मिथः कृतशृङ्खलैर्विषधरैरधिरुह्य महाजडः ।
मलयजः सुमनोभिरनावृतो यदत एव फलेन वियुज्यते ॥ ३१ ॥

चन्दने विषधरान्सहामहे वस्तु सुन्दरमगुप्तिमत्कुतः ।
रक्षितुं वद किमात्मगौरवं संचिताः खदिर कण्टकास्त्वया ॥ ३२ ॥

यत्किंचनानुचितमप्युचितानुबन्धि
किं चन्दनस्य न कृतं कुसुमं फलं वा ।
लज्जामहे भृशमुपक्रममेव यान्त-
स्तस्यान्तिकं परिगृहीतबृहत्कुठाराः ॥ ३३ ॥

लब्धं चिरादमृतवत्किममृत्यवे स्या-
द्दीर्घं रसायनवदायुरुत प्रदद्यात् ।
एतत्फलं यदयमध्वगशापदग्धः
स्तब्धः खलः फलति वर्षशतेन तालः ॥ ३४ ॥

अन्तः कर्कशता बहिश्च घटना मर्माविधैः कण्टकै-
श्छायामण्डलसंस्पृशां तनुभृतामुद्वेजिनी संस्थितिः ।
तन्नामास्तु विधेरिदं विलसितं बर्बूरशाखिन्सखे
शाखा ते फलशाखिनामपि वृतिः संपत्स्यते भूरुहाम् ॥ ३५ ॥

---

१. 'यदुच्छ्वासितेनोच्छ्वसते नु' इति सुभा०. २. 'पुष्पाढ्याः' इति सुभा०. ३. 'यथा-म्बुधा' इति सुभा०. ४. 'एष मिथः कृतशृङ्खलो' इति सुभा०. ५. 'अनाश्रितः' इति सुभा०. ६. 'न युज्यते' इति सुभा०. ७. 'सौष्ठवं' इति सुभा०. ८. 'यातुः' इति सुभा०. ९. 'कुठारः' इति सुभा०. १०. 'फलं फलति' इति सुभा०.

एष श्रीमानविरलगुणग्रामणीर्नारिकेल-
श्छाया यस्य प्रभवति चिरं घर्मशान्त्यै जनानाम् ।
तेनाम्भोभिः कतिचन जना वासरांस्तर्पयध्वं
दास्यत्येतच्छतगुणमयं वारि मूर्ध्ना दधानः ॥ ३६ ॥

छिन्नस्तत्समुहृत्स चन्दनतरुर्यस्मै पलाय्यागता
भोगाभ्याममुखामिकाः प्रतिदिनं ता विस्मृतास्तत्र वः ।
दंष्ट्राकोटिविषोल्कया प्रतिकृतं तस्य प्रहर्तुर्न चे-
त्कि तेनैव सह स्वयं न दलशो याताः स्थ भो भोगिनः ॥ ३७ ॥

संतोषः किमशक्तता किमथवा तस्मिन्नसंभावना
लोभो वायमुतानवस्थितिरियं प्रद्वेष एवाथवा ।
आस्तां खल्वनुरूपया सफलया पुष्पश्रिया दुर्विधे
संबन्धोऽननुरूपयापि न कृतः किं चन्दनस्य त्वया ॥ ३८ ॥

किं जातोऽसि चतुष्पथे घनतरच्छायोऽसि किं छायया
युक्तश्चेत्फलितोऽसि किं फलभरैराढ्योऽपि किं संनतः ।
हे सद्वृक्ष सहस्व संप्रति सखे शाखाशिखाकर्षण-
क्षोभामोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥ ३९ ॥

सन्मूलः प्रथितोन्नतिर्घनलसच्छायः स्थितः सत्पथे
सेव्यः सद्भिरितीदमाकलयता तालोऽध्वगेनाश्रितः ।
पुंसः शक्तिरियत्यसौ सफलता त्वद्यथवा श्वोऽथवा
काले क्वाप्यथवा कदाचिदथवा नैत्येव वेधाः प्रभुः ॥ ४० ॥

त्वन्मूले पुरुषायुषं गतमिदं गात्रेण संशुष्यता
क्षोदीयांसमपि क्षणं परमतः शक्तिः कुतः प्राणितुम् ।

---

१. 'यूयं' इति सुभा०. २. 'निधनं' इति सुभा०. ३. 'क्षोभैवाय च काननस्थिति-रियं' इति सुभा०. ४. 'यज्जातोऽसि चतुष्पथे घनलसच्छायोऽसि किं छायया संयुक्तः फलितोऽसि किं यदि फलैः पूर्णोऽसि किं संनतः' इति सुभा०. सुभाषितावली शार्ङ्गधरपद्धतौ चायं श्लोको मदन्तज्ञानवर्मणो नाम्ना समुद्धृतः. ५. 'स तु फलैस्त्वाथवा' इति सुभा०. ६. 'नैत्यत्र' इति सुभा०. ७. 'कालेन संशुष्यता' इति सुभा०.

तत्त्वस्त्यस्तु विवृद्धिमेहि महतीमद्यापि का नस्त्वरा
कल्याणैः फलितासि तालविटपिन्पुत्रेषु पौत्रेषु वा ॥ ४१ ॥
पश्यामः किमयं प्रपद्यत इति स्वल्पाभ्रसिद्धिक्रियै-
र्दर्पाद्दूरमुपेक्षितेन बलवत्कर्मेरितैर्मन्त्रिभिः ।
लब्धात्मप्रसरेण रक्षितुमथाशक्तेन मुक्त्वाशनिं
स्फीतस्तोदृगहो घनेन रिपुणा दग्धो गिरिग्रामकः ॥ ४२ ॥
साधूत्पातघनौघ साधु सुधियां ध्येयं धरायामिदं
कोऽन्यः कर्तुमलं तवैव घटते कर्मेदृशं दुष्करम् ।
सर्वस्यौपयिकानि यानि कतिचित्क्षेत्राणि तत्राशनिः
सर्वानौपयिकेषु दग्धसिकतारण्येष्वपां वृष्टयः ॥ ४३ ॥
लब्धायां तृषि गोमृगस्य विहगस्यान्यस्य वा कस्यचि-
दृष्ट्या स्याद्भवदीययोपकृतिरप्यास्तां दवीयस्यदः ।
अस्यात्यन्तमहाजलस्य जलदारण्योषरस्यापि किं
जातं पश्य पुनः पुरेव परुषा सैवास्य दग्धा छविः ॥ ४४ ॥
संत्यज्य पानाचमनोचितानि तोयान्तराण्यस्य सिसेविषोस्त्वाम् ।
निर्जैर्न जिह्वेषि जलैर्जनस्य जघन्यकार्यौपयिकैः पयोध ॥ ४५ ॥
आस्त्रीशिशु प्रथितयैष पिपासितेभ्यः
संरक्ष्यतेऽम्बुधिरपेयतयैव दूरात् ।
दंष्ट्राकरालमकरालिकरालिताभिः
किं भाययत्यपरमूर्मिपरम्पराभिः ॥ ४६ ॥
स्वमाहात्म्यश्लाघागुरुगहनगर्जाभिरभितः
क्रुशित्वा पुष्णासि श्रुतिकुहरमब्धे किमिति नः ।
इहैकश्चूडालो ध्वजनि कलशादस्य सकलैः
पिपासोरम्भोभिश्चुलकमपि नाहर्तुमशकः ॥ ४७ ॥

---

१. 'विचेष्टते' इति सुभा०. २. 'तावद्दहो' इति सुभा०. ३. 'भाययसि' इति सुभा०. ४. 'कुषित्वा' इति सुभाषितावलावशुद्धः पाठः. ५. 'क्लिश्नासि' इति सुभा०. ६. 'अभ्यर्णे' इति सुभा०. ७. 'नो भर्तु' इति सुभा०. सुभाषितावल्यां 'स्वमाहात्म्य—' इत्या-[illegible] पूर्वोत्तरार्धयोर्व्यत्ययोऽस्ति.

सर्वासां त्रिजगत्यपामियमसावाधारता तावकी
प्रोल्लासोयमथो तवाम्बुनिलये केयं महासत्त्वता ।
सेवित्वा बहुभङ्गभीषणतनुं त्वामेव वेलाचल-
ग्रावस्रोतसि पाप तापकलहो यत्क्वापि निर्वाप्यते ॥ ४८ ॥

नोद्वेगं यदि यासि यद्यवहितः कर्ण ददासि क्षणं
त्वां पृच्छामि यदम्बुधे किमपि तन्निश्चित्य देह्युत्तरम् ।
नैराश्यातिशयातिमात्रमनिशं निःश्वस्य यद्दृश्यसे
तृष्यद्भिः पथिकैः कियत्तदधिकं स्यादौर्वदाहादतः ॥ ४९ ॥

ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी
मुक्तौघाः सिकताः प्रवाललतिका शैवालमम्भः सुधा ।
तीरे कल्पमहीरुहाः किमपरं नाम्नापि रत्नाकरो
दूरे कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति ॥ ५० ॥

भिद्यतेऽनुप्रविश्यान्तर्यो यथारुच्युपाधिना ।
विशुद्धिः कीदृशी तस्य जडस्य स्फटिकाश्मनः ॥ ५१ ॥

चिन्तामणे भुवि न केनचिदीश्वरेण
मूर्ध्नि भृतोऽहमिति मा स्म सखे विषीदः ।
नास्त्येव हि त्वदधिरोहणपुण्यबीज-
सौभाग्ययोग्यमिह कस्यचिदुत्तमाङ्गम् ॥ ५२ ॥

संवित्तिरस्त्यथ गुणाः प्रतिभान्ति लोके
तद्धि प्रशस्यमिह कस्य किमुच्यतां वा ।
नन्वेवमेव सुमणे लुठ यावदायु-
स्त्वं मे जगत्प्रहसनेऽत्र कथाशरीरम् (?) ॥ ५३ ॥

चिन्तामणेस्तृणमणेश्च कृतं विधात्रा
केनोभयोरपि मणित्वमदः समानम् ।

---

१. 'असौ' इति सुभा०. २. 'अनुशया–' इति सुभा०. ३. 'नामापि' इति सुभा०.
४. 'धृतोऽस्मि यदि मा स्म ततो' इति सुभा०. ५. 'रोपणपुण्यबीज' इति सुभा०.

नैकोऽर्थितानि ददद‍र्थिजनाय खिन्नो
गृह्णन्नरत्तृणलवं तु न लज्जतेऽन्यः ॥ ९४ ॥

दूरे कस्यचिदेव कोऽप्यकृतधीर्नैवास्य वेत्त्यन्तरं
मानी कोऽपि न याचते मृगयते कोऽप्यल्पमूल्याशयः।
इत्थं प्रार्थितदानदुर्व्यसनिनो नौदार्यरेखोज्ज्वला
जाता नैपुणदुस्तरेषु निकषस्थानेषु चिन्तामणिः ॥ ९५ ॥

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः।
न संप्राप्तो वृद्धिं स यदि भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽयं न पुनरगुणाया मरुभुवः ॥ ९६ ॥

आम्राः किं फलभारनम्रशिरसो रम्याः किमूष्मच्छिदः
सच्छायाः कदलीद्रुमाः सुरभयः किं पुष्पिताश्चम्पकाः।
एतास्ता निरवग्रहोग्रकरभोल्लीढार्धरूढाः पुनः
शम्यो भ्राम्यसि मूढ निर्मरुति किं मिथ्यैव मर्तुं मरौ ॥ ९७ ॥

आ जन्मनः कुशलमण्वपि रे कुजन्म-
न्पांसो त्वया यदि कृतं वद तत्त्वमेव।
उत्थापितोऽस्यनलमारथिना यदर्थं
तुष्टेन तत्कुरु कलङ्कय विश्वमेतत् ॥ ९८ ॥

निःसाराः सुतरां लघुप्रकृतयो योग्या न कार्ये क्वचि-
च्छुष्यन्तोऽद्य जरत्तृणाद्यवयवाः प्राप्ताः स्वतन्त्रेण ये।
अन्तःसारपराङ्मुखेण धिगहो ते मारुतेनामुना
पश्यात्यन्तचलेन सद्म महतामाकाशमारोपिताः ९९ ॥

ये जात्या लघवः सदैव गणनां याता न ये कुत्रचि-
त्पद्भ्यामेव विमर्दिताः प्रतिदिनं भूमौ निलीनाश्चिरम्।

१. 'अल्पाशयः' इति सुभा०. २. निकषा स्थानेषु' इति सुभा०. ३. अयं श्लोकः शार्ङ्गधरपद्धतौ इन्दुराजनाम्ना, सुभाषितावलौ च यशसो नाम्ना समुद्धृतः. ४. 'अवरूढाः' इति सुभा०. ५. 'एतत्' इति सुभा०. ६. 'दुष्टेन' इति सुभा०. ७. 'वर्त्म' इति सुभा०.

उत्क्षिप्ताश्चपलाशयेन मरुता पश्यान्तरिक्षेऽधुना[1]
तुङ्गानामुपरि स्थितिं क्षितिभृतां कुर्वन्त्यमी पांसवः ॥ ६० ॥

हे[2] दन्दशूक तदयोग्यमपीश्वरस्त्वां
वात्सल्यतो[3] नयति नूपुरधाम सत्यम् ।
आवर्जितालिकुलझंकृति[4]मूर्छितानि
किं शिञ्जितानि भवता[5] क्षमतेऽत्र कर्तुम् ॥ ६१ ॥

कल्लोलवेल्लितदृषत्परुषप्रहारै[6]
रत्नान्यमूनि मकरालय मा वमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥ ६२ ॥

मौलौ सन्मणयो गृहं गिरिगुहा त्यागः किलात्मत्वचो
निर्यत्नोपनतैः स्ववृत्तिरनिलैरेकत्र चर्येदृशी ।
अन्यत्रानृजु वर्त्म वाग्द्विरमना दृष्टौ[7] विषं दृश्यते
यादृक्तामनु दीपको ज्वलति नो[8] भोगिन्सखे किन्त्विदम् ॥६३॥

भूयांस्यस्य मुखानि नाम विदितैवास्ते महाप्राणता[9]
कद्र्वाः सत्प्रसवोऽपि[10] यत्र कुपिते चिन्त्यं यथेदं जगत् ।
त्रैलोक्याद्भुतमीदृशं तु चरितं शेषस्य येनास्य सा
प्रोन्मृज्येव निवर्तिता विषधरज्ञातेयदुर्वर्णिका[11] ॥ ६४ ॥

लोके समस्त एवैकः श्लाघ्यः कोऽप्येष वासरः ।
जनैर्महत्तया नीतो यो न पूर्वैर्न चापरैः ॥ ६५ ॥

आबद्धकृत्रिमसटाजटिलांसभित्ति-
रारोपितो मृगपतेः पदवीं यदि श्वा ।

---

१. 'सखे' इति सुभा०. २. 'रे' इति सुभा०. ३. 'वाक्षभ्यतो' इति सुभा०. ४. 'सत्कृति–' इति सुभा०. ५. 'भवतः क्षम एष' इति सुभा०. ६. अयं श्लोकः सुभाषितावलौ भागवतत्रिविक्रमनाम्ना समुद्धृतः. तत्र पूर्वार्धे प्रथमद्वितीयपादयोर्व्यत्ययः. ७. 'च' इति सुभा०. ८. 'किं' इति सुभा०. ९. 'महाप्रसत्वता' इति सुभा०. १०. 'प्राकप्रसवोऽयमत्र' इति सुभा०. ११. 'विषधरज्ञातेऽपि' इति सुभा०.

मत्तेभकुम्भतटपाटनलम्पटस्य
नादं करिष्यति कथं हरिणाधिपस्य ॥ ६६ ॥

किमिदमुचितं शुद्धेः श्लिष्टं स्वपक्षसमुन्नतेः
फलपरिणतेर्युक्तं प्राप्तं गुणप्रणयस्य वा।
क्षणमुपगतः कर्णोपान्तं परस्य पुरःस्थिता-
न्विशिख निपतन्क्रूरं दूरान्नृशंस भिनत्सि यत् ॥ ६७ ॥

अमी ये दृश्यन्ते ननु सुभगरूपाः सफलता
भवत्येषां यस्य क्षणमुपगतानां विषयताम्।
निरालोके लोके कथमिदमहो चक्षुरधुना
समं जातं सर्वैर्न सममथवान्यैरवयवैः ॥ ६८ ॥

आहूतेषु विहंगमेषु मशको नायान्पुरो वार्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम्।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥ ६९ ॥

हेमकार सुधिये नमोऽस्तु ते दुस्तरेषु बहुशः परीक्षितुत्।
काञ्चनाभरणमश्मना समं यत्त्वयैवमधिरोप्यते तुलाम् ॥ ७० ॥

वृत्त एव स घटोऽन्धकूपक त्वां प्रसादमपि नेतुमक्षमः।
मुद्रितं त्वधमचेष्टितं त्वया तन्मुखाम्बुकणिकाः परीप्सता ॥ ७१ ॥

शतपदी सति पादशते क्षमा भुवि न गोष्पदमप्यतिवर्तितुम्।
किमियता द्विपदस्य हनूमतो जलनिधिक्रमणे विवदामहे ॥ ७२ ॥

न गुरुवंशपरिग्रहशौण्डता न च महागुणसंग्रहणादरः।
फलविधानकथापि न मार्गणे किमपि लुब्धकबालगृहेऽधुना ॥ ७३ ॥

तृणमणेर्मनुजस्य च तद्वतः किमुभयोर्विपुलाशयतोच्यते।
तनुतृणाग्रलवावयवैर्ययोरवसिते ग्रहणप्रतिपादने ॥ ७४ ॥

१. 'स्पष्टं सपक्ष-' इति सुभा०. २. 'प्राप्तुं गुणप्रणयस्य ते' इति सुभा०. ३. 'निहंसि' इति सुभा०. ४. 'एतत्' इति सुभा०. ५. 'अन्धकूप यस्त्वत्प्रसादमपनेतुं' इति सुभा०. ६. 'प्रतीच्छता' इति सुभा०. ७. 'जलधिविक्रमणे' इति सुभा०. ८. 'किमिह' इति सुभा०.

तनुतृणाग्रधृतेन हृतश्चिरं क [1]इव तेन न मौक्तिकशङ्कया ।
स जलबिन्दुरहो विपरीतदृग्जगदिदं वयमत्र सचेतनाः ॥ ७५ ॥

बुध्यामहे न बहुधापि वि[2]कल्पयन्तः
कैर्नामभिर्व्य[3]पदिशेम महामतींस्तान् ।
येषामशेषभुवनाभरणस्य हेम्न-
स्तत्त्वं विवेक्तुमुपलाः परमं प्रमाणम् ॥ ७६ ॥

संरक्षितुं कृषिमकारि कृषीवलेन
पश्यात्मनः प्रतिकृतिस्तृणपूरुषोऽयम् ।
स्तब्धस्य निष्क्रियतयास्तभियोऽस्य नून-
[4]मश्नन्ति गोमृगगणाः पुनरेव सस्यम् ॥ ७७ ॥

कस्यानिमेषवितते नयने दिवौको-
लोकादृते जगति ते अपि वै गृहीत्वा ।
[5]पिण्डप्रसारितमुखेन तिमे किमेत-
द्दृष्टं न बालिश विशद्बडिशं त्वयान्तः ॥ ७८ ॥

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयनेन महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक्प्रकटिता पुरुषोत्तमेन ॥ ७९ ॥

स्वल्पाशयः स्वकुलशिल्पविकल्पमेव
यः कल्पयन्स्खलति काचवणिक्पिशाचः ।
ग्रस्तः स कौस्तुभमणीन्द्रसपत्नरत्न-
निर्यत्न[6]गुम्फनकवैकटिकैर्व्ययान्तः ॥ ८० ॥

[7]तत्प्रत्यर्थितया वृतोऽनु कृतकः सम्यक्स्वतन्त्रो मया-
त्स्वस्थस्तान्न निपातयेदिति यथाकामं न सं[8]तोषितः ।

१. 'इह येन' इति सुभा०. २. 'विकल्पमानाः' इति सुभा०. ३. 'व्यपदिशाम' इति सुभा०. ४. 'अत्स्यन्ति' इति सुभा०. ५. 'पिण्डे' इति सुभा०. ६. 'गुम्फपटु' इति सुभा०. ७. 'तत्प्रार्थितया धृतो न तु कृतः' इति सुभा. ८. 'संपोषितः' इति सुभा०.

संगृध्यन्वृषदंश एष कुरुतां मूकः स्थितोऽप्यत्र किं
गेहे किं बहुनाधुना गृहपतेश्चौराश्चरन्त्याखवः ॥ ८१ ॥
एवं चेत्[1]सरसि स्वभावमहिमा जाड्यं किमेतादृशं
[2]यस्मादेव निसर्गतः सरलता किं ग्रन्थिमत्तेदृशी।
मूलं चेच्छुचि पङ्कजश्रुतिरियं कस्माद्गुणा यद्यमी
किं छिद्राणि सखे मृणाल भवतस्तत्त्वं न मन्यामहे ॥ ८२ ॥
ये[3] दिग्ध्वैव कृता विषेण कुसृतिर्येषां कियद्गण्यते
लोकं हन्तुमनागसं द्विरसना रन्ध्रेषु ये जाग्रति।
व्यालास्ते विदधत्यमी सदसतोश्चूडामणिं मूर्धभि-
र्नौचित्याद्गुणशालिनां क्वचिदपि भ्रंशोऽस्त्यलं चिन्तया ॥ ८३ ॥
अहो क्रौर्यं स्त्रीणां हतरजनि धिक्त्वामतिशठे
मृषा प्रक्रान्तेयं तिमिरकबरीविश्लथधृतिः।
अवक्तव्ये पाते जननयननाथस्य शशिनः
कृतं स्नेहस्यान्तोचितमुदधिमुख्यैर्न तु जडैः ॥ ८४ ॥
अहो गेहेनर्दी दिवसविजिगीषाज्वररुजा
प्रदीपोऽयं स्थाने ग्लपयति मृषामूनवयवान्।
उदात्तस्वच्छन्दाक्रमणहृतविश्वस्य तमसः
परिस्पन्दं द्रष्टुं मुखमपि च किं सोढममुना ॥ ८५ ॥
नामाप्यन्यतरोर्निमीलितमभूत्तत्तावदुन्मीलितं
प्रस्थाने [5]स्खलितस्ववर्त्मनि विधेरन्यैर्गृहीतः करः।
लोकश्चायमदृष्टदर्शनवशाद्दृग्[6]वैशसान्मोचितो
युक्तं काष्ठिक लूनवान्यदसि तामाम्रालिमाकालिकीम् ॥ ८६ ॥
वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः।

१. 'सरसस्वभावपरता' इति सुभा०. २. 'यद्यस्त्येव' इति सुभा०. ३. 'यान्' इति सुभा०. ४. 'मूर्ध्ना मणीन्' इति सुभा०. ५. स्खलतः' इति सुभा०. ६. 'दशादृग्वैशसादुद्धृतः' इति सुभा०.

तेऽप्यक्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥ ८७ ॥

ऊढा येन महाधुराः सुविषमे मार्गे सदैकाकिना
सोढो येन कदाचिदेव न निजे गोष्ठेऽन्यशौण्डध्वनिः ।
आसीद्यस्तु गवां गणस्य तिलकं तस्यैव संप्रत्यहो
धिक्कष्टं धवलस्य जातजरसो गोः पण्यमुद्घोष्यते ॥ ८८ ॥

अस्थानोद्योगदुःखं जहिहि नहि नभः पङ्क्संचारयोग्यं
स्वायासायैव साधो तव शलभ जवाभ्यासदुर्वासनेयम् ।
ते देवस्याप्यचिन्त्याः प्रचलितभुवनाभोगहेलावहेला-
मूलोत्खातानुमार्गा गतगिरिगुरवस्तार्क्ष्यपक्षाग्रवाताः ॥ ८९ ॥

चन्द्रेणैव तरङ्गभङ्गिबहुलं संवर्ध्यमानाम्भसो
दद्युर्जीवनमेव किं गिरिसरित्स्रोतांसि यद्यम्बुधेः ।
तेष्वेव प्रतिसंविधानविकलं पश्यत्सु साक्षिष्विव
द्राग्दर्पोद्धुरमागतेष्वपि न स क्षीयेत यद्यन्यथा ॥ ९० ॥

किलैकचुलुकेन यो मुनिरपारमब्धिं पपौ
सहस्रमपि घस्मरो विकृत एव तेषां पिबेत् ।
स संभवति किंचिदम्बरविकासिधाम्ना विना
सदप्यसदिव स्थितं स्फुरितमन्तरोजस्विनाम् ॥ ९१ ॥

ग्रावाणोऽत्र विभूषणं त्रिजगतो मर्यादया स्थीयते
नन्वत्रैव विभुः स्थितो हि विबुधाः संभूय पूर्णाशिषः ।
शेते चोद्गतनाभिपद्मविलसद्ब्रह्मेह देवः स्वयं
दैवादेव गतः स्वकुक्षिभृतये सोऽप्यम्बुधिर्निम्नगाः ॥ ९२ ॥

अनीर्ष्याः श्रोतारो मम वचसि चेद्वच्मि तदहं
स्वपक्षाद्भेतव्यं न तु बहु विपक्षात्प्रभवतः ।

---

१. 'तेऽपि क्रूर–' इति सुभा०. २. 'बहु न तु' इति सुभा०.

तमस्याक्रान्ताशे कियदिव[1] हि तेजोवयाविनः
स्वशक्त्या भासन्ते दिवसकृति सत्येव न पुनः ॥ ९३ ॥
एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं पाथसो
यो मुक्तामणिरित्यमंस्त स जडः शृण्वन्ननेकस्मादपि[2]।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने तत[3]-
स्तत्रोड्डीय गता[4] ममेत्यनुनिशं निद्राति नान्तः शुचा ॥ ९४ ॥
आस्तेऽत्रैव सरस्यहो बत कियान्संतोषपक्षग्रहो
हंसस्यास्य मनाङ् न धावति मनः[5] श्रीधाम्नि पद्मे क्वचित्।
सुप्तोऽद्यापि न[6] बुध्यते तदितरस्तावत्प्रतीक्षामहे
वेलामित्युदगप्रिया[7] मधुलिहः सोढुं क्षणं[8] न क्षमाः ॥ ९५ ॥
भेकेन क्वणता सरोषपरुषं यत्कृष्णसर्पानने
दातुं गेण्डचपेटमुज्झितभिया[9] हस्तः समुल्लासितः।
यच्चाधोमुखमक्षिणी विदधता[10] नागेन तत्र स्थितं
तत्सर्वं विषमन्त्रिणो भगवतः कस्यापि लीलायितम् ॥ ९६ ॥
मृत्योरास्यमिवाततं धनुरिदं[11] चाशीविषाभाः शराः
शिक्षा सापि जितार्जुनप्रभृतिका[12] सर्वत्र निम्नाकृतिः।
अन्तः क्रौर्यमहो शठस्य मधुरं हा हारि गेयं मुखे
व्याधस्यास्य यथा भविष्यति तथा मन्ये वनं निर्मृगम् ॥ ९७ ॥
ग्रावग्रस्तसमस्तचेतनमनोवैदग्ध्यमुग्धो जनः
कः स्पर्धामधिरोहति त्रिभुवने चित्रं त्वया तन्वता।
भावानां सदसद्विवेककलनाभ्यासेन जीर्णान्तरं
दूरादेव न नाम येन हृदयं वोढुं कृतो दुर्ग्रहः ॥ ९८ ॥

---

१. 'कियदपि' इति सुभा०. २. 'यदस्मादपि' इति सुभा०. ३. 'शनैः' इति सुभा०. ४. 'गते हहेत्यनुदिनम्' इति सुभा०. ५. 'मतिः' इति सुभा०. ६. 'विबुध्यते न त-दितः' इति सुभा०. ७. 'उषसि प्रिया' इति सुभा०. ८. 'त एव क्षमाः' इति सुभा०. ९. 'कर्णचपेटम्' इति सुभा०. १०. 'पिदधता' इति सुभा०. ११. 'अमी' इति सुभा०. १२. 'जितार्जुना प्रतिभयं सर्वात्मनिम्ना गतिः' इति सुभा०.

कोऽयं भ्रान्तिप्रकारस्तव पवन पदं लोकपादाहतानां
तेजस्विव्रातसेव्ये नभसि नयसि यत्पांसुपूरं प्रतिष्ठाम् ।
अस्मिन्नुत्थाप्यमाने जननयनपथोपद्रवस्तावदास्तां
केनोपायेन साध्यो वपुषि कलुषतादोष एष त्वयैव ॥ ९९ ॥

एते ते विजिगीषवो नृपगृहद्वारार्पणावेक्षणाः
क्षिप्यन्ते वरयाचनाहितधियः कोपोद्धतैर्वेत्रिभिः ।
अर्थेभ्यो विषयोपभोगविरसैर्नाकारि यैरादर-
स्ते तिष्ठन्ति मनस्विनः सुरसरित्तीरे मनोहारिणि ॥ १०० ॥

वाता वान्तु कदम्बरेणुशबला नृत्यन्तु सर्पद्विषः
सोत्साहा नवतोयपानगुरवो मुञ्चन्तु नादं घनाः ।
मग्नां कान्तवियोगदुःखदहने मां वीक्ष्य दीनाननां
विद्युत्प्रस्फुरसि त्वमप्यकरुणे स्त्रीत्वेऽपि तुल्ये सति ॥ १०१ ॥

प्राणा येन समर्पितास्तव बलाद्येन त्वमुत्थापितः
स्कन्धे येन चिरं धृतोऽसि विदधे यस्ते सपर्यामपि ।
तस्यान्तः स्मितमात्रकेण जनयञ्जीवापहारं क्षणा-
द्भ्रातः प्रत्युपकारिणां धुरि परं वेताल लीलायसे ॥ १०२ ॥

रज्ज्वा दिशः प्रविततः सलिलं विषेण
पाशैर्मही हुतभुजा ज्वलिता वनान्ताः ।
व्याधाः पदान्यनुसरन्ति गृहीतचापाः
कं देशमाश्रयतु यूथपतिर्मृगाणाम् ॥ १०३ ॥

प्रेङ्खन्मयूखनखशातशिखानिखात-
विख्यातवारणगणस्य हरेर्गुहायाम् ।

---

१. 'पवन घनावस्करस्थानजातम्' इति सुभा०. २. 'यस्मिन्' इति सुभा०. ३. 'सद्यः' इति सुभा०. अयं 'कोऽय' इत्यादिश्लोकः सुभाषितावलौ भागवतामृतदत्तनाम्ना समुद्धृतः. ४. 'शबला' इति सुभा०. ५. 'नवजलाभिभारगुरवो' इति सुभा०. ६. 'दुःखजलधौ' इति सुभा०. ७. 'विद्युत्त्वैक स्फुरसि' इति सुभा०. ८. 'गृहीतचापाः' इति सुभा०. ९. 'आश्रयति' इति सुभा०. अयं 'रज्ज्वा' इत्यादि श्लोकः सुभाषितावलौ मुक्तापीडनाम्ना समुद्धृतः. १०. 'नखपात–' इति सुभा०.

क्रोष्टा निकृष्टसरमासुतदृष्टिनष्ट-
धाष्टर्यः प्रविष्ट इति कष्टमिहाद्य दृष्टम् ॥ १०४ ॥
दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ १०५ ॥
विख्यातं विजयावहं रणभुवि व्याप्तं शुभैर्लक्षणै-
स्तं चेन्मुञ्चति कानने नरपतिस्तुङ्गं महान्तं गजम् ।
अश्वत्थाम्रकपुण्ड्रकेक्षुकदलीरास्वाद्य वंशाङ्कुरा-
न्स्वैरं तस्य मनोरमे विचरतः का नाम हानिर्वने ॥ १०६ ॥
विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं
शुकस्यासीद्बुद्धिः फलमपि भवेदस्य सदृशम् ।
इति ध्यात्वोपास्तं फलमपि च दैवात्परिणतं
विपाके तूलोऽन्तः सपदि मरुता सोऽप्यपहृतः ॥ १०७ ॥
अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ १०८ ॥

इति रत्नत्रये भल्लटशतकं समाप्तम् ।

---

## श्रीनीलकण्ठदीक्षितप्रणीतं

# सभारञ्जनशतकम् ।

षड्दर्शनीपरिज्ञानमण्डितैरिव पण्डितैः ।
स्तम्भैश्चित्रैर्वितानैश्च सभा किमवभासते ॥ १ ॥

---

१. 'निविष्टः' इति सुभा०. अयं 'प्रेङ्खन्मयूख' इत्यादिश्लोकः सुभाषितावलौ उपाध्याय[illegible]नवर्मनाम्ना समुद्धृतः. २. 'अयं वारामेको' इत्यादिश्लोकः शार्ङ्गधरपद्धतौ मालवरुद्रनाम्ना समुद्धृतः. ३. श्रीमदप्पदीक्षितसोदर्यस्याच्चा(प्पा)दीक्षितस्य पौत्रो नारायणदीक्षितपुत्रः श्रीनीलकण्ठदीक्षितोऽयं खिस्ताब्दीयसप्तदशशतकपूर्वार्धे द्रविडदेशमलंचकार जन्मना

सन्ति सर्वविधा मर्त्या न सन्त्येके विपश्चितः ।
अमूर्येणैव लोकेन किं तेन विषयेण नः ॥ २ ॥

उद्यन्तु शतमादित्या उद्यन्तु शतमिन्दवः ।
न विना विदुषां वाक्यैर्नश्यत्याभ्यन्तरं तमः ॥ ३ ॥

बहुभ्यो बहु बोद्धव्यं बहुधा बहुवामरान् ।
बहुकल्पशतस्थायि लब्धुं बहुविधं यशः ॥ ४ ॥

पाषाणाः सर्व एवैते पद्मरागेषु को गुणः ।
प्रकाशः कश्चिदस्त्यस्तेऽपरत्र स न विद्यते ॥ ५ ॥

---

यतोऽनेन नीलकण्ठविजयप्रान्ते 'अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु (४७३८)। कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥' इति स्वग्रन्थनिर्माणसमयो लिखितः. अस्मज्ज्ञाता नीलकण्ठदीक्षितकृता ग्रन्थास्त्वेते – (१) अन्यापदेशशतकम्, (२) कलिविडम्बनशतकम्, (३) [illegible] (४) नीलकण्ठविजयः (नीलकण्ठचम्पूः), (५) शान्तिविलासः, ([illegible]) [illegible], (७) सभारञ्जनम्. वर्तमानशतक एव काश्यां समुत्पन्नेन शंकर[illegible] प्रणीता गङ्गावतरणचम्पूः पूर्वोक्तगङ्गावतरणाद्भिन्ना. काव्यमालाद्वितीयगुच्छे अप्पयदीक्षितनाम्ना मुद्रितमुपदेशशतकं नीलकण्ठदीक्षितेन कृतं न त्वप्पयदीक्षितेनेति [illegible] वदन्ति. अस्मद्दृष्टपुस्तकद्वये तु 'अप्पदीक्षितकृतमुपदेशशतकम्' [illegible]. (१) [illegible]शतककर्ता शुक्लजनार्दनसूनुः कविनीलकण्ठः, (२) [illegible] रामभट्टसूनुर्नीलकण्ठभट्टः, (३) कुण्डमण्डपविधानकर्ता नील[illegible] (४) [illegible]ज्ञानशतककर्ता कविनीलकण्ठशर्मा, (५) नारायणगीताकर्ता [illegible] (६) ब्रह्ममीमांसाभाष्यकर्ता नीलकण्ठशैवाचार्यः, (७) भगवद्[illegible]रभट्टसूनुर्नीलकण्ठभट्टः, (८) भारतभावदीपस्य मन्त्ररहस्यप्रका[illegible]गोविन्दसूनुर्नीलकण्ठचतुर्धरः, (९) वर्षतन्त्रकर्ता अनन्तदैवज्ञसूनुर्नीलकण्ठः, इत्याद्या अन्येऽपि बहवो नीलकण्ठास्तत्तद्देशे काले च समभूवन्. श्रीमा[illegible]ना शंकरविजयस्य पञ्चदशे सर्गे 'तदनन्तरमागमान्तविद्यां प्रणतेभ्यः प्रतिपादय[illegible]मनम् । हरदत्तसमाह्वयोऽधिगम्य स्वगुरुं संगिरते स्म नीलकण्ठम् ॥', 'सितभूतिरञ्जिताखिलाङ्गैः स्फुटरुद्राक्षकलापकम्रकण्ठैः । परिवीतमधीतशैवशास्त्रैर्मुनिरायान्तममुं ददर्श शिष्यैः ॥', 'विजितो यतिभूभृता स शैवः सह गर्वेण विसृज्य च स्वभाष्यम् । शरणं प्रतिपेदिवान्महर्षिं हरदत्तप्रमुखैः सहात्मशिष्यैः ॥' इत्यादिना वर्णितः कश्चिन्नीलकण्ठाभिधो महाशैवः श्रीशंकराचार्यसमयेऽप्यासीत्. पूर्वोक्तो ब्रह्ममीमांसाभाष्यकर्ता नीलकण्ठशैवाचार्यः कदाचिदयमेव स्यात्.

जात्यन्धा जातिबधिरा जातिमूकाश्च ते जनाः।
सम्यगाराधिता यैर्न सन्तो विज्ञानसिन्धवः ॥ ६ ॥
अपि मानुष्यकं लब्ध्वा भवन्ति ज्ञानिनो न ये।
पशुतैव वरा तेषां प्रत्यवायाप्रवर्तनात् ॥ ७ ॥
किं परोक्षं किमध्यक्षं किं लभ्यं किं नु दुर्लभम्।
सर्वमैन्द्रियकं वस्तु सर्वं करगतं सताम् ॥ ८ ॥
स्थावरा जङ्गमा मर्त्या ब्राह्मणा मुनयः सुराः।
शिव इत्यप्यमी भेदाश्चिदुत्कर्षनिबन्धनाः ॥ ९ ॥
विद्युज्जलधरो वृष्टिश्चन्द्रार्कौ सागरा इति।
सर्वमद्भुतमज्ञानाज्जानतां तु न किंचन ॥ १० ॥
तत्र तत्र स्थितैर्ज्ञानकरणैरिव विग्रहः।
विद्वद्भिः शोभते देशस्तैर्विहीनस्त्वमङ्गलः ॥ ११ ॥
अमलीमसमच्छिद्रमक्रौर्यमतिसुन्दरम्।
अदेयमप्रतिग्राह्यमहो ज्ञानं महाधनम् ॥ १२ ॥
संदर्भशक्तिहीनानां शब्दाभ्यासो वृथा श्रमः।
मुग्धानि लब्ध्वा पुष्पाणि मुण्डितः किं करिष्यति ॥ १३ ॥
शास्त्रेषु दुर्ग्रहोऽप्यर्थः स्वदते कविसूक्तिषु।
दृश्यं करगतं रत्नं दारुणं फणिमूर्धनि ॥ १४ ॥
आञ्जस्यं व्यवहाराणामार्जवं परमं धियाम्।
स्वातन्त्र्यमपि तन्त्रेषु सूते काव्यपरिश्रमः ॥ १५ ॥
साहित्यविद्याहीनानां सर्वशास्त्रविदामपि।
समाजं परिपश्यन्ति समजं बुद्धिशालिनः ॥ १६ ॥
अशिक्षितानां काव्येषु शास्त्राभ्यासो निरर्थकः।
किमस्त्यनुपनीतस्य वाजपेयादिभिर्मखैः ॥ १७ ॥
अन्धा विद्वज्जनैर्हीना मूका कविभिरुज्झिता।
बधिरा गायनैर्हीना सभा भवति भूभृताम् ॥ १८ ॥

---

१. कमलः पशुमूकः.

साहित्यादपि शास्त्राणि विशिष्टानीति चेन्मतिः ।
ततोऽपि वेदाध्ययनं ततोऽपि शिवकीर्तनम् ॥ १९ ॥

सन्त्वश्वाः सन्तु मातङ्गाः सन्तु योधाः सहस्रशः ।
नरेन्द्राणां विशेषेण न विना कविना यशः ॥ २० ॥

काणाः कमलपत्राक्षाः कदर्याः कल्पशाखिनः ।
कातरा विक्रमादित्या. कविदृग्गोचरं गताः ॥ २१ ॥

पारवश्यं वृथा दास्यं पत्नानामकदारता ।
पाण्डवानामभूत्कीर्त्यै पाराशर्यकवेर्गिरा ॥ २२ ॥

जानाते यन्न चन्द्रार्कौ जानते यन्न योगिनः ।
जानीते यन्न भर्गोऽपि तज्जानाति कविः स्वयम् ॥ २३ ॥

सर्वासामपि विद्यानां साहित्यं हि कवेः पदम् ।
साधारण्येऽपि यत्रैव सारस्वतपदं ध्रुवम् ॥ २४ ॥

नादातव्यं न दातव्यं न कर्तव्यं च किंचन ।
सान्त्वमेकं प्रयोक्तव्यं सर्वं तस्य वशे जगत् ॥ २५ ॥

नामरूपात्मकं वि[illegible]यते [illegible] द्विधा ;
तत्राद्यस्य क[illegible]षा द्वितीयस्य चतुर्मुखः ॥ २६ ॥

ज्योति[illegible] [illegible]त्ये किं किमाज्ये किं रथन्तरे ।
[illegible] [illegible]न्ति सर्वज्ञा अपि देवताः ॥ २७ ॥

न [illegible]णि दृश्यन्ते मृदुभाषिणि ।
[illegible]लिनास्तत्र परपुष्टा निदर्शनम् ॥ २८ ॥

[illegible]हीनोऽपि मधुरः शब्दो लोकप्रियंकरः ।
वीणावेणुमृदङ्गादीन्यत्रोदाहरणानि नः ॥ २९ ॥

जिघांसन्तोऽपि पशवो रुदन्तोऽपि स्तनंधयाः ।
घ्नन्तोऽपि रिपवो युद्धे वशमायान्ति सान्त्वतः ॥ ३० ॥

दातुः प्रतिग्रहीतुश्च यौ हस्तावुत्तराधरौ ।
तयोरप्यौत्तराधर्यं ताभ्यामेवोपपाद्यते ॥ ३१ ॥

अमर्त्याः सन्तु[1] मर्त्या वा चेतनाः सन्त्वचेतनाः।
दानमेव पुरस्कृत्य स्तूयते भुवनैस्त्रिभिः॥ ३२॥
देयं द्रव्यमियत्तावद्दानोत्कर्षे न कारणम्।
किं त्ववच्छेदराहित्यं धनदाम्बुदयोरिव॥ ३३॥
ददातिराददातिश्च द्वावेतौ परमाद्भुतौ।
ययोः स्वाम्यं च दास्यं च लीलामात्रविजृम्भितम्॥ ३४॥
दोषा अपि गुणायन्ते दातारं समुपाश्रिताः।
कालिमानं किलालम्ब्य कालमेघ इति स्तुतिः॥ ३५॥
किं दातुरखिलैर्दोषैः किं लुब्धस्याखिलैर्गुणैः।
न लोभादधिको दोषो न दानादधिको गुणः॥ ३६॥
अर्थाः साधारणा एव वियुज्यन्ते स्वभावतः।
ममतां त्यजतां तेषु महदुत्पद्यते यशः॥ ३७॥
मृतोऽप्यर्थं न मोक्ष्यामि बद्ध्वा नेष्यामि मूर्धनि।
इति चेत्सुदृढो लोभः पात्रे देयमशङ्कितम्॥ ३८॥
षष्टिर्देशान्तरे लभ्या शतं दत्त्वात्र नैगमे।
पात्रे त्वेकमिहोत्सृज्य परत्रानन्तमाप्यते॥ ३९॥
को दत्ते क इवादत्ते स्वादृष्टं स्वेन भुज्यते।
धीभेदमात्रे दातृत्वे क्लिश्यन्ते कृपणाः कियत्॥ ४०॥
स्वातन्त्र्यं यदि चोरेऽपि भोक्तृत्वं यदि बन्धुषु।
निष्कर्षे तु भ्रमः स्वाम्यं तत्त्यक्त्वा लभ्यतां यशः॥ ४१॥
न धैर्येण विना लक्ष्मीर्न शौर्येण विना जयः।
न ज्ञानेन विना मोक्षो न दानेन विना यशः॥ ४२॥
स्वकीयान्भुञ्जते मत्स्याः स्वापत्यानि फणाधराः।
बलाबलव्यवस्थेयं बलिनस्त्वकुतोभयाः॥ ४३॥
गुरुं हत्वा दिवं यान्ति तृणं छित्त्वा पतन्त्यधः।
बलिनां दुर्बलानां च श्रुतयोऽपि द्विधा स्थिताः॥ ४४॥

---

1. वणिजि.

लिनो बलिनः स्त्रियन्त्यबलं तु न गृह्यते ।
दावं दीपयते चण्डो दीपं व्याहन्ति मारुतः ॥ ४५ ॥
बाधका अपि लोकानां बलिनो बिभ्यति स्वयम् ।
सर्वं बलवतः पथ्यं भिषग्भिरपि गीयते ॥ ४६ ॥
शुभमारब्धलब्धापि लक्ष्मीः शौर्यविवर्जिते ।
शोकेन दुःखमाप्नोति षण्ढे कुलवधूरिव ॥ ४७ ॥
सर्वत्र लाल्यते शूरो भीरुः सर्वत्र हन्यते ।
यन्ते केवला मेषाः पूज्यन्ते युद्धदुर्मदाः ॥ ४८ ॥
भार्यायाः सुन्दरः स्निग्धो वेश्यायाः सुन्दरो धनी ।
श्रीदेव्याः सुन्दरः शूरो भारत्याः सुन्दरः सुधीः ॥ ४९ ॥
न शौर्यं शौर्यमित्येव स्तूयते बुद्धिशालिभिः ।
किं तु नीत्या समाश्लिष्टं वाग्मित्वमिव मेधया ॥ ५० ॥
शौर्येण लोकसेव्यत्वं शौर्येण क्षितिपालता ।
शौर्येण लभ्यः स्वर्गोऽपि शौर्यं कस्य न साधनम् ॥ ५१ ॥
समरेषु नरेन्द्राणां सवनेषु द्विजन्मनाम् ।
पतिकर्मसु नारीणां शौर्यं भवति भूषणम् ॥ ५२ ॥
शौर्ये तुल्ये क[illegible] इति द्विधा ।
अन्वयव्यतिरेकाभ्यां नीतिरेवावधार्यताम् ॥ ५३ ॥
न [illegible] शौर्यं किं तु नीत्योपबृंहितम् ।
[illegible] प्रयोक्ता न स्वतः क्वचित् ॥ ५४ ॥
र्यमुपायैस्त्रिभिरन्वितम् ।
र मौर्ख्यमुपायैस्त्रिभिरुज्झितम् ॥ ५५ ॥
क्रमन्ते युद्धेषु सममेवोभये भटाः ।
जयन्तेऽभ्युपायज्ञा विजीयन्ते तदुज्झिताः ॥ ५६ ॥
शास्त्रैर्बहुधाभ्यस्तैः किं चातुर्येण किं धिया ।
शौर्येणानिवार्येण ललाटे चेन्न लिख्यते ॥ ५७ ॥

घटमानाः कुटुम्बेषु दरिद्राति विपश्चितः।
मूढेषु रमते लक्ष्मीरहो दिष्टस्य चेष्टितम् ॥ ५८ ॥
तुल्यं कर्षन्ति पृथिवीं तुल्यं शास्त्राण्यधीयते।
उन्मज्जन्ति निमज्जन्ति दिष्टस्यैकस्य चेष्टया ॥ ५९ ॥
लुभ्यन्ति वितरन्तोऽपि कुप्यन्ति सरला अपि।
मुह्यन्ति मतिमन्तोऽपि भोक्तुर्भाग्यविपर्ययात् ॥ ६० ॥
अधीयते विजानन्ति विरज्यन्ति मुहुर्मुहुः।
नात्यन्ताय निवर्तन्ते नरा वैषम्यतो विधेः ॥ ६१ ॥
दोहदैरालवालैश्च कियद्वृक्षानुपास्महे।
ते तु कालं प्रतीक्षन्ते फलपुष्पसमुद्गमे ॥ ६२ ॥
कः प्रसूते पुरोवातं कः प्रेरयति वारिदम्।
प्राप्ते तु श्रावणे मासि भवत्येकार्णवं जगत् ॥ ६३ ॥
कालः करोति कार्याणि काल एव निहन्ति च।
करोमीति विहन्मीति मूर्खो मुह्यति केवलम् ॥ ६४ ॥
अपि कालस्य यः कालः सोऽपि कालमपेक्षते।
कर्तुं जगन्ति हन्तुं वा कालस्तेन जगत्प्रभुः ॥ ६५ ॥
कालः सदागतिरपि स्थायीव परिवेष्टते।
चण्डमारुतवद्विश्वमधरोत्तरयन्क्षणात् ॥ ६६ ॥
कालश्चालयति प्रायः पण्डितान्पामरानपि।
तं चेच्चिकीर्षसि वशे तितिक्षैव महौषधम् ॥ ६७ ॥
रन्ध्रेषु प्रहरिष्यन्तः कति कामादयोऽरयः।
क्षणान्नश्यति लोकोऽयं क्षमा चेन्न नियच्छति ॥ ६८ ॥
अपकारदशायामप्युपकुर्वन्ति साधवः।
छिन्दन्तमपि वृक्षः स्वच्छायया किं न रक्षति ॥ ६९ ॥
स्रवत्येव तदा ज्ञानं स्रवत्येव तदा तपः।
छिद्रं छिद्रमनुप्राप्य न चेच्छादयति क्षमा ॥ ७० ॥

क्षमां रक्षन्ति ये यत्नात्क्षमां रक्षन्ति ते चिरम् ।
क्षमास्ते निभृता येषु क्षमास्ते सर्वकर्मसु ॥ ७१ ॥
मूर्खाः शमयितुं दुःखं संरभन्ते ततस्ततः ।
क्षमयैव निगृह्णन्ति धीराः संरम्भवर्जिताः ॥ ७२ ॥
आ कल्यादा निशीथाच्च कुक्ष्यर्थं व्याप्रियामहे ।
न च निर्वृणुमो जातु शान्तास्तु सुखमासते ॥ ७३ ॥
नायास्यन्ते शरीराणि न दैन्यमवबुध्यते ।
संभवत्यपि चानन्दः शान्तिमभ्यस्यतां सताम् ॥ ७४ ॥
प्रसीदत्यपरिस्पन्दि पयः कलुषितं यथा ।
तथाशान्तमपि स्वान्तं प्रसीदति शनैः शनैः ॥ ७५ ॥
यत्नेन महता लभ्या दासा द्वित्राः सुखाय नः ।
शान्तस्य काष्ठाद्यष्टाद्याः शतं भृत्या अवेतनाः ॥ ७६ ॥
अपि मृद्या गिरा लभ्यः सदा जागर्त्यतन्द्रितः ।
नास्ति धर्मसमो भृत्यः किंचिदुक्तस्तु धावति ॥ ७७ ॥
अर्थेनोपार्ज्यते धर्मो धर्मेणार्थ उपार्ज्यते ।
अन्योन्याश्रयणं ह्येतदुभयोत्पत्तिसाधनम् ॥ ७८ ॥
विपणिः पुण्यतीर्थानि विक्रेतारस्त्वकिंचनाः ।
तृणेनाप्यन्ततो धर्मः पर्वसु क्रीयते महान् ॥ ७९ ॥
चुलकोदकमात्रेण धान्यमुष्टिव्ययेन वा ।
मरुभूमिषु दुर्भिक्षे धर्मसस्यं महाफलम् ॥ ८० ॥
धर्मो नर्मसखः कामे गुरुस्तत्त्वोपदेशने ।
भटः संगररङ्गेषु सचिवोऽर्थसमर्जने ॥ ८१ ॥
भुवि वृक्षो दिवि च्छाया भुवि कूपो जलं दिवि ।
भुवि यद्दृश्यते विप्रैर्दिवि तद्दीयते सुरैः ॥ ८२ ॥
कदलीकन्दवद्धर्मो न रोहति बहिर्गतः ।

दुःखेनोपार्ज्यते धर्मः सुखेन तु विनाश्यते।
कृच्छ्रलब्धमिमं त्रातुं नेच्छन्ति मुनयः सुखम् ॥ ८४ ॥
संपाद्यतां वा यत्नेन यद्वा विक्रीयतामयम्।
सर्वथा भजतावाप्यो धर्मो भवति नान्यथा ॥ ८५ ॥
अर्थवन्तः प्रशस्यन्ते निन्द्यन्ते तद्विनाकृताः।
आगमेष्वपि चेदेवमद्भुतं किं शरीरिषु ॥ ८६ ॥
अर्थोऽप्यर्थेन चेत्साध्यः का वार्ता धर्मकामयोः।
अर्थः सर्वजगन्मूलमनर्थोऽर्थविपर्ययः ॥ ८७ ॥
कर्मज्ञानं च मोक्षाय कर्मण्यर्थोऽधिकारिता।
अतोऽर्थेनैव कैवल्यं न कैवल्येन लभ्यते ॥ ८८ ॥
कथमर्थं निषेधन्तु श्रुतयः स्मृतयोऽपि वा।
यासामेकं पदमपि न चलत्यर्थतां विना ॥ ८९ ॥
लक्ष्मीश इति गोविन्दो मेरुधन्वेति शंकरः।
हिरण्यगर्भ इत्येव ब्रह्मापि बहु मान्यते ॥ ९० ॥
ऊर्ध्वं गच्छन्ति यं त्यक्त्वा यं गृहीत्वा पतन्त्यधः।
तस्य गौरवमर्थस्य तावतैवानुमीयताम् ॥ ९१ ॥
गृहिणा यदि लभ्येत गृहिणी हृदयंगमा।
संसार इति को भारस्तं सारमनुपश्यतः ॥ ९२ ॥
आहत्य चिनुमः स्वर्गमपवर्गमनुक्रमात्।
अनुकूले हि दांपत्ये प्रतिकूलं न किंचन ॥ ९३ ॥
गृहिणीवृत्तिदोषेण गौतमोऽत्यन्ततापितः।
आतस्थे दुःखविध्वंसं कैवल्यं परमं मुनिः ॥ ९४ ॥
अपि यत्परमं तत्त्वमर्धेन्दुकृतशेखरम्।
तस्यापि तावानानन्दः किमस्मज्जननीं विना ॥ ९५ ॥
निन्दन्ति च प्रशंसन्ति निगमा यद्गृहाश्रमम्।
दांपत्यसाम्यवैषम्यभेदादेतद्व्यवस्थितिः ॥ ९६ ॥

वमेर्णौ लङ्। कर्मणि क्तश्च। कामयते इति। **'न कम्यमिचमाम्'** इत्यमित्त्वे णिङि वृद्धिः॥

दर्शनमेव प्रार्थयमाना विरमन्ति—

तमामयन्तं द्विषतस्तृणं गाः प्रचामयन्तं क्व निशामयेयम्।
निशम्यया मञ्जुगिरा कदा नः स यामयेद्वा यमनादिकार्ये॥ १८॥

तं क्व काले देशे वा निशामयेयं पश्येयम्। कीदृशं तम्। द्विषत आमयन्तं पीडयन्तम्। गास्तृणं प्रचामयन्तमादयन्तम्। स निशम्यया श्राव्यया मञ्जुगिरा कदा नो यमनादिकार्ये परिवेषणादिकर्मणि यामयेत् व्यापारयेत्॥—आमयन्तमिति। अमेर्णिचि शतरि मित्त्वाभावे दीर्घः। प्रचामयन्तमिति। चमेः प्राग्वत्। निशामयेयमिति। ८१८ **'शमोदर्शने'** इत्यमित्त्वे णौ लिङ्। निशम्यया। अदर्शनार्थत्वेन मित्त्वे णिचि ण्यत्। यामयेत्। ८१९ **'यमोऽपरिवेषणे'** इत्यमित्त्वे णौ लिङ्। व्यापारणात्रार्थः। यमनेति। परिवेषणार्थे णौ मित्त्वे ल्युट्॥

उक्तं गोपीविलासमुपसंहरति—

इत्याद्यवस्खादितमानसास्ता बालाः परिस्खादितधैर्यबन्धाः।
दुष्टानपस्खादयितुं प्रयाते कृष्णे विलेपुः फणिता विमोहम्॥ १९॥

कृष्णे दुष्टानपस्खादयितुं विदारयितुं प्रयाते सति। ता बाला विमोहं फणिताः प्राप्ता इत्यादि विलेपुः। कीदृश्यः। अवस्खादितं विदारितं मानसं यासां ताः। परिस्खादितो नाशितो धैर्यबन्धो यासां ताः॥—अवस्खादितेति। ८२० **'स्खदिर्** अवपरिभ्यां च' इति मित्त्वनिषेधाण्णिचि दीर्घे कर्मणि क्तः। परिस्खादितेति तद्वत्। अपस्खादयितुमिति। 'अपावपरिभ्यश्चेत्येके' इत्यपात् परस्य स्खदेरमित्त्वे णिचि तुमुन्। फणिता इति। ८२१ **फण** गतौ। कर्तरि क्तः। वृत् घटादिर्वृत्तः। ज्वरादय उदात्ता उदात्तेतः॥

प्रस्थितस्य भगवतः श्रीकृष्णस्यावस्थामाह—

कृष्णोऽपि रेजे पथि गोपबालैर्भ्राजिष्णुभिर्भ्राशितपार्श्वदेशः।
विभ्लाशितेऽक्रूररथे सरामः स्यमत्पयोदस्वनभाजि तिष्ठन्॥ २०॥

कृष्णोऽप्यक्रूररथे सरामस्तिष्ठन् पथि रेजे। भ्राजिष्णुभिः शोभनशीलैर्गोपबालैर्भ्राशितपार्श्वदेशः शोभितपार्श्वभागः। स्यमत्पयोदस्य शब्दायमानमेघस्य स्वनमिव स्वनं भजत्याश्रयति यस्तस्मिन् रथे॥—रेजे इति। ८२२ **राजृ** दीप्तौ। उदात्तः स्वरितेत्। अस्माल्लिटि 'फणां च सप्तानाम्' इत्येत्त्वाभ्यासलोपविकल्पः। ८२३ **टुभ्राजृ** ८२४ **टुभ्राशृ** ८२५ **टुभ्लाशृ** दीप्तौ। उदात्ता अनुदात्तेतः। भ्राजेः 'अलंकृञ्–' आदिना ताच्छील्ये इष्णुच्। भ्राशितभ्लाशितेति। द्वयोः कर्तरि क्तः। स्यमदिति। ८२६ **स्यमु** ८२७ **स्वन** ८२८ **ध्वन** शब्दे। क्षमान्ता उदात्ता अनुदात्तेतः। स्यमेः शता। स्वनेति 'स्वनहसोर्वा' इत्यप्। स्वनान्ताः सप्त फणादयः॥

गोपैर्ध्वनद्भिः समितैर्वृतोऽपि देवो न तस्ताम विचिन्त्य गोपीः ।
ज्वालेन तापेन चला जडाङ्गीरटालशोकट्वलितप्रतापाः ॥ २१ ॥

ध्वनद्भिः शब्दायमानैः समितैरविक्लवीभवद्भिर्गोपैर्वृतोऽपि देवो गोपीर्विचिन्त्य न तस्ताम अविक्लवीबभूव पीडित एवासीत् । ज्वालेन दीप्तेन तापेन संतापेन चलाः कम्पिताः । जडान्यसमर्थान्यङ्गानि यासां ताः । अटालेन पूर्णेन शोकेन ट्वलिता विक्लीभूताः प्रलापाः यासां ताः ॥—ध्वनद्भिरिति । ध्वनेः शता । समितैः । ८२९ षम ८३० ष्टम अवैक्लव्ये । समेः कर्तरि क्तः । तस्ताम । स्तमेर्लिट् । ज्वालेन । ८३१ ज्वल दीप्तौ । 'ज्वलितिकसन्तेभ्यः' इति णः । चलाः । ८३२ चल कम्पने । पचाद्यच् । जडेति । ८३३ जल धान्ये । धान्यमतैक्ष्ण्यम् । अच् । लडयोरभेदात् । अटालेति । ८३४ टल ८३५ ट्वल वैक्लव्ये । टलेर्णः । ट्वलेः कर्तरि क्तः ॥

स्थलीर्हली सन्नलिनीश्च तीर्त्वा पलन्हरिश्चात्मबलप्रपोलः ।
कुलीरशालह्वलिताम्बुपूरह्मलत्पतङ्गां यमुनामवाप्तौ ॥ २२ ॥

पलन् हरिर्हली चोभौ स्थलीः सन्नलिनीश्च तीर्त्वा यमुनामवाप्तौ । पलन् गच्छन् । स्थलीरकृत्रिमदेशान् । अवाप्तौ प्राप्तौ । आत्मबलेन स्वबलेन प्रपोलो महान् । कुलीराणां कर्कटकानां शालेन गमनेन ह्वलिते चलिते अम्बुपूरे जलपूरे ह्मलन्तो गच्छन्तः पतङ्गाः पक्षिणो यस्यां तां यमुनाम् ॥—स्थलीरिति । ८३६ ष्ठल स्थाने । अस्मादचि स्थलम् । स्थलशब्दात् 'जानपदकुण्डगोणस्थल–' इत्यादिना अकृत्रिमार्थे ङीपि स्थली । हलीति । ८३७ हल विलेखने । कर्षणं तत् । अचि हलं तस्मात् 'अत इनि' इतीनिः । नलिनीरिति । ८३८ णल गन्धे । बन्धन इत्येके । अस्मात् 'बहुलमन्यत्रापि' इति कठिनवदिनचि नलिनम् । तस्मादिनौ ङीप् । पलन् । ८३९ पल गतौ । शता । बलमिति । ८४० बल प्राणने धान्यावरोधने च । धान्यावरोधनं कुसूलादिव्यापारः । अस्मादचि बलम् । प्रपोल इति । ८४१ पुल महत्त्वे । ज्वलादिणः । कुलीरेति । ८४२ कुल संस्त्याने बन्धुषु च । संतान इत्येके । संस्त्यानं संघातः । अस्मात् संघाती भवतीति 'कुलेश्च भोजः' इतीरक् । शालेति । ८४३ शल [ह्वल ह्मल] ८४४ हुल ८४५ पत्ल गतौ । शलेर्घञ् । ह्वलितेति । ह्वलेः कर्तरि क्तः । ह्मलदिति । ह्मलेः शता । पतङ्गेति । 'पतेरङ्गच् पक्षिणि' इत्यङ्गच् ॥

यमुनां वर्णयति षड्भिः—

अह्नोलसत्त्वा रविरश्मिजालेऽप्यविक्लथन्ती तटपाथिपाथाः ।
तापं मथन्ती कणिका वमन्ती भ्राम्यत्तरङ्गा क्षरति स्फुटं या ॥ २३ ॥

---

१. धातुपाठे तु 'घातने' इति पाठः. २. स्थलेति धातुपाठपाठः. ३. 'ह्वलतेर्ह्मलतेश्च घटादिर्पठितस्येह पाठो णविकल्पार्थः. घटादिपाठस्त्वर्थविशेषे मित्वार्थः इति बोद्धव्यम्' इति माधवग्रन्थानुरोधेन ह्वलह्मलौ पठितौ इति बोध्यम्.

या भ्राम्यत्तरङ्गा स्फुटं क्षरति। भ्राम्यन्तश्चलन्तस्तरङ्गा यस्यां सा क्षरति प्रवहति। अहोलसत्त्वा अहोलान्यहिंसकानि सत्त्वानि जलजन्तवो यस्यां सा रविरश्मिजालेऽप्यविकत्थन्त्यपच्यमानानुष्णीभवन्तीत्यर्थः। तटपाथिपाथाः तटं पथितुं गन्तुं शीलं यस्य तादृशं पाथो यस्याः सा। तापं मथन्ती क्षोभयन्ती त्यजन्ती। कणिकाः बिन्दून् वमन्ती उद्गिरन्ती॥—अहोलेति। हुल हिंसासंवरणगतिषु इत्येके। अस्माण्णः। अविकत्थन्ती। ८४६ **कथे** निष्पाके। शतरि ङीप्। तटपाथि। ८४७ **पथे** गतौ। णिनिः। असुन्नपि। मथन्ती। ८४८ **मथे** विलोडने। शतरि ङीप्। वमन्ती। ८४९ **टुवम्** उद्गिरणे। भ्राम्यदिति। ८५० **भ्रमु** चलने। 'वा भ्राशभ्लाश–' इति श्यनि शता। क्षरति। ८५१ **क्षर** संचलने। गलनं तत्। 'क्षर संचये' इति चैके। चलने च द्रुमे। समादय उदात्ता उदात्तेतः॥

सेहे च रामाजनखेलनं या कुचोरुसीदत्परिशद्रुतोया।
क्रोशैर्जनाः कोचगलान्मरालान्बोधन्ति यत्राम्बुरुहां विकासे॥ २४॥

या रामाजनखेलनं सेहे च। खेलनं क्रीडा। भगवत्क्रीडासुखमनुभूतवती। चेति चकारस्या[पि]र्थः। कुचोरुसीदत्परिशद्रुतोया कुचोरुभिः स्तनसक्थिभिस्तदाघातेन सीदत् पीड्यमानं परिशद्रु विशरणशीलं तोयं यस्यां सा इति लीलाया असह्यत्वे हेतुः। जना यत्राम्बुरुहां पद्मानां विकासे क्रोशैः रोदनैः सख्याह्वानशब्दैर्वा मरालान् हंसान् कोचगलान् कुटिलीभवत्कण्ठान् बोधन्ति जानन्ति॥—सेहे इति। ८५२ **षह** मर्षणे। उदात्तोऽनुदात्तेत्। लिट्। रामेति। ८५३ **रमु** क्रीडायाम्। उदित्त्वमस्यानार्षम्। अनुदात्तोऽनुदात्तेत्। अस्माण्णे टाप्। सीददिति। ८५४ **षद्लृ** विशरणगत्यवसादनेषु। शतरि 'पाघ्राध्मा–' इति सीदादेशः। परिशद्रु इति। ८५५ **शद्लृ** शातने। तीक्ष्णीभावस्तत्। विशीर्णतायामित्येके। गतावप्यस्ति। 'दाधेट्सिशदसदः' इति रुः। क्रोशैः। ८५६ **क्रुश** आह्वाने रोदने च। घञ्। सदादयोऽनुदात्ता उदात्तेतः। कोचेति। ८५७ **कुच** संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। अस्माण्णः। ८५८ **बुध** अवगमने। उद्बोधज्ञाने अस्यार्थावित्ययमकर्मकः सकर्मकश्च। अस्माल्लट्। अम्बुरुहामिति। ८५९ **रुह** बीजजन्मनि। अस्मात् क्विप्। विकास इति। ८६० **कस** गतौ। विपूर्वत्वात् स्फुटनार्थता। अस्माद् घञ्॥ कुचादय उदात्ता उदात्तेतो रुहिवर्जम्॥

हिक्कद्भिर्ऋक्षैः सुखमञ्चमानैर्भृङ्गैरचद्भिर्मधु याचमानैः।
रेटत्तटा या खलु चातकैश्च चाद्यं जलं प्रोथति दातुमुर्व्याम्॥ २५॥

या खलु चातकैरपि चाद्यं प्रार्थनीयं जलं कणरूपं दातुमुर्व्यां प्रोथति पर्याप्नोति समर्था भवति। हिक्कद्भिर्जातिस्वभावप्राप्तमव्यक्तशब्दं कुर्वाणैः सुखं यथा तथाञ्चमानैस्ततस्ततः संचरद्भिश्च। एतद्वयमृक्षविशेषणम्। अचद्भिर्डयमानैः मधु पुष्परसं याचमानैरिव च। एतद्वयं भृङ्गविशेषणम्। तादृशैर्ऋक्षैर्भृङ्गैश्च रेटत्तटा शब्दायमानतीरा। अनेन यमुनायाः सर्वजन्तूनां सुखकरत्वमुपकारित्वं चोक्तम्॥—हिक्कद्भिरिति। ८६१

**हिक्क** अव्यक्ते शब्दे । शता । अञ्चमानैः । अचद्भिः । ८६२ **अञ्चु** गतौ याचने च । अचु इत्येके । अचु गताविल्यन्ये । अञ्चेः शानच् । अचेः शता । याचमानैः । ८६३ टु **याचृ** याच्ञायाम् । डु याचृ इत्येके । शानच् । रेटदिति । ८६४ **रेटृ** परिभाषणे । याचने च द्रुमे । शता । चातकैः । ८६५ **चते** ८६६ **चदे** याचने । चतेर्ण्वुल । चायम् । चदेर्ण्यत् । प्रोथति । ८६७ **प्रोथृ** पर्याप्तौ । अयं शब्दार्थोऽपि । अपपूर्वस्तु मारणे हुंकरणे वा । अस्माल्लट् ॥

यमुनाया अतिपुण्यत्वं शैत्यातिशयं चाह—

नित्यं प्रमोहामिदितोरुमेदैः प्रमेधिता सद्भिरनिद्यमानैः ।
या नेदितोर्वीपरिशर्धिवीचीविमृद्धवृक्षादिविबोध्यशैत्या ॥ २६ ॥

या सद्भिर्नित्यं प्रमेधिता संगता । प्रमोहेणामिदितोऽर्पाडित उरुमेदो मेघा येषां तैः सद्भिः । अनिद्यमानैरकुत्स्यमानैः । नेदितोर्वी नेदितां समीपभूतामुर्वी भुवं परिशर्धितुमुन्दितुं सेक्तुं शीलं यासां ताभिर्वीचीभिर्विमृद्धैरुन्दितैर्वृक्षादिभिर्विबोध्यं शैत्यं यस्याः सा॥—अमिदितेति । ८६८ **मिदृ** ८६९ **मेदृ** मेधाहिंसनयोः । मिथृ मेथृ इत्येके । मिधृ मेधृ इत्यन्ये । ८७० **मेधृ** संगमे च । मिदेः कर्मणि क्तः । अनिद्यमानैः । ८७१ **णिदृ** ८७२ **णेदृ** कुत्सासंनिकर्षयोः । निदेः कर्मणि शानच् । नेदितेति । नेदः कर्तरि क्तः । परिशर्धि, विमृद्ध इति । ८७३ **शृधु** ८७४ **मृधु** उन्दने । शर्धेर्णिनिः । मृधेः कर्तरि क्तः । विबोध्येति । ८७५ **बुधिर्** बोधने । तत्तु ज्ञानमेव । अस्माण्ण्यत् ॥

प्रबुन्ध्यवेणीजववेनमाना खातान्तिका चीवरिभिर्निपादैः ।
चाय्या व्ययद्दाशविलोकभेषभ्रेषज्झषा यासदघं स्पशन्ती ॥ २७ ॥

या अघं स्पशन्ती परिहरन्ती आसदशोभत । प्रबुन्ध्येन दर्शनीयेन वेणीजवेन प्रवाहवेगेन सह वेनमाना गच्छन्ती । चीवरिभिः पटच्चरवद्भिर्निपादैः खातान्तिका । चाय्या पूज्या । दर्शनीया वा । व्ययतां गच्छतां दाशानां विलोकेन यो भेषो भयं तेन भ्रेषन्तः संचरन्तश्चलन्तो झषा यस्यां सा ॥—प्रबुन्ध्येति । ८७६ **उबुन्दिर्** निशामने । दर्शनं तत् । ण्यत् । वेणीति । ८७७ **वेणृ** गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेनृ इत्येके । वादित्रग्रहणं वाद्यानां वादनार्थमादानम् । अस्मादौणादिके इनि 'कृदिकारादक्तिनः' इति ङीष् । वेनमाना । वेनेः शानच् । खातेति । ८७८ **खनु** अवदारणे । कर्मणि क्तः । चीवरिभिः । ८७९ **चीवृ** आदानसंवरणयोः । अनृदिदित्येके । अस्मादुणादौ 'चित्वरच्छत्वर–' इत्यादिना निपातितश्चीवरशब्दः । अत इनिः । चाय्या । ८८० **चायृ** पूजानिशामनयोः । ण्यत् । व्ययदिति । ८८१ **व्यय** गतौ । शता । वित्तत्यागे त्वस्य नित्यं तङ्डेव । दाशेति । ८८२ **दाशृ** दाने । 'दाशगोघ्नौ संप्रदाने' इत्यच् । भेषेति । ८८३ **भेषृ** भये । अगताविल्येके । घञ् । भ्रेषदिति । ८८४ **भ्रेषृ** गतौ । चलन इत्येके ।

८८५ **म्लेषृ** इत्यन्ये। श्रेषेः शता। आसदिति। ८८६ **असु** गतिदीप्त्यादानेषु। अष इत्येके। असेर्लङ्। स्पशन्ति। ८८७ **स्पश** बाधनस्पशनयोः। पशेत्येके। पषेत्यन्ये। हिंसार्थं दोषसूचनं स्पशनम्। स्पशेः शतरि ङीप्॥

लाषेण चाषांश्छषिताञ्झषित्वा प्रम्लक्ष्य भक्षन्ति यदम्बु नीचाः।
या दासते मोदममाह्यधाम्नां गूढाशयानामपि तापसानाम्॥ २८॥

नीचाश्छषितान् हिंसितांश्चाषान् वनकाकान् लाषेणेच्छया झषित्वा आदाय संवृत्य च प्रम्लक्ष्य भक्षयित्वा यदम्बु यस्या जलं भक्षन्ति पिबन्ति। या तापसानामपि मोदं दासते ददाति। अमाह्यममेयं धाम येषां तेषाम्। गूढो गुप्त आशयो येषां तेषाम्। अनेन नीचाना-मुत्तमानां च सुखकरत्वमुक्तम्॥—लाषेणेति। ८८८ **लष** कान्तौ। कान्तिरिच्छा। घञ्। चाषान्। ८८९ **चष** भक्षणे। कर्मणि घञ्। छषितान्। ८९० **छष** हिंसायाम्। कर्मणि क्तः। झषित्वा। ८९१ **झष** आदानसंवरणयोः। क्त्वा। प्रम्लक्ष्य। ८९२ **म्लक्ष** अदने। ८९३ **भ्रक्ष** इत्येके। भक्षेत्यन्ये। म्लक्षेर्ल्यप्। भक्षन्ति। भक्षेर्लट्। दासते। ८९४ **दासृ** दाने। लट्। अमाह्येति। ८९५ **माहृ** माने। ण्यत्। गूढेति। ८९६ **गुहू** संवरणे। क्तः। हिक्कादय उदात्ताः स्वरितेतः॥

यमुनायामक्रूरस्य व्यापारं वक्तुमारभते—

अजं तमत्र स्वरथे निवेश्य श्रियं भरन्तीं हरिकान्तितुल्याम्।
धृतप्रमोदो दुरितापनेत्रीं स्नातुं नदीमाप स गान्दिनेयः॥ २९॥

स्पष्टार्थः श्लोकः। अजन्तधात्वारम्भोऽत्रेति च भाति॥—श्रियमिति। ८९७ **श्रिञ्** सेवायाम्। उदात्त उभयतोभाषः। 'क्विब्वचिप्रच्छिश्रिद्रुस्रुकटप्रुजुवां दीर्घोऽसंप्रसारणं च'[1] इति कर्मणि क्विप्। दीर्घश्च। भरन्तीम्। ८९८ **भृञ्** भरणे। पूरणेऽपीति भट्टिः। शतरि ङीप्। हरीति। ८९९ **हृञ्** हरणे। प्रापणं स्वीकारः स्तेयं नाशनं वा। अस्मादौणादिक इन्। धृतेति। ९०० **धृञ्** धारणे। कर्मणि क्तः। अपनेत्रीमिति। ९०१ **णीञ्** प्रापणे। प्रापणं गमना। तृचि ङीप्। भृञादयोऽनुदात्ता उभयतोभाषाः॥

धयन्दृशाग्लानरुचिं स कृष्णं म्लानिं त्यजन्ध्यानमले जलान्ते।
निद्रायदिन्दीवरभाजि मज्जन्नघ्राणधीस्तत्र च तं ददर्श॥ ३०॥

स दृशा कृष्णं धयन् पिबन्नघ्राणधीरतृप्तधीरपि म्लानिं त्यजन्। पीडात्यागाद्धेतोः। जलान्ते मज्जन् तत्र च तत्रापि जले तं कृष्णं ददर्श। अग्लानरुचिमक्षीणशोभं ध्यानं न्यक्कृतं निरस्तं मलं यस्मिन् जलान्ते निद्रायन्ति मीलयन्ति मुकुलितानि इन्दीवराणि भज-तीति निद्रायदिन्दीवरभाक् तस्मिन्॥—धयन्निति। ९०२ **धेट्** पाने। शता। अग्लानेति।

---

१. 'स्पर्शनयोः' इति धातुपाठे. २. 'क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च' इति औणादिकपाठः.

